अधि. पृ.

११ सवनीयपशुपुरोडाशयोः पाशुकं तन्त्रम् ... ... २२४
१२ समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रोपादानम् ... २२५
१३ आग्रयणे प्रसूनबर्हिषामेव ग्रहणम् ... ... २२५
१४ द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रत्वम् ... ... २२५


## द्वादशाध्याये तृतीयः पादः ३


१ अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयः ... ... २२६
२ अनुनिर्वाप्यापुरोडाशानां पुरोडाशस्यैव तन्त्रित्वम् ... २२६
३ आघारयोरूर्ध्वत्वऋजुत्वादीनां समुच्चयः... ... २२६
४ प्रयोजनैक्ये गुणानां विकल्पः २२६
५ वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पः ... २२६
६ नैमित्तिकप्रायश्चित्तानां समुच्चयः ... ... २२७
७ कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगः ... ... २२७
८ कर्मणि मन्त्रकाण्डस्वरेणैव मन्त्रोच्चारणम् ... २२७
९ ब्राह्मणोत्पन्नमन्त्राणां ब्राह्मणस्वरेण प्रयोगः ... २२७
१० करणमन्त्राणामन्ते पदार्थानुष्ठानम् ... ... २२७
११ वसोर्धारायां मन्त्रान्ते कर्मसंनिपातः ... ... २२८



अधि. पृ.

१२ आघारेऽपि मन्त्रान्ते कर्म २२८
१३ एककार्यार्थानां मन्त्राणां विकल्पः ... ... २२८
१४ संख्यायुक्तमन्त्राणां समुच्चयः २२८
१५ उरुप्रथस्वेत्यादीनां निरपेक्षसाधनत्वावगमाद्विकल्पः ... २२८
१६ हौत्राख्यमन्त्राणां समुच्चयः २२८


## द्वादशाध्याये चतुर्थः पादः ४


१ जपस्तुत्याशीरभिधानानां समुच्चयः ... ... २२९
२ ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पः ... २२९
३ सोमक्रयसाधनानां समुच्चयः २२९
४ उपयजनादीनां प्रतिपत्तिकर्मणां समुच्चयः... ... २२९
५ आधाने संख्यावतीनां दक्षिणानां विकल्पः ... २३०
६ पशुगणे जाघनीनां विकल्पः २३०
७ उखायां काम्येन नित्याग्नेर्विकल्पः ... ... २३०
८ वैकारिकाग्नेराहवनीयत्वाभावः २३०
९ वैकारिकाग्नेराधानिकसंस्काराभावः ... ... २३०
१० नित्यस्योख्यस्याग्नेरधारणम् २३१
११ सत्रेषु औदुम्बरीसंमानादीनामेकयजमानकर्तृकत्वम् ... २३१
१२ तत्रापि गृहपतिकर्तृकत्वम् २३१
१३ तत्रैवाञ्जनादीनां सर्वकर्तृकत्वम् ... ... २३१
१४ ब्राह्मणस्यैवार्त्विज्येऽधिकारः २३१


समाप्ताऽधिकरणानुक्रमणिका ।

श्रीमत्तत्सदुपाख्यभट्टवैद्यनाथकृतः

# न्यायबिन्दुः ।



## प्रथमोऽध्यायः ।



### प्रथमः पादः ।

नत्वा जैमिनिमाचार्यं शबरस्वामिनं तथा ।
कुमारिलं च तद्रीत्या न्यायबिन्दुर्विधीयते ॥

धर्मजिज्ञासाधिकरणम् ॥ १ ॥

**अथातो धर्मजिज्ञासा ॥ १ ॥**

अध्ययनस्य स्वर्गाद्यर्थत्वात्कर्तव्यान्तराभावात्तदनन्तरमेव गुरुगृहात्समावर्तितव्यमिति प्राप्ते,—अर्थज्ञानरूपदृष्टफले संभवति अदृष्टकल्पनायोगादर्थज्ञानस्य च विचारं विनाऽसंभवोक्तं कृत्वा समावर्तनमिति सिद्धम् ॥१॥

धर्मलक्षणाधिकरणम् ॥ २ ॥

**चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥**

अत्र धर्मस्वरूपं तत्प्रमाणं च श्रुत्यर्थाभ्यामुच्यते । चोदना विधिः लक्षणं प्रमाणं यस्य तादृशोऽर्थः बलवदनिष्टाननुबन्धीष्टसाधनं यः स धर्मः । अत्र अर्थो धर्म इत्युक्ते भोजनादावतिव्याप्तिः । अतश्चोदनालक्षण

---

१ वेदाध्ययनानन्तरं यतोऽध्ययनस्यार्थज्ञानं प्रयोजनमतो धर्मविचारः कार्य इत्यर्थः । २ स्वाध्यायविधेरक्षरग्रहणमात्रपर्यवसायित्वे लोकत एवार्थप्रतीतावधीत्य स्नायादिति स्मृतेश्च तावन्मात्रमध्ययनविधेः फलमिति हृदयम् । ३ लभ्यमाने फले दृष्टे नादृष्टपरिकल्पनेति न्यायादिति भावः । न च लोकसिद्धेऽर्थे विधिर्विफलः । अधीतैरेव वेदैरवगतानि कर्माण्यनुष्ठितानि फलदानि नान्यथेति नियमार्थत्वात् । ४ न चाधीत्य स्नायादिति श्रूयमाणमध्ययनसमावर्तनयोः पौर्वापर्यं भज्येतेति वाच्यम् । व्याकरणस्मृतिबलेन तयोरेककर्तृत्वमात्रावगमनेन कालान्तरानुष्ठानेनापि तदुपपत्तेरिति तत्त्वम् । ५ चोदनागम्यत्वे सति सुखाधिकदुःखाजनकत्वं धर्मसामान्यलक्षणम् । अत्र चोदनालक्षणेत्यस्यः, चोदनैव तस्य लक्षणं, चोदना च तस्य लक्षणमेवेत्यवधारणद्वयगर्भितत्वादतल्लक्षणचैत्यवन्दनादेश्चोदनायामगमकत्वस्य च व्यावृत्तिः फलम् ।

इति । भोजनादेरिष्टसाधनत्वं तु न विधिप्रमाणकमिति तद्वारणम् । श्येनस्यापि श्रेयःसाधनत्वस्य विधिप्रमाणकत्वात्तद्वारणायार्थं इति । श्येनस्तु हिंसाजनकतया बलवदनिष्टनरकानुबन्धीति तद्वारणम् । एवंविधश्च क्रियारूपो यागहोमादिः, द्रव्यरूपा गोदोहनादिः, गुणरूपो नीचैष्ट्वादिश्चेति द्रष्टव्यम् । एवं स्वरूपे उक्ते अर्थाद्धर्मे प्रमाणं चोदनेत्युक्तं भवति । तथाहि— विधिवाची लिङादिश्चोदनेत्युच्यते । स च प्रवर्तनारूपविधिबोधकः । प्रवर्तना चेष्टसाधनंभवेत्यर्थाद्यागादेः श्रेयःसाधनत्वप्रमा भवतीत्येवंरीत्या धर्मप्रमाणत्वं बोध्यम् ।। २ ।।

प्रमाणपरीष्ट्यधिकरणम् ॥ ३ ॥

## तस्य निमित्तपरीष्टिः ।। ३ ।।

तस्य धर्मस्य निमित्तं प्रमाणं चोदना तस्य परीष्टिः परीक्षणमस्मिन्पादे क्रियत इति शेषः ।। ३ ।।

प्रत्यक्षस्य धर्मप्रमापकत्वाभावाधिकरणम् ॥ ४ ॥

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ।। ४ ।।

धर्मे प्रत्यक्षमनिमित्तमप्रमाणं तस्य विद्यमानमात्रोपलम्भकत्वात् । कुतः पुरुषस्येन्द्रियाणां सत्संप्रयोगे सद्भिरर्थैः संनिकर्षे यतो बुद्धिजन्म तस्मादित्यर्थः । तथा च यागात्स्वर्गोत्पत्तौ नेन्द्रियाणां प्रामाण्यमित्यर्थः ।। ४ ।।

शब्दस्य स्वतःप्रामाण्याधिकरणम् ॥ ५ ॥

## औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ।। ५ ।।

शब्दार्थसंबन्धस्य संकेतरूपस्य पौरुषेयत्वाच्चोदनायास्तदपेक्षत्वेनाप्रा-

१ युक्तिपूर्वकसाधकतर्कैरिति परीक्षणमित्यस्याग्रे पूरणीयम् । २ विद्यमानवस्तुपरिच्छेदकस्यैन्द्रियकस्य भविष्यद्धर्मपरिच्छेदकत्वाभावात् । अत एव भावनाबलजयोगिप्रत्यक्षविषयत्वमपि न । ३ शब्दस्य वेदघटकपदस्य तद्वाच्यार्थेन शक्तिरूपः संबन्धः स्वाभाविकस्तस्य धर्मस्य ज्ञानं ज्ञापकमुपदेशो विधिः प्रत्यक्षाद्यनुपलब्धेऽर्थेऽव्यतिरेकोऽव्यभिचारी दृश्यते अत इतरानपेक्षत्वात्स्वतःप्रामाण्यात्तत्प्रमाणमिति बादरायणस्यापि संमतमिति सूत्रार्थः ।

माण्यमिति प्राप्त उच्यते । शब्दार्थसंबन्धस्यानादित्वान्न सापेक्षत्वेनाप्रामाण्यमिति ।

अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः ।

अनुमानस्य धर्माविषयत्वं दर्शयितुं तल्लक्षणमुच्यते। ज्ञातसंबन्धस्य पुरुषस्यैकदेशदर्शनात् । एकस्य संबन्धिनो दर्शनादेकदेशान्तरे संबन्ध्यन्तरेऽसंनिकृष्टेऽर्थे बुद्धिरनुमानम् । यथा ज्ञातवह्निधूमनियतसामानाधिकरण्यस्य पुरुषस्य धूमरूपैकदेशदर्शनादसंनिकृष्टे एकदेशान्तरे वह्नौ बुद्धिरिति । एवं च धर्मसंबन्धिनो लिङ्गस्य अग्रहान्नानुमानसंभव इति भावः ॥ ५ ॥

वेदस्यार्थप्रत्यायकत्वाधिकरणम् ॥ ६ ॥

तैर्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ ६ ॥

वाक्यार्थानामनेकत्वेन तत्र संकेतासंभवादसंबद्धार्थस्य च प्रतीतेर्व्यामोहरूपत्वान्न चोदनाया धर्मप्रमाणत्वं युक्तमिति प्राप्ते—पदैः पदार्थोपस्थितौ आकाङ्क्षायोग्यतादिबलेन तदन्वयस्य प्रतीतेर्मूलभूतपदार्थवत्तया प्रमारूपत्वोपपत्तेर्युक्तं प्रामाण्यमिति सिद्धान्तः ॥ ६ ॥

वेदापौरुषेयत्वाधिकरणम् ॥ ७ ॥

वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥ ७ ॥

वेदाः पौरुषेयाः वाक्यत्वात्, भारतादिवदिति प्राप्ते—
वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥

इत्यनुमानादवध्यस्मरणसाहितात् । पुरुषाधीनत्वेऽपि अपूर्वतया न तत्कृतत्वं काठकादिसमाख्यापि तत्प्रोक्तत्वादुपपन्नेति तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम् ॥ ७ ॥

इति श्रीन्यायबिन्दौ प्रथमस्य प्रथमः पादः ॥ १ ॥

---

१ इदमुपलक्षणं सादृश्यार्थापत्त्योरपि प्रत्यक्षपूर्वकत्वात्सर्वप्रमाणानां तदप्रवृत्तावन्येषामप्यप्रवृत्तिः । २ यतः अग्निहोत्रादिषु नियतानां पदानां क्रियावाचिना सह पाठो दृश्यते अतः क्रियावाचकपदघटिताद्वाक्यार्थज्ञानं तस्य पदपदार्थज्ञानपूर्वकत्वादित्यर्थः । ३ एके नैयायिकाः काठकादिसमाख्यानां पुरुषाख्याघटितत्वाद्वेदान् सादीनाहुरित्यर्थः ।

## प्रथमाध्यायस्य द्वितीयः पादः ।

अर्थवादप्रामाण्याधिकरणम् ॥ १ ॥

### आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते॥१॥

चोदनारूपस्य विधेरेव श्रेयःसाधनत्वरूपधर्मत्वबोधकत्वात्तत्र प्रामाण्यं युक्तं, अर्थवादादेस्तु वायुर्वै क्षेपिष्ठा देवतेत्यादेर्विधितद्विषयत्र्यंशभावनाप्रतिपादकत्वाभावान्न तत्संभवः । तथाहि—यजेत जुहुयादित्यादावाख्यातसामान्यशक्त्या पुरुषप्रवृत्तिरूपा भावनोच्यते लिङादिविशेषशक्त्या च तदनुकूलव्यापाररूपा प्रवर्तना विधिरूपा । तयोरन्वये भावयेदित्यर्थो भवति । तत्र किं भावयेदित्याकाङ्क्षायां फलं स्वर्गादि, केनेत्यपेक्षायां यागादिधात्वर्थः, कथमित्याकाङ्क्षायां सोमादिद्रव्यं देवता मन्त्रप्रोक्षणादिसंस्कारप्रयाजादीनि संबध्यन्ते । तादृशी भावना हि स्वर्गादिश्रेयःसाधनं विधिविषयत्वेन च धर्मस्तद्विशेषणतया च यागादीनीति तत्प्रतिपादकानां धर्मप्रामाण्यं युक्तम् । वायुर्वै इत्याद्यर्थवादानां विधीयमानभावनाविशेषणप्रतिपादकत्वाभावादपौरुषेयत्वेऽपि न धर्मप्रमाणत्वं किंत्वध्ययनविधिवशेनादृष्टार्थत्वमिति प्राप्ते,—दृष्टे संभवति अदृष्टकल्पनायोगाद्यथासंभवं प्रयोजनवदर्थज्ञानमेवाध्ययनफलं, तच्चार्थवादेभ्यो यद्यपि यथाश्रुतेभ्यो न भवति तथापि तात्पर्यार्थलक्षणया स्तावकत्वे तत्संनिहितविध्येकवाक्यत्ववशेन संभवतीति युक्तं प्रामाण्यमिति सिद्धम् ॥ १ ॥

विधिवन्निगदाधिकरणम् ॥ २ ॥

### विधिर्वा[3] स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ २ ॥

पशुविकृतौ औदुम्बरो यूपो भवतीत्युक्त्वा 'ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै' (इति) द्वितीयाचतुर्थीभ्यां पश्वन्नयोः फलत्वोक्तेरन्योन्याकाङ्क्ष्या समभिव्याहारादौदुम्बरत्वस्य तत्साधनत्वावगमादर्थवादस्यापि विधायकत्वेन प्रामाण्यमिति प्राप्ते,—विध्यभावे साधनत्वस्य कामशब्दाद्यभावे च फलत्वस्यानवगमात्स्तुत्यैव विधिकल्पनमतो न फलपरत्वमिति ।

---

१ वेदस्य प्रवर्तकत्वात्प्रवर्तकविध्याद्यघटितभूतार्थप्रतिपादकानां प्रवृत्त्याद्यजनकत्वं यतोऽतस्तेषां धर्मप्रमितिजनकत्वं नेत्यर्थः । २ यतो वायुः शीघ्रगामी देवता अतो वायव्यः पशुरालब्धव्य इत्येवंरूपेणैकवाक्यत्ववशेनेत्यर्थः । इदमुपलक्षणम् । निषेधवाक्यैकवाक्यतयार्थवादानां निषेधांशेऽपि तात्पर्यावधारणात् । ३ उदुम्बरत्वस्य विधिरेव स्यादपूर्वत्वादर्थवादत्वे स्वार्थबोधकत्वादानर्थक्यादित्यर्थः ।

हेतुवन्निगदाधिकरणम् ॥ ३ ॥

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ ३ ॥

'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र हिशब्देन होमसाधनत्वेऽन्नकरणत्वस्य हेतुत्वस्योक्तत्वात्तद्वशेन यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्तिवचनकल्पनाद्दर्वीपिठरादीनामन्येषामपि होमसाधनत्वप्राप्तेः शूर्पेणेति पाक्षिकानुवाद इति प्राप्ते,—श्रौतहोमसाधनभावस्य शूर्पस्यानुमानिकैर्विकल्पायोगाद्वेदस्य हेत्वनपेक्षत्वात्क्रियत इति वर्तमानापदेशादर्थवादत्वमेवेति सिद्धम् ।

मन्त्राणामर्थप्रत्यायनार्थत्वाधिकरणम् ॥ ४ ॥

## तदर्थशास्त्रात् ॥ ४ ॥

'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणामदृष्टार्थोच्चारणमेव न त्वर्थप्रकाशकत्वं तथा सति व्युत्क्रमेणापि पाठापत्तेर्लिङ्गादेव तत्सिद्धौ 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादिवचनवैयर्थ्यापत्तेश्चेति प्राप्ते,—अर्थप्रकाशनस्य दृष्टत्वात्तदर्थत्वमेव । क्रमाद्युपायनियमाः परमदृष्टार्थाः । पुनर्विनियोगवचनं तु परिसंख्याद्यर्थं लिङ्गाद्धि अश्वरशनायामिव गर्दभरशनायामपि प्राप्तेस्तन्निवृत्त्यर्थम् । सा चैकत्र विधौ अन्यत्र मन्त्राकाङ्क्षामूललैङ्गिकविध्यकल्पनादार्थिकीति न श्रुतहान्यश्रुतकल्पनाप्राप्तबाधरूपत्रैदोष्यापत्तिरिति सिद्धान्तः ।

इति श्रीन्यायबिन्दौ प्रथमस्य द्वितीयः पादः ।

---

# प्रथमाध्यायस्य तृतीयः पादः ।

स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

## धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥ १ ॥

मन्वादिस्मृतीनां मूलभूतश्रुत्यभावात्सत्त्वे वा स्मृतिप्रणयनवैयर्थ्यादप्रा-

---

१ शूर्पेण जुहोतीति वाक्यं हेतुविधायकं शूर्पेण होमः कार्य इति यतस्तेनान्नं क्रियते अतः, एवं च दर्व्याद्युपलक्षकत्वेनार्थवत्ताऽन्नसाधकमात्रोपलक्षकत्वात्फलवत्ता च भवतीत्यर्थः । २ पक्षे विधानम् विकल्प इति यावत् । ३ सः पुरोडाशप्रथनादिरूपोऽर्थः यत्र शास्त्रे ' उरु प्रथस्वेति पुरोडाशं प्रथयति ' इत्यादौ विद्यते तत एव तादृशार्थबोधसंभवे मन्त्रोच्चारणं व्यर्थमित्यर्थः । ४ उपायनि-

न्त्यादिमूलत्वेनाप्रामाण्यमिति प्राप्ते,—मन्वादीनां वैदिकत्वाद्धर्मबुद्ध्याऽष्टकाद्याचरणाच्च श्रुतिमूलकत्वमेव तत्स्मृतेः । अस्माकं श्रुत्यदर्शनेऽपि तेषां तद्दर्शनसंभवात्स्मृतिप्रणयनं विना अस्मदादीनां तदर्थज्ञानासंभवात्तत्सार्थक्यमतः प्रमाणं स्मृतय इति सिद्धान्तः ॥ १ ॥

श्रुतेः प्राबल्याधिकरणम् ॥ २ ॥

## [1]विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ २ ॥

औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धा औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिरप्रमाणं, विरोधे मूलानुमानासंभवादिति भाष्यम् । वार्तिके तु स्मृतिमूलश्रुतेः कस्य चित्प्रत्यक्षसंभवात्स्मृतेरप्रामाण्याभावेऽपि प्रत्यक्षात्पूर्वं तदर्थाननुष्ठानमेवात्र सिद्धान्त इत्युक्तम् ॥ २ ॥

लोभादिदृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

## हेतु[2]दर्शनाच्च ॥ ३ ॥

यत्र तु वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णातीत्यादौ लोभमूलकत्वं दृश्यते तत्र मूलश्रुत्यकल्पनादप्रामाण्यमेवेति सिद्धान्तः ॥ ३ ॥

क्रमतः पदार्थप्राबल्याधिकरणम् ॥ ४ ॥

## शि[3]ष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् ॥ ४ ॥

आचान्तेन कर्तव्यमित्यादिस्मृतिविहिताचमनादेर्वेदं कृत्वा वेदिं करोतीति श्रौतक्रमेण बाध इति प्राप्ते,—क्रमस्य पदार्थधर्मत्वात्तदपेक्षया आचमनादेः पदार्थत्वेन प्राबल्यं प्रमाणबलापेक्षया च प्रमेयबलाबलमेव पूर्वोपस्थितत्वाद्बलवत् प्रमाणविरोधस्य प्रमेयविरोधमूलत्वेन पूर्वोपस्थिततद्विरोधेन प्रमेयबलाबलस्य पूर्वमेवालोचनादिति तेनैव निर्णय इति नाचमनादेर्बाधः

---

यमः परमदृष्टार्थ इति द्वि. पु. पाठः । ५ चोदनालक्षणलक्षितस्य धर्मस्य वेदमूलत्वादवेदमूलकाष्टकाः कर्तव्या इत्यादिपौरुषेयवाक्यमप्रमाणमित्यर्थः ।

१ प्रत्यक्षश्रुतिविरोधे स्मृतेः प्रामाण्यमनङ्गीकार्यम्, असति विरोधे तु श्रुत्यनुमानं भवति । अनुमितश्रुत्यपेक्षया प्रत्यक्षश्रुतेर्बलवत्त्वात्तदविरोधेनानुमानप्रवृत्तिरिति भावः । २ लोभादिदृष्टकारणसद्भावादप्रमाणं स्मृतिरित्यर्थः । ३ वैदिकैः सह विरोधे असत्यविरुद्धमाचमनाद्यनुष्ठेयम्, प्रयोगविधावगतसंख्यापरिमाणादेः सत्त्वान्नैवमित्यर्थः । अत्र सूत्रद्वयम् । शिष्टाकोपेऽविरुद्धमिति चेत् इत्याद्यं न शास्त्रपरिमाणत्वात् इति द्वितीयम् । भाष्यकारमतेऽधिकरणद्वयम् । वार्तिकमते वस्तुतस्त्वित्यादि तदपवादः ।

किंतु क्रमस्यैवेति सिद्धम् । वस्तुतस्तु सकलपदार्थप्राप्त्यनन्तरं प्रयोगविधिना क्रमबोधनान्न कस्यापि बाध इति वेदाविरुद्धशाक्यादिवचनप्रामाण्यमाशङ्क्य प्रमाणानां वेदो धर्ममूलं तद्विदां च स्मृतिशीले इत्यादिवचनेन पुराणन्यायमीमांसेत्यादिवचनेन च नियमात्तदतिरिक्तस्य न धर्मप्रमाणत्वमिति सूत्रार्थः ॥ ४ ॥

सदाचारप्रामाण्याधिकरणम् ॥ ४ ॥

### अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ४ ॥

वसन्तोत्सवादिसदाचारस्य स्मृतिवन्निबन्धनाभावात् महतामपि धर्मव्यतिक्रमसाहसदर्शनादप्रामाण्यमिति प्राप्ते,—धर्मबुद्ध्या क्रियमाणस्य सदाचारस्य स्मृत्यादिमूलत्वेन शिष्टाचारः प्रमाणमित्येवं सामान्यतो निबन्धनेन च स्मृतिवत्प्रामाण्यमिति सिद्धान्तः ॥ ४ ॥

शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ५ ॥

### तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ५ ॥

यवादिशब्दानां दीर्घशूकादिषु प्रसिद्धिः प्रमाणं, यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इत्यादिवाक्यशेषानुगुणत्वान्न तु कङ्ग्वादौ । एवं पीलुशब्दस्य वृक्ष एव शक्तिरार्यप्रयोगात् । म्लेच्छानां गजे प्रसिद्धिरप्रमाणं शब्दार्थतत्त्वानभियोगात्।आर्याणां तु शब्दैकगम्यधर्माविप्लुतिसिद्ध्यर्थं शब्दार्थतत्त्वाभियुक्तत्वात्पील्वादिशब्दानां वृक्षाद्यर्थवाचकत्वमेव । अथवा स्मृतिविरुद्धमातुलदुहितृविवाहाद्याचाराणां श्रुतिमूलत्वेन स्मृतितुल्यत्वात्प्रामाण्यमिति प्राप्ते स्मृतीनां शिष्टतरमन्वादिप्रणीतत्वेन प्राबल्यादाचाराणां च कामादिहेतुकत्वादप्रामाण्यमिति । यद्वा त्रिवृच्चर्वाश्ववालादौ लोके त्रैगुण्यस्थाल्यश्वकेशादिवाचकत्वं वाक्यशेषे च स्तोत्रीयानवकौदनकाशादिवाचकत्वमिति विप्रतिपत्तिः समेति प्राप्ते,—वाक्यशेषस्था, प्रसिद्धिर्बलीयसीति सिद्धान्तः । वाक्यशेषाश्च स्तोत्रीयानवकं प्रकृत्य त्रिवृत्पञ्चदशेत्यादि, आदित्यश्चरुरित्युक्त्वा अदितिमोदते इति, तथा ते वालाः काशतां प्राप्ता इति ज्ञेयाः ॥ ५ ॥

---

१ लोभादिदृष्टकारणादर्शनेऽनुष्ठितानि पदार्थान्यबाधितानि प्रत्येतव्यानि । २ सदाचारेण तन्मूलभूतस्मृतिमनुमाय स्मृत्या श्रुत्यनुमानाद्वेदमूलकत्वं सदाचाराणां निर्बाधमिति भावः । ३ श्रुत्यनुमानद्वारा तत्त्वम् । ४ व्यवहारेषु प्राबल्यदौर्बल्ययोरनुपलम्भाच्छक्तिग्रहस्तुल्य इत्यर्थः ।

म्लेच्छप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ६ ॥

चो[1]दितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ ६ ॥

पिकनेमसततामरसादिशब्दानां कोकिलार्धसच्छिद्रवर्तुलपात्रोत्पलादिषु म्लेच्छप्रसिद्धिः प्रमाणम्, आर्याणामर्थान्तरप्रसिद्ध्यभावान्निरुक्तद्वारकप्रसिद्धेः कल्प्यत्वेन दुर्बलत्वात्। वेदेऽपि तेषां श्रवणेन अपभ्रंशत्वायोगात्। तस्मात् म्लेच्छप्रसिद्ध एवार्थो ग्राह्य इति सिद्धान्तः।

कल्पसूत्राणां परतःप्रामाण्याधिकरणम् ॥ ७ ॥

प्र[2]योगशास्त्रमिति चेत् ॥ ७ ॥

कल्पसूत्राणां प्रत्यक्षवेदपाठेन शाखान्तरतुल्यतया स्वातन्त्र्येण प्रामाण्यमिति प्राप्ते,—दृढकात्यायनादिकर्तृस्मरणात्स्मृतिवद्वेदमूलत्वम्। यत्र तु न्यायमूलत्वं तत्र न्यायदुष्टत्वेऽप्रामाण्यमेव। यथा उभौ वाऽविशेषादित्यादिसर्वपुरोडाशचतुर्धाकरणे पुरोडाशत्वाविशेषादिति, तत्राग्नेयं चतुर्धा करोतीत्यनेन पुरोडाशं चतुर्धा करोतीत्यस्योपसंहाराद्दुष्टत्वमिति सिद्धान्तः ॥ ७ ॥

सामान्यश्रुतिकल्पनाधिकरणम् ॥ ८ ॥

अ[3]नुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ ८ ॥

होलाकाद्याचारा बौधायनादिस्मृतिश्च आचरित्रध्येतृन्प्रत्येव प्रमाणमिति प्राप्ते,—अध्ययनव्यवस्थाया बौधायनादिगुरुकृतत्वान्न प्रामाण्यप्रयोजकत्वम्, आचरितॄणा च प्राच्यादीनां प्राच्यत्वादिनिर्वचनस्य व्यवस्थाप्रयोजकस्यासंभवान्न तथात्वमिति सर्वसाधारणमेव प्रामाण्यमिति सिद्धान्तः ॥८॥

साधुशब्दप्रयोगनियमाधिकरणम् ॥ ९ ॥

प्र[5]योगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ ९ ॥

गवादीनां गाव्यादीनां चानादिवृद्धव्यवहारेण तुल्यमेव वाचकत्वं व्या-

१ म्लेच्छैर्व्यवहृतं तत्पदार्थत्वेन प्रत्येतव्यं बलवता प्रमाणेनाविरोधादित्यर्थः। २ कल्पसूत्रमनादीति चेदिति सूत्रार्थः। ३ अनुमितिकारणीभूताचारलिङ्गस्य प्राच्यादिदेशेषु नियतत्वादनुमिता श्रुतिः प्राच्यादिपदघटितैवानुमातव्येत्यर्थः। ४ किञ्चित्कालं प्राच्यां निवसतामपि कालान्तरे तेषामेव प्रतीच्यां निवासदर्शनान्न व्यवस्था संभवतीति भावः। ५ प्रयोगेषु नियमगवेषणायां निर्मूलत्वाद्व्याकरणस्मृतेरशास्त्रत्वाद्गोगाव्यादिषु न नियम इत्यर्थः।

करणस्य साधुत्वबोधने निर्मूलत्वेनाप्रामाण्यादन्यत्र तथाविधश्रुतिपाठासंभवात् । अत एव साधव एव प्रयोक्तव्या इति नियमस्याप्यसंभवः प्रयोगस्य दृष्टार्थत्वात्, मूलासंभवाच्च । वाचकत्वरूपसाधुत्वस्य गाव्यादिष्वपि समानत्वादिति प्राप्ते अभियुक्तस्मरणेन व्याकरणेनानादिवाचकत्वरूपसाधुत्वबोधने स्मृत्यन्तरस्य मूलत्वसंभवाद्विविक्तशब्दस्वरूपस्य प्रत्यक्षत्वान्नान्धपरंपरा । एवं च प्रयोगनियमेऽपि साधव एव प्रयोक्तव्या इत्येतस्या एव श्रुतेर्मूलत्वसंभवाद्व्याकरणप्रामाण्येन गवादीनामेव वाचकत्वं न गाव्यादीनामिति सिद्धान्तः ॥ ९ ॥

लोकवेदयोः पदार्थैक्याधिकरणम् ॥ १० ॥

[1]प्रयोगचोदनाभावाद[2]र्थैकत्वमविभागात् ॥ १० ॥

अत्र वक्ष्यमाणोपोद्घातत्वेनेदं विचार्यते । तत्र लोकवेदयोः शब्दार्थभेदः वेदशब्दानां छान्दसवर्णागमादिधर्मभेदात् अध्यायानध्यायादिधर्मभेदाच्च । [3]यूपादिशब्देषु भेदः स्पष्ट एव । तद्भेदाच्चार्थभेदः उत्ताना वै देवगवा वहन्तीति श्रुतेश्च । आश्ववालादिशब्दानामर्थान्तरस्य स्पष्टत्वाच्चेति प्राप्ते,—वर्णभेदात्पदभेदाच्छान्दसत्वादिभेदेऽपि तस्यार्थप्रतीत्युपयोगित्वाभावादर्थस्याप्यभेदः । उत्तानादिश्रुतेरर्थवादत्वात् आश्ववालादिष्वर्थभेदेऽपि न सर्वत्र भेद इति सिद्धान्तः । एवं सति शब्दानां व्यक्तावेव शक्तिः [4]अनुष्ठानोपयोगित्वात् [5]लिङ्गसंख्याकारकयोगाच्च, न तु जाताव[6]मूर्तत्वेनाताद्दशत्वात् । यदि चानन्तासु व्यक्तिषु शक्त्यसंभवोऽनन्तत्वं वा तदा जातिविशिष्टायां व्यक्तौ शक्तिरिति प्राप्ते,—जातिव्यक्त्यो[7]र्भेदवदभेदस्याप्यङ्गीकारान्नानुष्ठेय-

---

१ वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च तस्मादैन्द्रवायवः सह गृह्यते, एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति च श्रुती शब्दसाधुत्वे प्रयोगनियमे च व्याकरणस्य प्रामाण्यं प्रतिपादयतः। २ लोकवेदयोः शब्दार्थभेदे वाक्योच्चारणजन्यार्थप्रतीत्यभावप्रसङ्गोऽतः शब्दानामभेदादर्थैक्यमित्यर्थः। ३ स्वर्वादिरादिपदार्थः ।४ अनुष्ठानोपयोग्यवहननादिकार्ययोगितायाः व्यक्तावेव संभवादित्यर्थः। ५ वृक्षौ वृक्षाभ्यामित्यादौ व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितलिङ्गसंख्याकारकाणामन्वयादित्यर्थः । ६ अलिङ्गत्वादसंख्यात्वादित्यपि बोध्यम् । ७ सामान्यात्मनाऽभेदो व्यक्त्यात्मना भेदः । गोत्वात्मनाऽभेदः शाबलेयबाहुलेयाद्यात्मना भेद इति यावत् । तथाच भेदाभेदाङ्गीकार उपपन्नः । नहि जातिर्नामव्यक्तेरर्थान्तरभूतं किमपि तत्त्वं, अपि तु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुवृत्तरूपम् ।

त्वाद्यनुपपत्तिः । अतो जातिरेव शक्या । विशिष्टशक्तावपि विशेषणशक्तेराव-श्यकत्वाद्गोशब्दोच्चारणे सामान्यस्यैव बोधात् खण्डमुण्डादिविशेषाबोधाच्च । जातिव्यक्त्योर्भेद एवेति मते तु व्यक्तौ लक्षणा । अतो जातावेव शक्ति-रिति सिद्धान्तः ॥ १० ॥

इति श्रीन्यायबिन्दौ प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## प्रथमाध्यायस्य चतुर्थः पादः ।

उद्भिदादीनां यागनामताधिकरणम् ॥ १ ॥

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥**

उद्भिदा यजेतेत्यादिषु उद्भिदादिशब्देनोद्भेदनसाधनखनित्राद्युच्यत इति तद्विशिष्टयागविधिः प्रकृतज्योतिष्टोमाश्रितस्य वा द्रव्यस्य फले विधिरिति प्राप्ते,—फलोद्भेदनसाधनत्वस्य यागेऽपि सत्त्वाद्यागनामधेयत्वमेव, विशिष्ट-विधौ उद्भिद्वतेति मत्वर्थलक्षणापत्तेः । अन्यथा यागकरणिकायां भावनायां द्रव्यस्य करणत्वायोगाद्यागस्य च करणत्वेन तत्र करणत्वायोगादुद्भि-देत्यनन्वयः । ज्योतिष्टोमाश्रितस्य फले विधौ धातोरत्यन्तं पारार्थ्यं विप्र-कृष्टविधानं चेति दोषः । अतो नामत्वं, तत्फलं तु संकल्पव्यवहारादिलाघव-मिति सिद्धान्तः ॥ १ ॥

चित्रादिपदानां यागनामत्वाधिकरणम् ॥ २ ॥

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ २ ॥**

'चित्रया यजेत पशुकामः, आज्यैः स्तुवते, पृष्ठैः स्तुवते' इत्यादौ चित्रादि-शब्दानां चित्रगुणघृतत्वादिजात्यर्थत्वेन प्रसिद्धानां गुणविधित्वमेव । पशुया-गीयद्रव्यानुवादेन चित्रत्वविधिः । तथा स्तोत्रानुवादेन आज्यपृष्ठयोः स्तोत्र-

---

१ विशिष्टबुद्धौ विशेषणज्ञानस्य नान्तरीयकत्वादिति भावः । २ यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वोऽपि व्यवहारो लाक्षणिकव्यक्त्याश्रयणेनोपपाद्यः । आह च 'तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना । जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः' इति । ३ वेदस्य विधिस्तुत्यनुष्ठेयार्थप्रकाशकत्वं यस्मादुक्तं तस्मात्सर्वं वैदिकपदं विधिस्तुत्यनुष्ठेयान्यतमार्थकं स्यादित्यर्थः । ४ यत्र वाक्ये रूढिशक्त्या-नेकगुणोपदेशः प्रतिपाद्यते तत्र वाक्यभेदप्रसङ्गान्न गुणविधिरपि तु धात्वर्थेन सह नामत्वेन संबन्ध इत्यर्थः ।

देशे पञ्चदशाज्यपात्राणि, सप्तदश चावाङ्मुखीभूतानां पृष्ठानि संपाद्य स्तोत्रं कार्यमिति प्राप्ते,—चित्रत्वस्त्रीत्वयोरुभयोर्विधौ वाक्यभेदात्पशुकामसंबन्धविधौ च तत्प्रसङ्गाद्दध्यादिचित्रद्रव्यकत्वेन 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इतिप्रकृतयागनामत्वम्। तथा आज्यैः स्तुवत इत्यादौ आज्यादेः स्तोत्रकरणत्वासंभवादाज्यसंबन्धिमन्त्राणां चाप्रसिद्धेर्मन्त्रेष्वाज्यसंबन्धे तेषां च स्तोत्रसंबन्धे विधीयमाने वाक्यभेदान्न गुणविधिः। एवं च पञ्चदशान्याज्यानीति वाक्येऽपि समासाभावेन पञ्चदशत्वविशिष्टाज्यप्रतीत्यभावादुभयविधाने च वाक्यभेदादाज्यशब्देन स्तोत्रमनूद्य संख्या विधेया। तच्चाज्यशब्दस्य स्तोत्रनामत्वे एव संभवति। तस्माद्यदाजिमीयुस्तदाज्यानामाज्यत्वमिति दर्शितार्थयोगान्नामत्वमिति सिद्धान्तः॥२॥

अग्निहोत्रादिपदानां यागनामत्वाधिकरणम् ॥ ३ ॥

## तत्प्रख्यं[3] चान्यशास्त्रम् ॥ ३ ॥

'अग्निहोत्रं जुहोति, आघारमाघारयति' इत्यत्राग्निहोत्रपदेनाग्निर्देवता विधीयते, आघारमितिपदेन द्रवद्रव्यं तत्संस्कारोऽत्राघारणं विधीयते संस्कृतस्य च प्रकरणादुपांशुयाजे विनियोगः। मतुप्प्रत्यययुक्तवाक्यस्यैव कल्पनान्न मत्वर्थलक्षणा बहुव्रीहिणा तद्द्रव्यलाभान्नाग्निहोत्रपदेऽपि सेति प्राप्ते,—अग्निदेवतायाः यदग्नय इति वाक्येनाग्निर्ज्योतिरितिमन्त्रवर्णेन वा प्राप्तत्वात्तद्विधिप्रयोजनाभावेनाग्निहोत्रपदं नामैव। आघारपदमपि 'इन्द्र ऊर्ध्वोध्वर इत्याघारमाघारयति' इति मान्त्रवर्णिकदेवताकयागनामैव। तत्र चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येत्याज्यप्राप्तेरिति सिद्धान्तः ॥ ३ ॥

श्येनादिपदानां यागनामताधिकरणम् ॥ ४ ॥

## तद्व्यपदेशं[4] च ॥ ४ ॥

'श्येनेनाभिचरन्यजेत' इत्यत्र श्येनद्रव्यकयागविधिः, ज्योतिष्टोमाश्रितं श्येनद्रव्यं वा फले विधीयते दध्यादिवदर्थान्तरप्रसिद्धत्वेन नामत्वायोगादिति

---

१ 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति न्यायादिति भावः। २ वाक्यभेदप्रसङ्गात्। ३ तस्याग्न्यादिगुणस्य प्रापकमन्यच्छास्त्रं चेत्तदपि कर्मनामधेयमित्यर्थः। विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह। तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यताम्' इति वार्तिककारोक्तेः। ४ तस्य श्येनादिगुणस्य सादृश्यविशिष्टं यत्कर्म तस्य श्येनादिपदं नामधेयम्।

प्राप्ते,—'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्युपमानोपमेयभावेन स्तुतिर्विधेयस्य श्येनस्य कार्या सा चाभेदे न संभवतीत्यनेनैव सादृश्येन यागनामधेयं श्येनपदमिति सिद्धान्तः ॥ ४ ॥

वाजपेयाधिकरणम् ॥ ५ ॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ५ ॥

'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादौ मत्वर्थलक्षणां विनैव यागस्य गुणफलाभ्यामन्वयसंभवाद्गुणविधित्वमेव युक्तम्। यागस्य हि करणत्वेन फलान्वये गुणान्वयो न स्यात्, कर्मत्वेन च गुणान्वये फलान्वयो न स्यादिति स्यान्मत्वर्थलक्षणा। न चात्र करणत्वादिबोधकतृतीयादिविभक्तिरस्तीति यागस्य स्वरूपेणैवान्वयान्न दोष इति प्राप्ते,—फलस्य करणाकाङ्क्षा करणस्य च कर्माकाङ्क्षा न स्वरूपाकाङ्क्षा, स्वरूपमात्रस्य च न फलाद्याकाङ्क्षेत्यवश्यं करणत्वादिनैव यागस्यान्वयो वाच्यः। तथा च गुणत्वप्रधानत्वोद्देश्यत्वोपादानत्वविधेयत्वानुवाद्यत्वरूपविरुद्धत्रिकद्वयेन वैरूप्यमतो नामत्वमेवेति सिद्धान्तः ॥ ५ ॥

आग्नेयादिशब्दानां यागनामत्वाभावाधिकरणम् ॥ ६ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ६ ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति' इत्यत्रानेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यककर्ममात्रं विधीयते। तस्य च मन्त्रेणाग्निदेवताप्राप्तेराग्नेयपदं नामधेयमिति प्राप्ते,—भवतीत्यनेनानुष्ठेयाबोधनात् मन्त्राकाङ्क्षाया अभावान्नाग्निप्राप्तिः। अतो द्रव्यदेवतासंबन्धाद्विशिष्टयागविधानमिति न वाक्यभेद इति सिद्धान्तः ॥ ६ ॥

---

१ नामधेयत्वेन संभाविते वाजपेये वाजस्यान्नस्य पेयं द्रवद्रव्यरूपो रसो यत्रेति व्युत्पत्त्या यवागोर्गुणस्य श्रवणाद्गुणविधिः स्याच्चेदित्यर्थः। २ फलकरणयोर्यथास्वं परस्परं नित्यसाकाङ्क्षत्वादिति भावः। ३ गुणत्वप्रधानत्वमिति युक्तः पाठः। ४ विरुद्धत्रिकयोर्द्वयस्यापत्त्येत्यर्थः। अयं भावः—उद्देश्यत्वानुवाद्यत्वमुख्यत्वानां फलनिष्ठत्वादुपादेयत्वविधेयत्वगुणत्वादीनां च यागनिष्ठत्वात्फलयागयोश्च साध्यसाधनत्वात्स्वभावपर्यालोचनायां यथा फलस्योद्देश्यत्वादित्रिकं यागस्योपादेयत्वादित्रिकं तथा साध्यसाधनभावपर्यालोचनायां यागफलस्योद्देश्यत्वादित्रिकं वाजपेयद्रव्यस्योपादेयत्वादित्रिकं च स्यादिति तन्त्रेण गुणफलोभयविधाने तदापत्तिरिति दिक्। ५ कर्मदेवताद्रव्याष्टाकपालादिगुणाश्च विधीयेरन्, विधिविषयभूते यागे गुणक्रिययोर्विभागेन विधानाभावात्, चेद्यदि तेऽन्येन वाक्येन विहिता न स्युरित्यर्थः।

बर्हिरादीनां जातिवाचिताधिकरणम् ॥ ७ ॥

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ ७ ॥

बर्हिराज्यपुरोडाशशब्दानां यूपादिवच्छास्त्रस्थैः संस्कृते प्रयोगात्तद्वाचित्वे प्राप्ते,—अन्वयव्यतिरेकाभ्यां जातिवाचितैव अविरोधादिति सिद्धान्तः ॥ ७ ॥

प्रोक्षण्यादीनां यौगिकताधिकरणम् ॥ ८ ॥

प्रोक्षणीष्वर्थसंयोगात् ॥ ८ ॥

प्रोक्षणीशब्दस्य पूर्ववदेव जातिवाचित्वं न तु यौगिकत्वं रूढ्यां तद्बाधादिति प्राप्ते,—रूढौ मानाभावाद्योगेनैवार्थप्रतीतिसिद्धेर्यौगिकत्वमेवेति सिद्धान्तः ॥ ८ ॥

निर्मन्थ्यशब्दस्य यौगिकताधिकरणम् ॥ ९ ॥

तथा निर्मन्थ्ये ॥ ९ ॥

निर्मन्थ्येनेष्टकाः पचन्तीति निर्मन्थ्यशब्दो न यौगिकः निर्मथनजन्यत्वस्य पाकसाधनेऽग्नावभावादिति शङ्कायां मन्थनजन्यत्वाभावेऽपि परम्परया प्रयोज्यत्वसंभवाद्यौगिकत्वमिति सिद्धान्तः ॥ ९ ॥

वैश्वदेवादिपदानां यागनामताधिकरणम् ॥ १० ॥

वैश्वदेवे विकल्प इति चेत् ॥ १० ॥

चातुर्मास्येषु प्रथमे पर्वणि आग्नेयमष्टाकपालं निर्वपतीत्यादयोऽष्टौ यागा विहितास्तदनन्तरं वैश्वदेवेन यजेतेति श्रुतं तत्र वैश्वदेवशब्देन प्रकृतयागेषु देवताविधिः अगत्याऽग्न्यादिभिर्विकल्पः अन्यथा वाक्यवैयर्थ्यादिति प्राप्ते,—समुदायानुवादोऽयं प्राचीनप्रवणे वैश्वदेवेन यजेतेति देशसंबन्धार्थः । अन्यथा वैश्वदेवीमामिक्षामिति यागस्यैव स स्यात् । तन्मात्रानुवादत्वं चानर्थक्यान्न भवति वैश्वदेवशब्दश्च छत्रिन्यायेन गौणः । अथवा

---

१ संस्काररहितेऽपि बर्हिराज्यादिशब्दप्रयोगाज्जातिवचनो बर्हिरादिः स्यादित्यर्थः । २ प्रोक्षणसाधनीभूतजलेषु प्रकर्षेणोक्षन्ते याभिरिति व्युत्पत्त्या यौगिकत्वमेव न रूढिरित्यर्थः । ३ प्रोक्षणीशब्दवन्निर्मथनाज्जातो निर्मन्थ्य इति व्युत्पत्त्या यौगिक एव निर्मन्थ्य इत्यर्थः । ४ वैश्वदेवशब्दे आग्नेयवाक्यविहितद्रव्येण देवतया वा विकल्पो द्रव्यदेवतारूपान्यतरगुणविधायकत्वादित्यर्थः । ५ छत्र्यच्छत्रिसमुदाये छत्रिणो यान्तीति तच्छरीरम् ।

यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति वाक्याद्यौगिक इति सिद्धान्तः ॥ १० ॥

द्वादशकपालेऽष्टाकपालादीनामर्थवादताधिकरणम् ॥ ११ ॥

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ ११ ॥

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्युपक्रम्य यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीत्यादिद्वादशकपालान्तानि वाक्यानि श्रुतानि। तत्राष्टाकपालादिशब्दा नामधेयं द्वादशस्वष्टत्वसंबन्धात्। अथवा विधायकाः द्वादशकपालेनाष्टाकपालादीनां विकल्प इति प्राप्ते,—उत्पत्तिशिष्टद्वादशकपालावरोधान्न विधिः सामानाधिकरण्याभावाच्च न नामत्वं वैश्वानर इत्यारभ्य यस्मिन् जात इत्युसंहारादेकार्थत्वावगमेन च गुणफलसंबन्धविधिः। अतोऽर्थवादत्वमेव। एकदेशस्तुत्या द्वादशकपालस्तुतिरिति सिद्धान्तः ॥ ११ ॥

यजमानशब्दस्य प्रस्तरस्तुत्यर्थताधिकरणम् ॥ १२ ॥

तत्सिद्धिः ॥ १२ ॥

यजमानः प्रस्तर इत्यादौ नामत्वासंभवात्प्रस्तरकार्ये स्रुग्धारणादौ यजमानविधिरिति प्राप्ते,—यजमानस्य स्वपदार्थविरोधान्न तत्र विधिः किं तु यजमानकार्यकारित्वाद्गौण्या प्रस्तरस्तुतिरिति सिद्धान्तः ॥ १२ ॥

अग्न्यादिपदानां ब्राह्मणादिस्तुत्यर्थताधिकरणम् ॥ १३ ॥

जातिः ॥ १३ ॥

अग्निर्वै ब्राह्मण इत्यत्रैकेश्वरमुखजन्यत्वेन ब्राह्मणस्तुतिः ॥ १३ ॥

आदित्यादिपदानां यूपस्तुत्यर्थताधिकरणम् ॥ १४ ॥

सारूप्यात् ॥ १४ ॥

आदित्यो यूप इत्यत्र चाकचक्येन सारूप्येन गौणी ॥ १४ ॥

---

१ वाक्यशेषादर्थवादादिति यावत्। २ आग्नेयमष्टाकपालमित्याद्युत्पत्तिवाक्यसिद्धाग्न्यादिगुणसद्भावाद्वैश्वदेववाक्ये न गुणविधानसामर्थ्यं, समाम्नाये अर्थादष्टाकपालादिवाक्ये तु गुणविधानसामर्थ्यमस्तीत्यर्थः। ३ उत्पत्तौ कर्मोत्पत्तिवाक्ये शिष्ट उपदिष्ट इति यावत्। उत्पत्तिशिष्टश्चासौ द्वादशकपालश्चेति विग्रहः। ४ तस्य यजमानकार्यस्य प्रस्तरेण सिद्धेर्यजमानः प्रस्तर इत्यत्र यजमानशब्देन प्रस्तरः स्तूयत इत्यर्थः। ५ एकजातीयत्वं गौणीवृत्तिप्रयोजकमित्यर्थः। ६ सारूप्यं गौण्यां वृत्तौ प्रयोजकमित्यर्थः।

अपश्वादिपदानां गवादिस्तुत्यर्थताधिकरणम् ॥ १५ ॥

## [1]प्रशंसा ॥ १५ ॥

अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा इत्यत्रापशुशब्देन गवाश्वगतप्राशस्त्याभावसाम्यादजादिषु गौणी ॥ १५ ॥

बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥ १६ ॥

## [2]भूमा ॥ १६ ॥

सृष्टीरुपदधातीत्यत्र सृष्ट्यसृष्टिमन्त्रसमुदाये सृष्टिबाहुल्याद्गौणी वृत्तिः। यथासृष्टमेवावरुन्ध इत्यर्थवादार्थं मन्त्रांशेऽनुवादः उपधानमात्रविधिरिति भाष्याभिप्रायः । मन्त्रस्यैवार्थप्राप्ते उपधाने,—विधिः तत्फलं मध्यमचितिसंबन्धः यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यादिति वचनादिति केचित् ॥ १६ ॥

प्राणभृत्यादीनां स्तुत्यर्थताधिकरणम् ॥ १७ ॥

## [3]लिङ्गसमवायात् ॥ १७ ॥

प्राणभृत उपदधातीत्यत्र प्राणभृत्पदवतामल्पत्वाल्लिङ्गसमवायमात्रेण गौणी छत्रिन्यायेनेति सिद्धान्तः ॥ १७ ॥

वाक्यशेषेण संदिग्धार्थनिर्णयाधिकरणम् ॥ १८ ॥

## [4]संदिग्धेषु वाक्यशेषात् ॥ १८ ॥

अक्ताः शर्करा उपदधाति तेजो वै घृतमित्यत्र येन केनचिद्घृततैलादिना अञ्जनं कार्यम्, वाक्यशेषस्थघृतशब्दस्य तु स्तावकत्वादुपलक्षणत्वमात्रमिति प्राप्ते,—विध्यपेक्षितविशेषस्यार्थवादेन नियमनं युक्तमतो घृतेनैवाञ्जनमिति सिद्धान्तः ॥ १८ ॥

अव्यवस्थितेषु सामर्थ्याद्व्यवस्थाधिकरणम् ॥ १९ ॥

## [5]अर्थाद्वा कल्पनैकदेशत्वात् ॥ १९ ॥

स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यतीत्यवदानहेतुत्वेन स्रुवादीनां श्रवणात्सर्वत्रावदाने तेषामव्यवस्थयाऽनुष्ठानमिति प्राप्ते,—सामर्थ्या-

---

१ प्रशंसया गौणी वृत्तिरिति सूत्रार्थः । २ बाहुल्यं गौण्यां वृत्तौ निमित्तमित्यर्थः । ३ लिङ्गस्य समवात्संबन्धादतल्लिङ्गकेऽपि तच्छब्दप्रयोग इत्यर्थः । ४ संदिग्धेषु संदेहजनकेष्वर्थेषु अर्थवादान्निर्णय इत्यर्थः । ५ अर्थाद्वस्तुशक्त्या विधेयार्थनिश्चयः कल्पनायाः आज्यं स्रुवेणेत्यादि सामर्थ्यानुसारेणकल्पितपदानां वेदैकदेशत्वात् ।

नुसारेण द्रवद्रव्यावदाने स्रुवः पुरोडाशाद्यवदाने हस्तः मांसावदाने स्वधितिः शस्त्रविशेष इति व्यवस्थैवेति सिद्धान्तः ॥ १९ ॥

इति श्रीन्यायबिन्दौ प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## द्वितीयाध्यायस्य प्रथमः पादः ।

अपूर्वस्याख्यातपदप्रतिपाद्यत्वाधिकरणम् ॥ १ ॥

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥**

अत्र प्रथमं नामधात्वर्थानां सर्वेषामविशेषात् फलभावनाकरणत्वमिति पूर्वपक्षं कृत्वा अनेकादृष्टकल्पनागौरवादेकस्यैव कस्यचित्फलभावनाकरणत्वमितरेषां तदर्थत्वमिति सिद्धान्त उत्सूत्रः । तदनन्तरं धात्वर्थस्यैव संनिकर्षात्फलभावनाकरणत्वमिति सिद्धान्तः सूत्रेणोच्यते । ननु फलव्यापारयोर्धातुवाच्यत्वात्तयोः परस्परान्वयेन फलानुकूलव्यापाररूपभावनालाभान्न धात्वर्थातिरिक्ता भावनेति कथं तस्यां धात्वर्थः करणमिति चेन्न पचतीत्यस्य पाके यतते पाकं करोतीत्यादिविवरणेन यत्नस्य धात्वर्थान्तर्भावानुपपत्तौ प्रत्ययार्थत्वाङ्गीकारस्यावश्यकत्वात् न च घञन्तेन फलमात्रबोधनाद्यत्नस्य पृथग्विवरणोपपत्तिः घञो व्यापारबोधप्रतिबन्धकत्वकल्पनायां गौरवात् अतो धात्वर्थातिरिक्ता तिबादिवाच्या भावना नाम । सा च णिजन्तेन भवतिना विवरणात्तस्य च करोतिपर्यायत्वात्तस्य च व्यापारमात्रार्थकत्वाद्व्यापारसामान्यरूपेति प्राञ्चः । कृताकृतविभागादिना करो-

---

१ भावार्थाः भावनारूपाख्यातार्थपरिच्छेदप्रयोजनाः कर्मशब्दा धात्वर्थास्तेभ्योऽपूर्वं प्रतीयेत निश्चीयेत यत एष एवार्थ एकपदश्रुत्या विधीयत इत्यर्थः । २ सर्वे सेवका राजानमनुवर्तन्त इति न्यायेनाहमहमिकया सर्वेषां भावनान्वयस्याभीष्टत्वादिति भावः । ३ धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते, तथापि सर्वसामान्यरूपेणान्यावगम्यते इत्युक्त्वा, सत्यं न धात्वर्थातिरेकिणी भावना धात्वर्थानामेव तु द्वे रूपे पाको यागः प्रयत्नः संकल्पश्चलनं क्लेदनमभिधानं छेदनमिति । प्रातिस्विकं धात्वभिधेयमेकमक्रियात्मकं सिद्धस्वभावमपरं तु सर्वधात्वर्थानुयायि करोतिप्रत्ययवेद्यं क्रियात्मकं साध्यस्वभावमन्योत्पादानुकूलात्मकमाख्याताभिधेयम् । तथा हि यः स्पन्दते यो यजते प्रयतते चलत्यभिदधाति ते सर्वे करोतिप्रत्ययमनुभवन्ति भिन्नेष्वपि धात्वर्थेषु । तच्च रूपमुत्पाद्यवस्त्वन्तरकर्मकमेव सदा प्रतीयते । तदेव च भवितुः प्रयोजकव्यापारो भावनेत्युच्यत इति शास्त्रदीपिका ।

तेर्यत्नार्थकत्वात्कृतिरूपेति नव्याः । सैव च क्रियेत्युच्यते । धात्वर्थस्तु तत्र कर्म करणं वा । तत्र प्राप्तौ सत्यां कर्म दध्ना जुहोतीत्यादौ, विधेयत्वे तु करणं ज्योतिष्टोमेन यजेतेत्यादाविति संक्षेपः ॥ १ ॥

अपूर्वसद्भावाधिकरणम् ॥ २ ॥

## चोदना पुनरारम्भः ॥ २ ॥

अत्र विनष्टात्कर्मणः कालान्तरभाविस्वर्गादिफलार्थं द्वारभूतमदृष्टं न कल्पनीयं प्रमाणाभावात् । वचनवशेनैव कालान्तरभाविफलोपपत्तेरिति पूर्वपक्षे,—वचनस्यापि बाधितार्थबोधकत्वसंभवादवश्यं द्वारभूतमपूर्वं कल्पनीयमिति सिद्धान्तः ॥ २ ॥

कर्मणां गुणप्रधानभावनिरूपणाधिकरणम् ॥ ३ ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ ३ ॥

व्रीहीनवहन्तीत्यादाववघातोऽदृष्टार्थः प्रधानं तदर्था व्रीहय इति प्राप्ते,—व्रीहिगततुषविमोकादिदृष्टफलकत्वादवघातादयस्तदर्था एव नादृष्टार्थाः । नियमादृष्टमात्रं तूभयवादिसिद्धमिति सिद्धान्तः ॥ ३ ॥

संमार्जनादीनामप्राधान्याधिकरणम् ॥ ४ ॥

## धर्ममात्रे च कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ४ ॥

दृष्टोपकारिष्वेव गुणकर्मत्वमदृष्टोपकारिषु तु स्रुचः संमार्ष्टीत्यादिषु प्रधानकर्मत्वमिति शङ्का निराक्रियते,—द्रव्यादिसंस्कारकत्वं गुणकर्मत्वं तच्च

---

१ प्रयत्नस्य भावनात्वे रथो गच्छतीत्यत्र दोषवारणं न भवतीत्यरुचिश्चिन्त्या । २ तस्मिंश्च क्रियारूपे प्रकृत्युपात्तो यागादिः कदाचित्कर्मत्वेन संबध्यते पाकं करोति यागं करोतीति, कदाचित्करणत्वेन यागेन स्वर्गं करोति पाकेनौदनमिति यथाविवक्षितमिति शास्त्रदीपिका । ३ पुनःशब्दो हेतौ, यत आरम्भः कर्म फलसाधनमिति शास्त्रारम्भः अतोऽस्त्यपूर्वमित्यर्थः । ४ अयं भावः—स्वर्गयागयोः साध्यसाधनत्वाद्यागादेव स्वर्गसिद्धेरपूर्वकल्पनेऽपि क्षणिकत्वस्य तत्र तदकल्पनायामिव सत्त्वाच्छक्त्यवान्तरव्यापारत्वेऽपि शक्तिमति व्यापारवति चातिते शक्तिव्यापारयोरवस्थानायोगात्तद्दोषतादवस्थ्यान्नापूर्वकल्पनायां प्रमाणमिति । ५ वृद्धमातुरं वा प्रति परिहासार्थं प्रयुक्तस्य नद्यास्तीरे फलानीत्यादेरिति भावः । ६ विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः, क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमदित्यादिना तत्कल्पनायाः शास्त्रसंमतत्वात् । ७ द्रव्यं प्रति गुणभूतानि प्रधानभूतानि चेत्येवं द्विविधान्याख्यातानीत्यर्थः । ८ धर्ममात्रे दृष्टप्रयोजनरहिते सर्वस्मिन् कर्मणि प्रधानात्मकत्वं स्यात्कर्मणां द्रव्यं प्रत्युपकारस्यादृष्टत्वात्प्रयाजवदित्यर्थः ।

संमार्गादिष्वप्यस्तीति गुणकर्मत्वमेव तदभावे तु प्रधानकर्मत्वं यथा प्रयाजादेरिति सिद्धान्तः ॥ ४ ॥

स्तोत्रादीनां प्राधान्याधिकरणम् ॥ ५ ॥

[1]स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ ५ ॥

सामसाध्यं गुणगुणिसंवन्धाभिधानं स्तोत्रं, केवलमन्त्रसाध्यं तच्छस्त्रं, तयोर्गुणविशिष्टदेवताप्रकाशकत्वात्संस्कारकर्मत्वमिति प्राप्ते सिद्धान्तः,—गुणिदेवतापरत्वे यो वक्रकेशान्तः स देवदत्त इतिवत्स्तुत्यप्रतीतेः प्राधान्येन गुणसंवन्धप्रकाशनार्थत्वे च देवदत्तस्य वक्राः केशान्ता इतिवत्स्तुतिप्रती तेस्तदनुरोधेन गुणप्राधान्यमेव स्तोत्रशस्त्रयोः, अतो दृष्टप्रयोजनाभावाददृष्टार्थत्वं प्रधानकर्मत्वं चेति ॥ ५ ॥

मन्त्राधिकरणम् ॥ ६ ॥

[2]विधिमन्त्रयोरैकार्थ्यमैकशब्दात् ॥ ६ ॥

देवाश्च याभिर्यजते ददाति चेति मन्त्रगतमाख्यातमपि विधायकमेवेत्याशङ्कायां,—यच्छब्दादियोगाद्विधिशक्तिविघातेन स्मारकत्वमात्रेण तेषामुपयोगे न विधायकत्वमिति सिद्धान्तः ॥ ६ ॥

मन्त्रलक्षणाधिकरणम् ॥ ७ ॥

[3]तच्चोदकेषु मन्त्राख्या ॥ ७ ॥

प्रसङ्गान्मन्त्रलक्षणं क्रियते तेषां प्रयोगसमवेतानां पदार्थानां चोदकेषु प्रकाशकेष्वित्यर्थः । मन्त्राख्या मन्त्रसंज्ञा ॥ ७ ॥

ब्राह्मणलक्षणाधिकरणम् ॥ ८ ॥

शेषे ब्राह्मणशब्दः ॥ ८ ॥

मन्त्रेभ्योऽवशिष्टे वेदभागे ब्राह्मणमितिशब्दः ॥ ८ ॥

---

१ स्तोत्रशस्त्रयोः फलं देवतायाः स्मरणेन संस्कारो देवताप्रकाशकत्वाद्याज्यावदित्यर्थः । २ वाक्यघटकाख्यातयोरित्यनुषङ्गस्तथा च विधिमन्त्रवाक्यघटकाख्यातयोर्विधिरूपैकार्थप्रतिपादकत्वमेकजातीयशब्दादित्यर्थः । ३ कर्मसमवेतार्थस्मरणफलेषु वेदभागेषु मन्त्रत्वमित्यर्थः । वसन्ताय कपिञ्जलानालभेतेत्यादावव्याप्तेः प्रायिकमिदम् । एवमुत्तमामन्त्रणास्यन्तत्वान्तादिविशिष्टत्वमपि परस्परविरोधादलक्षणम् । तस्माद्याज्ञिकप्रसिद्धिविषयत्वमदुष्टं लक्षणम् । तत्त्वं च व्यावृत्तिव्यवहारान्यतरप्रयोजकत्वम् । तदुक्तं 'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः, लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः' इति ।

ऊहादीनाममन्त्रत्वाधिकरणम् ॥ ९ ॥

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ९ ॥**

ऊहप्रवरनामधेयेषु वेदे अनाम्नातेषु मन्त्रत्वं नास्ति किं तु वेदाम्नातेष्वेव वैदिकप्रसिद्ध्या मन्त्रत्वम् ॥ ९ ॥

ऋग्लक्षणाधिकरणम् ॥ १० ॥

**तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ १० ॥**

तेषां मन्त्राणां मध्ये अर्थवशेन पादव्यवस्था यत्र सा ऋगित्युच्यते॥१०॥

सामलक्षणाधिकरणम् ॥ ११ ॥

**गीतिषु सामाख्या ॥ ११ ॥**

गानयुक्तेषु मन्त्रेषु सामाख्या ॥ ११ ॥

यजुर्लक्षणाधिकरणम् ॥ १२ ॥

**शेषे यजुःशब्दः ॥ १२ ॥**

ऋक्सामभिन्ने मन्त्रे यजुःशब्दः ॥ १२ ॥

निगदानां यजुःष्वन्तर्भावाधिकरणम् ॥ १३ ॥

**निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ १३ ॥**

निगदाख्यश्चतुर्थोऽपि भेदः स्यादिति शङ्का निराक्रियते नितरामुच्चैर्गद्यन्ते पठ्यन्ते इति निगदाः परसंबोधनात्मकयजुर्भागा एव न तु भिन्ना इति सिद्धान्तः ॥ १३ ॥

एकवाक्यत्वलक्षणाधिकरणम् ॥ १४ ॥

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ १४ ॥**

कियदेकं यजुरित्याकाङ्क्षायामुच्यते विच्छिद्य पाठे साकाङ्क्षत्वे सत्यर्थैकत्वं यावति स्यात्तावदेकं यजुर्वाक्यमिति । अर्थैकत्वमात्रोक्तौ भगो वां विभजतु पूषा वां विभजत्वित्यत्रापि विभागरूपार्थैक्यादेकवाक्यता स्यादतः साकाङ्क्षं चेदित्यादि । विभागे साकाङ्क्षत्वं स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां

१ यजुर्भिन्नस्योच्चैष्ट्वरूपधर्मस्य तेषु सत्त्वादिति शेषः । २ निगदानां जात्यन्तरत्वे अहे बुध्नियमन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचः सामानि यजूंषीत्यत्र श्रूयमाणं त्रित्वमसङ्गतं स्यादिति भावः । ३ मन्त्रार्थस्तु हे पुरोडाश तव समीचीनं सदनं करोमि तच्च घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि, हे व्रीहिणां सारभूत तस्मिन्नमृते सुमना सन् उपविशेति ।

मेध सुमनस्यमान इत्यत्राप्यस्ति, तच्छब्दस्य पूर्वसाकाङ्क्षत्वादतस्तद्वारणायार्थैकत्वादिति तत्र तु सदनसादनरूपार्थभेद इति नातिव्याप्तिः ॥ १४ ॥

वाक्यभेदाधिकरणम् ॥ १५ ॥

## समेषु[1] वाक्यभेदः स्यात् ॥ १५ ॥

इषे त्वा ऊर्जे त्वेति वाक्यभेदः उतैकमेव वाक्यमिति चिन्त्यते । तत्र एतेषां दृष्टार्थत्वाभावात् अदृष्टस्य च लाघवादेकस्यैव कल्पनादेकप्रयोजनत्वेन एकवाक्यतैव कथंचिद्विशिष्टार्थप्रकाशकत्वेन स्वीकार्या, एवं च यत्र इषेत्वेति छिनत्तीति प्रतीकग्रहणं तत्रापि सकलस्यैव विनियोग इति पूर्वपक्षः । सिद्धान्तस्तु इषेत्वेतीतिकरणश्रुत्या छेदने विनियोगाच्छिनद्मीत्यध्याहारेण भिन्नवाक्येनैव ऊर्जेत्वेत्यनुमार्ष्टीति विनियोगान्तरान्न प्रतीकग्रहणेन सकलोपलक्षणं तेन परस्परनिराकाङ्क्षत्वादर्थभेदाच्च भेद एवेति । यत्राप्यायुर्यज्ञेन कल्पतामित्यादौ क्लृप्तिरूपार्थैकत्वं तत्रापि निराकाङ्क्षत्वात् क्लृप्तीर्वाचयतीति वहुत्वविधानादायुरादिविशिष्टक्लृप्तिभेदान्नार्थैकत्वमिति भिन्नवाक्यतैवेति ॥ १५ ॥

अनुषङ्गाधिकरणम् ॥ १६ ॥

## अनुषङ्गो[2] वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ १६ ॥

याते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्यनन्तरं या ते अग्ने रजाशया या ते अग्ने हराशयेति मन्त्रद्वयम् । अत्र पूर्वमन्त्रशेषस्य तनूर्वर्षिष्ठेत्यादेरनुषङ्गो भवति न वेति चिन्तायामन्यत्र पठितस्यान्यत्र नयनासंभवान्नानुषङ्गः, किं तु लौकिकस्याध्याहार इति प्राप्ते,—वैदिकस्यैव शेषस्य आकाङ्क्षायोग्यतासंनिधिवशात्सर्वार्थत्वम्, न च व्यवधानं द्वितीयमन्त्रे तदभावात् । तृतीयेऽपि तद्वशादेव बुद्धिसंनिधानात् । अतोऽनुषङ्ग इति सिद्धान्तः ॥ १६ ॥

अननुषङ्गाधिकरणम् ॥ १७ ॥

## व्यवायान्नानुषज्यते[3] ॥ १७ ॥

यत्रापि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्विति मन्त्रत्रयानन्तरं अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभि-

१ परस्परनिरपेक्षेषु पदेषु तु वाक्यभेद इत्यर्थः । २ सर्वेषु साकाङ्क्षवाक्येष्वाकाङ्क्षाशामकासन्निहितवाक्यानुषङ्गः कार्य आकाङ्क्षापरिपूरकत्वादित्यर्थः । ३ व्यवधानान्नानुषङ्ग इत्यर्थः ।

रिति शेषःश्रूयते सोऽपि पूर्वयोरनुषज्यते सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्यत्र गच्छतामित्यस्य संयजत्रैरित्यत्र बहुवचनान्तेनानन्वयाद्बुद्धिविच्छेदे सति तृतीयमन्त्रे न संबन्धः किं त्वध्याहार एवेति पूर्वापवादः ॥ १७ ॥

इति श्रीन्यायबिन्दौ द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

## द्वितीयाध्यायस्य द्वितीयः पादः ।

अङ्गापूर्वभेदाधिकरणम् ॥ १ ॥

### [१]शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

यजति ददाति जुहोतीत्यत्र वाक्यत्रये यागदानहोमावच्छिन्ना एकैव भावना तज्जन्यमपूर्वं चेति प्राप्ते,—समस्तधातुभ्यः प्रत्ययोत्पत्तेरभावाद्धातुभेदेन प्रत्ययोच्चारणे च तत्तद्धात्वर्थावच्छिन्नभावनाभेद एव प्रतीयते भावनाभेदे च तदपूर्वभेद इति सिद्धान्तः ॥ १ ॥

समिदाद्यपूर्वभेदाधिकरणम् ॥ २ ॥

### [२]एकस्यैव पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

समिधो यजतीत्यादिपञ्चवाक्येषु पञ्चवारं यजतिश्रवणेऽपि यागभावनयोरभेद एव शब्दैक्येनार्थभेदाप्रतीतेरिति प्राप्ते,—अनन्यपरपुनःश्रवणरूपाभ्यासस्य कर्मविधिं विना आनर्थक्याद्विधिभेदात्कर्मभेद एवेति सिद्धान्तः ॥ २ ॥

विद्वद्वाक्यस्यानुवादकत्वाघाराग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

### [३]प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

---

१ धातुभेदेऽपूर्वभेद एकधात्वर्थस्यैकभावनासंबन्धित्वे भावनान्तरव्यवच्छेदादित्यर्थः।२ गुणादिविधायकत्वाभावे एकस्यैव धातोः पुनःश्रुतिरभ्यासो यतोऽनर्थकोऽतः कर्मभेदस्तत्रेत्यर्थः । सिद्धान्तसूत्रम् । ३ न च समिधो यजतीत्येतद्विहितयागानुवादेन द्रव्यदेवतारूपगुणानुवादेन तनूनपादादीनां चारितार्थ्यम् । चतुर्थीतद्धितयोरभावेन देवतात्वस्य तृतीयान्तपदाभावेन द्रव्यस्य च विधानाभावात्तेषां यागविधायकत्वात् । न च संज्ञाभेदात्कर्मभेदः, अथैष ज्योतिरित्यादिवदिति वाच्यम् विधायकैर्यजतिपदैः यागानामभ्यासाद्भेदावगमे केवलसमित्संज्ञा व्यावर्तयितुं तनूनपादादीनामपेक्षितत्वादिति संक्षेपः । सिद्धान्तसूत्रम् । ४ पौर्णमासीघटितविद्वद्वाक्ये

य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इति वाक्यद्वये पौर्णमास्यमावास्यासंज्ञककर्मान्तरद्वयविधिः पुनः श्रवणरूपाभ्यासात्पूर्ववदङ्गीकर्तव्यः । तत्र द्रव्यं सर्वस्मै वेति विहितमाज्यं देवतापि वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति मन्त्रविधेर्मान्त्रवर्णिकी अथवा यदाग्नेयोऽष्टाकपाल इत्यादिवाक्येनाष्टाकपालद्रव्यमग्निर्देवता च विद्वद्वाक्यविहितकर्मणि विधीयत इति प्राप्ते,—प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेर्नाग्नेयादिवाक्येन द्रव्यदेवताविधानं वार्त्रघ्नीत्यादिवाक्यं तु आज्यभागे प्राप्तमन्त्राणां व्यवस्थार्थं लाघवात् अतो विद्वद्वाक्यद्वयं समुदायानुवादः । तेन च फलवाक्यगतदर्शपूर्णमासपदार्थप्रसिद्धौ षण्णामेवाग्नेयादीनां फलसंबन्धसिद्धिरिति सिद्धान्तः ॥ ३ ॥

उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

[2]पौर्णमासीवदुपांशुयाजः स्यात् ॥ ४ ॥

विष्णुरुपांशु यष्टव्योऽजामित्वायेत्यादिवाक्यत्रये तव्यप्रत्ययबलाद्विष्ण्वादिदेवताश्रवणाच्चोपांशुयाजस्य विधिः तत्समुदायानुवादश्चोपांशुयाजमन्तरा यजतीति प्राप्ते,—जामिवेत्यादिना पुरोडाशनैरन्तर्यदोषोपक्रमादन्ते चाजामित्वोपसंहारादेकवाक्यता गम्यते । जामितादोषस्य च नैरन्तर्यप्रयुक्तत्वादन्तरालवाक्य एव उपांशुयाजविधिना समाधानमिति । तत्र एक एवोपांशुयाजविधिः विष्ण्वादीनि वाक्यानि तु मन्त्रलिङ्गप्राप्तदेवताकीर्तनेनार्थवादा इति सिद्धान्तः ॥ ४ ॥

आघाराद्यपूर्वताधिकरणम् ॥ ५ ॥

[3]आघाराग्निहोत्रमरूपत्वात् ॥ ५ ॥

इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति सततमाघारयति ऋजुमाघारयति एतेषु वाक्येषु आघारत्रयविधिः आघारमाघारयतीत्येतत्समुदायानुवादः तथा दध्ना जुहोतीत्यादिषु होमविधिः अग्निहोत्रं जुहोतीत्येतत्समुदाया-

---

आग्नेयादिप्रकृतषड्यागानुवादो न कर्मान्तरं द्रव्यदेवतारूपकर्मान्तरप्रयोजकरूपाभावादित्यर्थः ।

१ सर्वस्मै वा यज्ञाय तद्गृह्यते यद्ध्रुवायामिति वाक्यविहितमित्यर्थः । २ अन्तरावाक्यघटितोऽप्युपांशुयाजो रूपाभावाद्यजतीति वर्तमानप्रयोगाच्च प्रकृतसमुदायानुवादकः स्यात्पौर्णमासीवदित्यर्थः । ३ आघाराग्निहोत्रपदं द्रव्यदेवतात्मकयागस्वरूपाभावाद्विद्वद्वाक्यवत्समुदायानुवादकमित्यर्थः । पूर्वपक्षसूत्रम् ।

नुवादः द्रव्यदेवताशून्यस्य कर्मणो विधानासंभवात्तदनुवादेन केवलगुणस्याक्रियारूपत्वेन विधानायोगाच्चेति प्राप्ते,—अनेकेषु वाक्येषु विशिष्टविधौ गौरवान्निर्गुणवाक्ये कर्ममात्रविधिः गुणवाक्येषु च तदनुवादेन गुणमात्रविधिर्लाघवात् तत्र केवलगुणमात्र एव विधितात्पर्यावगमादिति सिद्धान्तः ॥५॥

पशुसोमयोरपूर्वताधिकरणम् ॥ ६ ॥

द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन ॥ ६ ॥

ऐन्द्रवायवं गृह्णातीत्यादिवाक्यविहितानां यागानां सोमेन यजेतेति समुदायानुवादः सोमपदं प्रकृतिद्रव्यविधायकं नामधेयं वा सोममभिषुणोतीत्यादितस्तत्प्राप्तेः द्रव्यसामान्यप्राप्तौ तन्नियामकं वा, तथा हृदयस्याग्रेऽवद्यतीत्यादिना विहितानामङ्गानां पशुशब्देन लक्षणया समुदायमनूद्य तत्राग्नीषोमदेवताविधिः अथवावदानेन यागसाधनत्वस्य हृदयादीनामवगतेर्यागानुवादेनैव देवताविधिरित्यग्नीषोमीयं पशुमालभेतेति समुदायानुवाद इति प्राप्ते,—सोमपशुशब्दाभ्यां रसहृदयादीनामनुवादायोगात् सोमपशुवाक्ययोरेव यागविधिः ऐन्द्रवायवादिवाक्यानि तु संस्कारस्य विधायकानि न तु यागस्य अश्रवणादिति सिद्धान्तः ॥ ६ ॥

संख्याभेदात्कर्मभेदाधिकरणम् ॥ ७ ॥

पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ ७ ॥

तिस्र आहुतीर्जुहोतीत्यादौ सप्तदश प्राजापत्यान् पशूनालभत इत्यादौ च कर्मैकत्वमेव संख्या त्वेकादशप्रयाजानित्यादिवदावृत्त्या बोध्या आख्यातैक्येन कर्मैकत्वस्य निश्चितत्वात् सप्तदशत्वसंख्या तु द्रव्यगता न कर्मैकत्वविरोधिनी सप्तदशपशुद्रव्यकस्यैकस्यैव यागस्य संभवादिति प्राप्ते,—कर्मण उत्पत्तिवाक्ये अनिर्ज्ञातसंख्यत्वेन तद्गतत्रित्वसंख्याश्रवणाद्भेद एव संख्यायाः पृथक्त्वेनैव निवेशात् प्रयाजानां तु पञ्चत्वेन निश्चितत्वात्तद्गतैका-

---

१ पशुसोमघटितवाक्ययोरपूर्वकर्मत्वं पशुसोमरूपद्रव्यसंयोगादैन्द्रवायवादिदेवतासंयोगाच्च, प्राकृतहृदयैन्द्रवायवादियागानुवादे तु द्रव्यसंयोगो व्यर्थो नहि तस्य गुणार्थत्वे सार्थक्यमस्तीत्यर्थः। सिद्धान्तसूत्रम् । २ संख्यया सप्तदशत्वादिसंख्यया सह पृथक्त्वस्य निवेशात्सामानाधिकरण्यात्कर्मभेदः स्यात्। यत्रोत्पत्तिविधौ कर्मणा देवताविशिष्टद्रव्येण वा संख्यासामानाधिकरण्यं प्रतीयते तत्र स्वाश्रयसमवेतत्वसंबन्धेन स्वाधिकरणावधिकपृथक्त्वव्याप्तेः कर्मभेद इति तत्त्वम्।( सिद्धान्तसूत्रम् )

दशत्वसंख्या आवृत्त्या नीयते सप्तदशेत्यादिवाक्ये तु सप्तदशपशुद्रव्यकैकयागस्वीकारे एकपशुनिष्पन्नैकादशावदानगणस्यातिदेशप्राप्तस्य बाधापत्तेः प्रजापतिदेवतासंबन्धविशिष्टेषु सप्तदशत्वान्वयस्वीकाराद्विशेषणस्य प्रजापतिदेवतासंबन्धस्यापि तदन्वयेन सप्तदशैव यागा इति सिद्धान्तः ॥ ७ ॥

संज्ञया कर्मभेदाधिकरणम् ॥ ८ ॥

संज्ञा चोत्पत्तिसंयोगात् ॥ ८ ॥

अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र ज्योतिःशब्देन ज्योतिष्टोम उच्यते वसन्ते वसन्ते ज्योतिषा यजेतेत्यत्रेव तथा च तदनुवादेन सहस्रदक्षिणारूपगुणविधिमात्रं न तु कर्मान्तरविधिरिति प्राप्ते नामभेदाज्ज्योतिष्टोमाप्रतीतेर्ज्योतिःसंज्ञककर्मान्तरविधिः वसन्ते ज्योतिषेत्यत्र तु ज्योतिष्टोमाधिकारात्कचित्तदभिधानमत्र तु अथशब्देनाधिकारान्तरावगमान्न तत्संभव इति सिद्धान्तः ॥ ८ ॥

देवताभेदात्कर्मभेदाधिकरणम् ॥ ९ ॥

गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ ९ ॥

वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र वैश्वदेवयाग एव वाजिनविधिर्वाजमन्नं येषां त इति व्युत्पत्त्या वाजिशब्देन विश्वदेवाभिधानात् तथा चामिक्षावाजिनयोर्विकल्प इति प्राप्ते उत्पत्तिशिष्टामिक्षावरुद्धे पूर्वयागे वाजिनद्रव्यस्य विकल्पेनापि निवेशायोगाद्यागान्तरमेव विधीयत इति गुणात्कर्मभेद इति सिद्धान्तः ॥ ९ ॥

द्रव्यविशेषानुक्तेः कर्मैक्याधिकरणम् ॥ १० ॥

अगुणे तु कर्मशब्दः ॥ १० ॥

यत्र तु निर्गुणमेव कर्म विहितमग्निहोत्रं जुहोतीत्यादौ तत्र दध्ना

१ सवनीयपशुविकारभूतैकादशिनपशुगणविकारत्वादस्य कर्मैकत्वे प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशेन प्राप्तावदानस्य बाध इति भावः। २ संज्ञापि कर्मभेदप्रयोजिका उत्पत्तिवाक्ये पाठादित्यर्थः। सिद्धान्तसूत्रम्। ३ पूर्वकर्मणा सह निवेशाभावे श्रूयमाणो गुणः कर्मभेदप्रयोजको वाक्ययोर्द्वयोरपि तुल्यत्वादित्यर्थः। सिद्धान्तसूत्रम्। ४ उत्पत्तिवाक्यविशेषणमित्यर्थः। तथाचान्तरङ्गत्वमामिक्षाया इति भावः। ५ कर्मोत्पत्तिवाक्यं गुणवाचकपदरहितं यत्र तत्र गुणपदघटितवाक्ये गुणमात्रविधानं भवतीत्यर्थः। अयं भावः। दध्ना जुहोतीत्यादौ होमस्याग्निहोत्रं जुहोतीत्यतःप्राप्तत्वात्तदनुवादेन दध्यादिगुणमात्रविधानं न कर्मान्तरम्। सिद्धान्तसूत्रम्।

जुहोतीत्यादीनि सर्वाणि दध्यादिद्रव्यविधायकानीति प्रत्युदाहरणसूत्रमिदम् ॥ १० ॥

दध्यादिद्रव्यस्य फलत्वाधिकरणम् ॥ ११ ॥

फैलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ ११ ॥

दध्नेन्द्रियकामस्य जुहुयादित्यत्र होमान्तरमेवेन्द्रियफलार्थं विधीयते अग्निहोत्रहोमानुवादेन दधिफलोभयविधाने वाक्यभेदापत्तेरिति प्राप्ते,—अग्निहोत्रसन्निधानात्तस्यैवोपस्थितेर्न कर्मान्तरं किं तु होमाश्रितं दधि फले विधीयते । दध्ना फलं कुर्यादित्युक्ते व्यापाराकाङ्क्षायामग्निहोत्रहोम एव सन्निधानाद्दधिव्यापारत्वेन प्रतीयते होमकुर्वता दध्ना इन्द्रियं भावयेदिति । इदमेव होमस्याश्रयत्वं यत्फलसाधनीभूतदध्यादिगुणेनान्तरा साध्यमानत्वमिति सिद्धान्तः ॥ ११ ॥

वारवन्तीयादीनां कर्मान्तरताधिकरणम् ॥ १२ ॥

समेषु कर्मयुक्तं स्यात् ॥ १२ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेत्यग्निष्टुत्संज्ञकयागं विधाय तस्य च प्राकृतेन वारवन्तीयमग्निष्टोम साम कार्यमिति वाक्येन गुणं विधाय पुनराम्नातम् एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । तत्र द्वितीये वाक्ये रेवत्यधिकरणकवारवन्तीयसामरूपो गुणः पूर्वयागाश्रितः पशुफलार्थं विधीयते न तु कर्मान्तरमिति प्राप्ते,—यागस्य सामाश्रयत्वासंभवादग्निष्टोमसामेत्यनुवादस्य च नित्यप्राप्त्यभावेनासंभवाद्यागान्तरविधिरेव रेवत्यधिकरणकवारवन्तीयसामकाग्निष्टोमस्तोत्रभावनोत्तरत्वविशिष्टयागान्तरभावना फले विधीयत इति सिद्धान्तः ॥ १२ ॥

सौभरनिधनयोः फलैक्याधिकरणम् ॥ १३ ॥

सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ १३ ॥

यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेति फलत्रयार्थं सौभराख्यं साम ब्रह्मसामाख्यस्तोत्राश्रितं विहितं ततो

१ इन्द्रियादिफलस्य कर्मोत्पत्तिवाक्यघटकत्वात्फलश्रवणमपूर्वकर्मप्रयोजकमित्यर्थः । पूर्वपक्षसूत्रम् । २ क्रियात्वसामान्यादाश्रयाकाङ्क्षारहिते फलमपूर्वकर्मान्वयीत्यर्थः । सिद्धान्तसूत्रम् । ३ सौभरसंबन्धिनिधननिष्ठहीश्रादौ फलान्तरजनकत्वमुत्तरवाक्ये कामनया पुरुषसंबन्धादित्यर्थः । पूर्वपक्षसूत्रम् ।

ह्रीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामायेति श्रुतं तत्र ह्रीषादयो निधनविशेषा वृष्ट्यादिफलान्तरार्था इति प्राप्ते,—पूर्वोक्तवृष्ट्यादिफल एव सौभरेण कर्तव्ये वैकल्पिकानां ह्रीषादिनिधनानां व्यवस्थामात्रं क्रियत इति सिद्धान्तः ॥ १३ ॥

इति श्रीन्यायविन्दौ द्वितीयस्य द्वितीयः पादः ॥ २ ॥

## द्वितीयाध्यायस्य तृतीयः पादः ।

ग्रहाग्रहस्य ज्योतिष्टोमाङ्गताधिकरणम् ॥ १४ ॥

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥**

यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि वृहत्सामा शुक्राग्रानित्यत्र ज्योतिष्टोमात्कर्मान्तरविधिर्ज्योतिष्टोमस्य रथन्तरसामेति विशेषणासंभवात् तत्र सामान्तरसत्त्वेन व्यावर्तकत्वाभावात्सकलज्योतिष्टोमव्यापनासंभवाच्च अतः सामर्थ्याभावान्न ज्योतिष्टोमस्य रथन्तरसामनिमित्ते ऐन्द्रवायवाग्रताविधिरिति प्राप्ते,—यदिशब्दात्प्रकरणाच्च ज्योतिष्टोमस्यैवात्रानुवादः विशेषणत्वं स्वयोगव्यवच्छेदेन स्वविरोधिवृहत्सामव्यवच्छेदेन चोपपद्यत इति सिद्धान्तः ॥ १ ॥

अवेष्टेः कर्मान्तरताधिकरणम् ॥ २ ॥

**अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ २ ॥**

राजकर्तृके अवेष्टिर्नामेष्टिः समाम्नाता आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणेत्यादि तां प्रकृत्य श्रूयते यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति, तत्र ब्राह्मणादिकर्तृकत्वे निमित्ते तन्मध्यनिधानादिविधिः । न च राजसूयस्य राजकर्तृकत्वात्तत्र न ब्राह्मणप्राप्तिरिति वाच्यं राजशब्दस्य राज्यकर्तरि शक्तत्वेन ब्राह्मणस्यापि तादृशस्य संभवादिति

---

१ रथन्तरं साम यत्रेति विग्रहेण यज्ञसंयोगाद्रथन्तरो गुणः अपूर्वकर्मप्रयोजको रथन्तरसामान्वयस्य क्रतुयुक्त्यावत्सामकार्याव्याप्तत्वादित्यर्थः । पूर्वपक्षसूत्रम् ।
२ अवेष्टिसमीपोच्चरितं यदि ब्राह्मण इत्यादिवाक्यमपूर्वकर्मान्तरप्रयोजकं, क्षत्रियस्यैव तेन यागेन संयोगात्, राजसूये क्षत्रियस्यैवाधिकारादित्यर्थः । सिद्धान्तसूत्रम् ।

प्राप्ते,—राजशब्दस्य शिष्टैः क्षत्रिय एव प्रयोगान्न राजसूये ब्राह्मणप्राप्तिः अतो ब्राह्मणादीनां प्राप्त्यर्थान्येव श्रवणानि ततश्च राजसूयाद्बहिरेव ब्राह्मणादिकर्तृको मध्यनिधानादिविशिष्टोऽवेष्टिप्रयोगोऽयं विधीयत इति सिद्धान्तः ॥ २ ॥

आधानस्य विधेयताधिकरणम् ॥ ३ ॥

## आधानेऽसर्वशेषत्वात् ॥ ३ ॥

वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति । अत्र ब्राह्मणादीनां निमित्तार्थानि श्रवणानि ब्राह्मणश्चेदादधीत तदा वसन्त इति एवं ब्राह्मणं चेदुपनयीत तदा वसन्त इति, आधानं तु आहवनीयादिसाध्यैः क्रतुभिरेवाक्षिप्तम् एवमुपनयनमपि विद्यासाध्यैस्तैरेवेति प्राप्ते,—अथवा य एवं विद्वानग्निमाधत्त इत्यनेनाधानप्राप्तिरिति प्राप्ते,—उक्तवाक्यस्य वर्तमाननिर्देशरूपत्वान्न विधायकत्वं, परकीयादिनापि क्रतुसिद्धेर्नाक्षेपोऽपि । एवं पुस्तकानिरीक्षणादिनापि विद्यासंभवान्नोपनयनाक्षेपः, तस्माद्वसन्तादिवाक्येष्वेव ब्राह्मणादिकर्तृवसन्तादिकालविशिष्टाधानविधिरेवेति सिद्धान्तः ॥३॥

दाक्षायणादीनां गुणताधिकरणम् ॥ ४ ॥

## अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ४ ॥

दर्शपूर्णमासप्रकरणगते दाक्षायणयज्ञेन स्वर्गकामो यजेत तथा साकं प्रस्थायीयेन यजेत पशुकाम इत्यत्र कर्मान्तरं नामभेदादिति प्राप्ते,—दर्शपूर्णमासयोरेवावृत्तिलक्षणो गुणः सहप्रस्थानलक्षणश्च फले विधीयते द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये इति तथा सह कुम्भीभ्यामभिक्रामेदिति च । तेन दक्षस्य यजमानस्येमे दक्षा ऋत्विजस्तेषामयनं प्रयोगावृत्तिर्यस्मिन्नसौ दाक्षायण इति योगेन प्रकृतयागवाचित्वमेव दाक्षायणशब्दस्य । तथा साकं सह प्रस्थानं यत्रेति व्युत्पत्त्या साकं प्रस्थायीयशब्दोऽपि अतो न कर्मान्तरमिति सिद्धान्तः ॥ ४ ॥

---

१ राजानमभिषेचयेदित्यादौ वेदेऽपि क्षत्रियपर एव राजशब्दः । राज्यपालनकर्तरि ब्राह्मणादौ तु भाक्तः प्रयोग इति तत्त्वम् । २ आधानविषये वसन्तादिवाक्यं विधायकमाक्षेपसिद्धस्य तस्य सर्वपुरुषान्प्रत्यनङ्गत्वादित्यर्थः । सिद्धान्तसूत्रम् । ३ अयनपदघटितवाक्येषु अपूर्वकर्मान्तरविधिः संज्ञासंबन्धादित्यर्थः । पूर्वपक्षसूत्रम् ।

द्रव्यदेवतासंयुक्तानां कर्मान्तरताधिकरणम् ॥ ५ ॥

## संस्कारश्चाप्रकरणे अकर्मशब्दत्वात् ॥ ५ ॥

वायव्यं श्वेतमालभेत भूतिकामः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र च दर्शपूर्णमासगत ईषालम्भननिर्वापानुवादेन श्वेत-चरुरूपगुण-विधिरीषायां श्वेतत्वं निर्वापे स्थाल्यधिकरणत्वं च गुणः अथवा आल-म्भनिर्वापमात्रं यथाश्रुतं विधीयते वायव्यं सौर्यमिति च संबन्धसामान्ये तद्धितोऽनुवादः तथा फलपदमपि सार्वकाम्यप्राप्तानुवाद इति प्राप्ते,— वायव्यं सौर्यमिति पदयोर्वैयर्थ्यप्रसङ्गाद्द्रव्यदेवतासंबन्धकल्पितो यागोऽत्र विधीयत इति सिद्धान्तः ॥ ५ ॥

वत्सालम्भादीनां कर्मान्तरताधिकरणम् ॥ ६ ॥

## विशये प्रायदर्शनात् ॥ ६ ॥

वत्समालभेतेत्यादिषु तु यागकल्पकदेवताया अभावान्न कर्मा-न्तरमिति सिद्धान्तः ॥ ६ ॥

नैवारचरोरुपधानार्थताधिकरणम् ॥ ७ ॥

## संयुक्तस्त्वर्थशब्देन तदर्थश्रुतिसंयोगात् ॥ ७ ॥

चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवारा इत्यत्र तु यागकल्पनं विनैव उपधानमात्रविधिसंभवान्नार्थवादे देवताकीर्तनवशेन यागान्तर-विधिरिति सिद्धान्तः ॥ ७ ॥

पात्नीवतस्य पर्यग्निकरणान्तताधिकरणम् ॥ ८ ॥

## पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ ८ ॥

त्वाष्ट्रं पात्नीवतमालभेतेति प्रकृत्य पर्यग्निकृतं पात्नीवतमुत्सृजतीति

---

१ अप्रकरणे वायव्यवाक्ये सौर्यवाक्ये च श्वेत—चरुरूपगुणविधिरकर्मशेष-त्वात्, कर्मशिष्यते वोध्यतेऽनेनेति कर्मशेषः न कर्मशेषः अकर्मशेषः तत्वादकर्म-शेषत्वाद्यागवोधकशब्दाभावादित्यर्थः । पूर्वपक्षसूत्रम् । २ विशये यागसंस्कारोभय-विधिसंशये संस्कारस्तन्मध्यपाठदर्शनादित्यर्थः । सिद्धान्तसूत्रम् । ३ अयं भावः विमतो वत्सालम्भो यागः प्राणिद्रव्यकालम्भत्वाद्वायव्यालम्भवदित्यनुमानेन कर्मा-न्तरशङ्कायां देवताराहित्येन तदभावात्स्पर्शमात्रविधानमेव । ४ चरुरर्थशब्देन कार्यार्थशब्देन उपदधातिना संबद्ध उपधानार्थ एव शक्यार्थलाभादित्यर्थः । सिद्धा-न्तसूत्रम् । ५ यथा रात्रिसत्रेऽर्थवादावगतप्रतिष्ठालक्षणफलापेक्षा न तथात्रोपधानं देवतांशे नित्यसाकाङ्क्षमिति भावः । ६ पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति वाक्ये

श्रुते वाक्ये यागान्तरविधिर्न तु पूर्वयागानुवादेन पर्यग्निकृतोत्सर्गरूप-गुणविधिः पूर्वयागस्य केवलपत्नीदेवत्यत्वाभावेन तदनुवादासंभवात्पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ विशिष्टानुवादकृतवाक्यभेदापत्तेश्चेति प्राप्ते,—पात्नीवतशब्देन पूर्वयागस्य प्रत्यभिज्ञानात्तत्रैव पर्यग्निकरणान्तता विधीयते उत्सर्गस्तु प्राप्त एवानूद्यते अतो न कर्मान्तरविधिरिति सिद्धान्तः ॥ ८ ॥

अदाभ्यादीनां ग्रहनामताधिकरणम् ॥ ९ ॥

## अद्रव्यत्वाच्च केवले कर्मशेषः स्यात् ॥ ९ ॥

योऽदाभ्यं गृहीत्वा सोमाथ यजते, योंऽशुं गृह्णातीति वाक्ययोः कर्मान्तरविधिः संज्ञाभेदात् । ग्रहणसंस्कारविधौ तु तस्य नामधेयादर्शनात्तदनुपपत्तिः । अंशुवाक्ये यागाश्रवणेऽपि गृह्णातिलिङ्गाज्ज्योतिष्टोमातिदेशेन द्रव्यदेवताप्राप्तौ यागसिद्धिरिति प्राप्ते अंश्वदाभ्यग्रहयोरेव ज्योतिष्टोमे विधानं संस्कारस्यापि नामवत्त्वे बाधकाभावान्न तु यागविधिः गुणमात्रे विधितात्पर्यादर्शौ यागाश्रवणाच्चेति सिद्धान्तः ॥ ९ ॥

अग्निचयनस्य संस्कारताधिकरणम् ॥ १० ॥

## अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयते ॥ १० ॥

य एवं विद्वानग्निं चिनुते इत्यत्राग्निसंज्ञकयागविधिश्चिनोतिस्तु इष्टकाभिरग्निं चिनुत इति वाक्यप्राप्तानुवादो निर्वपतिवत् । अग्निशब्दस्य यागनामत्वं च अथातोऽग्निमग्निष्टोमेनानुयजन्तीति वाक्ये यदग्निं यजति तदग्निष्टोमेनेत्यग्निसंज्ञकयागानुवादेनाग्निष्टोमसंस्थाविधानादवगम्यते । एवमनु-

---

पूर्ववत्वात्तदेवेदं पूर्ववाक्यविहितं कर्मेति प्रत्यभिज्ञया भाविकर्मणां विशसनादीनां निवृत्तिरित्यर्थः । सिद्धान्तसूत्रम् ।

१ न चात्राग्नेयपुरोडाशचतुर्धाकरणं यथाऽग्नीषोमीयपुरोडाशे न तस्य केवलाग्न्युद्देश्यत्वादेवमत्रापि त्वाष्ट्रपात्नीवदुद्देश्यकस्य केवलपात्नीवद्देवताकत्वाभावात्कथं प्रत्यभिज्ञानमिति वाच्यम् । त्वाष्ट्रं पात्नीवतमित्यत्र तद्धितस्य प्रत्येकमुत्पन्नत्वेन प्रत्येकस्य देवतात्वेनाग्नीषोमवन्मिलितस्य तत्त्वाभावेन प्रत्यभिज्ञाया निराबाधात् । न च प्रत्येकस्य देवतात्वे विकल्पः युगपदेकेन वाक्येनोभयोर्विधानादिति संक्षेपः । २ अद्रव्यत्वात्; द्रव्याद्युपलक्षितदेवतायाश्चाभावात्, केवले गृह्णातिपदमात्रश्रवणे तदुपस्थितकर्मणो ज्योतिष्टोमाङ्गत्वमित्यर्थः । सिद्धान्तसूत्रम् । ३ य एवं विद्वानग्निं चिनुत इत्यत्राग्निशब्दः कर्मवाचकः स्तोत्रशस्त्ररूपलिङ्गदर्शनादित्यर्थः । पूर्वपक्षसूत्रम् ।

यजन्तीत्यपि गमकं अग्नेर्यागरूपत्वाभावे तमनुयागान्तरबोधासंभवाद्देवदत्त-मनुगच्छति यज्ञदत्त इत्यादिवदेकजातीययोरेव तथा व्यपदेशादिति प्राप्ते,—अग्नेश्चयनसंस्कारमात्रमेवात्र विधीयते तस्याथातोऽग्निमित्यादिवाक्यैः क्रतु-संबन्धः क्रियते न त्वग्निशब्दोऽश्रुतयागनामधेयमनुयजतीति तु चयनानन्त-र्येणाप्युपपद्यते पाकमनुभुङ्क्ते इति विजातीयेऽपि प्रयोगादिति सिद्धान्तः १०

प्राणाग्निहोत्रादीनां यागान्तरताधिकरणम् ॥ ११ ॥

## प्रकरणान्तरे[1] प्रयोजनान्यत्वम् ॥ ११ ॥

कुण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वतीति श्रुतं तत्राग्निहोत्रमिति नाम्ना नित्याग्निहोत्रस्यैवानुवादेन मासविधिरिति प्राप्ते,—नित्याग्निहोत्रस्य दूरस्थत्वेनानुपस्थितेर्मासस्य चानुपादेयत्वेन अग्निहोत्रस्यै-वोपादेयत्वात्कर्मान्तरविधिरेवायम् । तथा हि प्रवर्तनारूपेण विधिना कृति-साध्यत्वरूपमुपादेयत्वमज्ञातज्ञापनरूपं विधेयत्वं च स्वविषये बोध्यते एक-त्रैवेत्युत्सर्गः । यथा यागादौ, तत्प्राप्तौ तु द्रव्यादिगुणे योग्ये । यत्र तु कृति-साध्यत्वायोग्यो मासादिगुणस्तत्रोपादेयत्वस्य धात्वर्थ एव संभवात्तत्सामा-नाधिकरण्यस्यौत्सर्गिकस्य विधेयत्वे ग्रहाद्विधेयत्वमपि तस्यैवेत्यङ्गीक्रियते । न च विहितस्यैव विधानमिति भेदः अग्निहोत्रनाम तु तत्सादृश्याद्गौण-मिति सिद्धान्तः ॥ ११ ॥

आग्नेयादीष्टीनां कर्मान्तरताधिकरणम् ॥ १२ ॥

## फलं[2] चाकर्मसन्निधौ ॥ १२ ॥

आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति फलं चशब्दाद्देशनिमित्तसंस्कार्य-रूपानुपादेयसहकृतेः सन्निधावपि कर्मभेदो बोध्यः ॥ १२ ॥

अवेष्टेरन्नाद्यफलताधिकरणम् ॥ १३ ॥

## सन्निधौ[3] त्वविभागात्फलार्थेन पुनःश्रुतिः ॥ १३ ॥

असन्निधौ कर्मभेद उक्तः सन्निधौ तु अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादौ प्रकृतस्यैवाग्निहोत्रस्य फलार्थं पुनः श्रवणमिति न कर्मभेद इति प्रत्युदा-हरणप्रदर्शनम् । फलग्रहणं देशकालनिमित्तसंस्कार्याणामनुपादेयानामुप-लक्षणम् ॥ १३ ॥

---

१ प्रकरणान्तरे पूर्वकर्मासन्निधौ कर्मभेद इत्यर्थः । सिद्धान्तसूत्रम् । २ कर्मसन्निधौ श्रूयमाणं फलं च कर्मभेदप्रयोजकमित्यर्थः । सिद्धान्तसूत्रम् । ३ समीपपठिते त्वेतस्मात्कर्मणः भेदो न, पुनःश्रवणं तु फलार्थमित्यर्थः । सिद्धान्तसूत्रम् ।

आग्नेयद्विरुक्तेः स्तुत्यर्थत्वाधिकरणम् ॥ १४ ॥

आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते ॥ १४ ॥

आग्नेयस्यामावास्यायां पौर्णमास्यां चाच्युतो भवतीति कालद्वये एको विधिः । यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यपरः । तेनाभ्यासात्कर्मभेद इति प्राप्ते,—सन्निहितत्वेन प्रत्यभिज्ञानादभेद एव । अमावास्यायां पुनर्वचनं त्वैन्द्राग्नस्य प्रशंसार्थमिति सिद्धान्तः ॥ १४ ॥

इति श्रीन्यायबिन्दौ द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

## द्वितीयाध्यायस्य चतुर्थः पादः ।

यावज्जीविकाग्निहोत्राधिकरणम् ॥ १ ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

यावज्जीवमग्निहोत्रं जुहोतीत्यादौ फलार्थस्यैवाग्निहोत्रस्य यावज्जीवकालमभ्यासोऽङ्गमिति प्राप्ते,—काललक्षणायामभ्यासलक्षणायां च प्रमाणाभावाज्जीवने निमित्ते अग्निहोत्रप्रयोगो विधीयते तत्फलं चाकरणप्रत्यवायपरिहार इति सिद्धान्तः ॥ १ ॥

सर्वशाखागतकर्मैक्याधिकरणम् ॥ २ ॥

नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ २ ॥

शाखान्तरे अग्निहोत्रादिकर्म भिद्यते पुनःश्रुतिलक्षणादभ्यासात्प्रकरणान्तराच्च । तथा गुणादपि, क्वचिद्धि ऐन्द्राग्नमेकादशकपालं निर्वपेदिति श्रुतं क्वचिद्द्वादशकपालमिति तस्माद्भेद इति प्राप्ते,—विधिभेदेऽपि नात्र भेदः अध्येतृपुरुषान्तरं प्रति विधिभेदोपपत्तेः । तथा एकादशद्वादशकपालयोर्विकल्पोपपत्तेश्चेति सिद्धान्तः ॥ २ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ
द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

१ आग्नेयस्त्वभ्यासेन, पुरोडाशाभ्यासेन कर्मान्तरमभ्यासस्य हेतोः सत्त्वादित्यर्थः । पूर्वपक्षसूत्रम् । २ यावज्जीवमग्निहोत्रं जुहोतीत्यत्र यावज्जिविकः कर्माभ्यासः आवृत्तिः कर्माङ्गं प्रकरणादित्यर्थः । पूर्वपक्षसूत्रम् । ३ शाखान्तरेषु अग्निहोत्रादिकर्मभेदो नामरूपादिभेदादित्यर्थः । पूर्वपक्षसूत्रम् । ४ यथा खल्वेकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेवमपरस्यापि विधत्ते न कर्मान्तरमेवमत्रापि अध्येतृभेदात्तान्

## तृतीयाध्यायस्य प्रथमः पादः ।

शेषलक्षणप्रतिज्ञाधिकरणम् ॥ १ ॥

### अथातः शेषलक्षणम् ॥ १ ॥

अथ कर्मभेदकथनानन्तरं शेषलक्षणमङ्गनिरूपणं क्रियत इति शेष इति प्रतिज्ञासूत्रम् ॥ १ ॥

शेषलक्षणाधिकरणम् ॥ २ ॥

### शेषः परार्थत्वात् ॥ २ ॥

यदर्थत्वेन यस्य विधानं स तस्य शेष इत्यङ्गलक्षणम् । यथा यागः फलार्थत्वेन विधानात्फलशेषः यागार्थत्वेन च द्रव्यदेवतादिविधानाद्द्रव्य-देवतादिकं यागशेष इत्यूह्यम् । यद्यस्योपकारकं तत्तस्य शेष इति तु न युक्तं फलार्थविहितस्य गोदोहनस्य प्रणयनोपकारकत्वात्तच्छेषत्वापत्तेः । तस्मादुक्तलक्षणमेव युक्तम् ॥ २ ॥

शेषत्वलक्ष्याधिकरणम् ॥ ३ ॥

### द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥

द्रव्यं व्रीह्यादि, गुण आरुण्यादिः, संस्कारोऽवघातादिरेतेषामेवोपका-रकत्वादङ्गत्वं न तु यागस्य फलशेषत्वमिति बादरिमतं न युक्तं यागा-देरपि स्वर्गसाधनत्वेन विधानात्तच्छेषत्वात् ॥ ३ ॥

---

प्रति सर्वाण्येव वाक्यान्येकमेव कर्म विदधति न कर्मान्तरमेवमेकादशद्वादशकपालयो-रुभयोरुत्पत्तिशिष्टत्वान्न बलाबलं तस्मादभेद इति दीपिकायाम् ।

१ अथ कर्मभेदनिरूपणानन्तरं यतः शेषशेषिनिरूपणमतः शेषलक्षणं प्रतिज्ञायत इत्यर्थः । २ श्रोतृबुद्धिसमाधानाय वक्ष्यमाणार्थप्रदर्शनमात्रमतो न विषयादिना प्रयोजनमिति भावः । कः शेषः केन हेतुना शेषः, कथं विनियोगः, कानि कारणानि, तेषां विरोधो बलाबलं चास्ति नेत्यादि तस्य बहवो भेदाः । ३ परार्थत्वं शेष इत्यर्थः । परोद्देशप्रवृत्तकृतिव्याप्यत्वमिति यावत् । येन विना यन्न भवति स तस्य शेष इत्यलक्षणम् । दर्शपूर्णमासीयाग्नेयादीनां परस्परं तत्त्वापत्तेः । प्रयोज्यत्वमपि न । पुरोडाशकपालेन तुषानुपवपतीत्यत्र पुरोडाशकपालस्य तत्त्वानापत्तेः । उपकारकत्वं, विध्यन्तविहितत्वं, वा तत्त्वमित्यपि न । अङ्गोपकारकत्वेन प्रधानानां शेषत्वापत्तेर्विध्या-दिविहितशाखाच्छेदादीनां तदनापत्तेश्च । यस्मादधिकं यद्विधीयते स तस्य शेष इत्य-प्यङ्गप्रधानानां परस्पराधिक्यादलक्षणम् । तस्मादुक्तलक्षणमेव निर्दुष्टमिति दिक् । ४ इत्यस्याग्रे फलार्थत्वात्पुरुषार्थत्वात्कर्मार्थत्वात्कर्मद्रव्यपुरुषादीनां तत्त्वमिति पूरणीयम् ।

निर्वापादीनां व्यवस्थयाऽनुष्ठेयताधिकरणम् ॥ ४ ॥

तेषामर्थेन संबन्धः ॥ ४ ॥

निर्वापावघातादय औषधधर्माः, उत्पवनादय आज्यधर्माः, शाखाहरणादयः सान्नाय्यधर्मास्ते सर्वे सर्वत्र कार्याः व्रीह्यादिशब्दानामपूर्वसाधनपरत्वात्सर्वेषां चापूर्वसाधनत्वादिति प्राप्ते,—आग्नेयाद्युत्पत्त्यपूर्वस्य भेदात्तत्तत्साधनत्वमेव व्रीह्यादिपदैर्लक्ष्यते तदर्थत्वं च निर्वापादीनामिति व्रीह्यादिष्वेव निर्वापः आज्य एवोत्पवनं सान्नाय्य एव शाखाहरणादिकमिति व्यवस्थेति सिद्धान्तः ॥ ४ ॥

स्फ्यादीनां संम्बन्धतो व्यवस्थितताधिकरणम् ॥ ५ ॥

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ५ ॥

स्फ्यश्च कपालानि चेत्युपक्रम्य एतानि वै दश यज्ञायुधानीति श्रुतं तत्र स्फ्यादिभिर्येन यत्कर्तुं शक्यं तत्सर्वं कार्यं, यज्ञायुधत्वोक्तेर्यज्ञसाधनत्वार्थत्वात्तस्य च साक्षादसंभवेन अङ्गेष्ववतारादिति प्राप्ते,—स्फ्येनोद्धन्तीत्यादिना वेद्युद्धननादौ विनियोगात्तदङ्गत्वमेव । यज्ञायुधवाक्यं तु यथाप्राप्तानुवाद इति सिद्धान्तः ॥ ५ ॥

आरुण्यादीनामसंकीर्णत्वाधिकरणम् ॥ ६ ॥

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ ६ ॥

अरुणया एकहायन्या सोमं क्रीणातीत्यत्रारुणगुणस्यामूर्तत्वेन क्रयसाधनत्वासंभवात्तदीयद्रव्येषु वासःप्रभृतिषु सर्वेषु निवेश इति प्राप्ते,—अमूर्तस्यापि द्रव्यपरिच्छेदद्वारा साधनत्वसंभवाद्द्वारापेक्षायां च स्ववाक्योपात्तैकहायनीसंबन्धस्य कल्पनादेकहायन्यामेव निवेश इति सिद्धान्तः ॥ ६ ॥

---

१ तेषां निर्वापादीनां वैतुष्यादिना दृष्टेनार्थेन नियतः संबन्धः शेषशेषिभाव इत्यर्थः । सिद्धान्तसूत्रम् । २ उत्पत्तिवाक्यावगतक्रियायोगात् स्फ्यादिद्रव्यमुद्धननादिभिरेव संबध्यत इत्यर्थः । सिद्धान्तसूत्रम् । ३ यत्र कर्मणि द्रव्यगुणयोरेकक्रियान्वयित्वं संभाव्यते तत्र नियमो नाम परिच्छेद्यपरिच्छेदकभावस्तयोः स्यादित्यर्थः । सिद्धान्तसूत्रम् । ४ आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायादित्यर्थः । ५ वासःप्रभृतिद्रव्याणां क्रयान्तरसाधकतया भिन्नवाक्यस्थत्वादित्यर्थः । तथाच भाष्यकाराः "भिन्ने हि वाक्ये, एकहायनीसाधनक एकः क्रयोऽवबुद्धो भवत्यरुणसाधनकमपि क्रयान्तरम्" इति ।

ग्रहैकत्वाधिकरणम् ॥ ७ ॥

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ ७ ॥

ग्रहं संमार्ष्टीत्यत्रैकत्वश्रवणादेकस्यैव ग्रहस्य संमार्ग इति प्राप्ते,—ग्रहमात्रस्योद्देश्यत्वात्सर्वग्रहेषु संमार्गः एकत्वस्यापि विधाने तु ग्रहोद्देशेन संमार्गैकत्वोभयविधानाद्वाक्यभेदः स्यात्तस्मादेकत्वानुवाद इति सिद्धान्तः ॥७॥

चमसादौ संमार्गाननुष्ठानाधिकरणम् ॥ ८ ॥

## संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ ८ ॥

ग्रहस्वरूपं तु विवक्षितमुद्देश्यं विना विध्ययोगेन तत्स्वरूपस्याविवक्षायां कारणाभावादतश्चमसेषु न संमार्ग इति सिद्धान्तः ॥ ८ ॥

सप्तदशारत्नित्वस्य पशुधर्मताधिकरणम् ॥ ९ ॥

## आनर्थक्यात्तदङ्गेषु ॥ ९ ॥

सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्र सप्तदशारत्नित्वं वाजपेयाङ्गं सत्त्रासंभवात्तदङ्गग्रहपात्रे निविशते । यूपशब्दस्तु तत्रैव सादृश्याद्गौण इति प्राप्ते सप्तदशारत्नित्वं यूपाङ्गमेव । षष्ठी तु वाजपेयाङ्गपशुसंबधित्वरूपपरंपरासंबधे इति सिद्धान्तः ॥ ९ ॥

अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम् ॥ १० ॥

## कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १० ॥

अभिक्रामं जुहोतीत्यभिक्रणं प्रकरणात्कर्तृद्वारा दर्शपूर्णमासाङ्गमिति प्राप्ते,—वाचनिकप्रयाजपूर्वोत्तराङ्गमध्यपाठरूपप्रयाजावान्तरप्रकरणात्तन्मात्राङ्गमिति सिद्धान्तः ॥ १० ॥

उपवीतस्य प्राकरणिकाङ्गताधिकरणम् ॥ ११ ॥

## संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ ११ ॥

उपव्ययत इत्युपवीतमवान्तरप्रकरणात्सामिधेन्यङ्गमिति प्राप्ते,—नि-

---

१ एकत्वविशिष्टं ग्रहादि संमार्गोद्देश्यमेकत्वघटितग्रहपदश्रवणादत एकस्य संमार्ग इत्यर्थः । पूर्वपक्षसूत्रम् । २ 'उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया । तस्याङ्गमेव संमार्गः सर्वस्येति विनिश्चयः' इत्यभियुक्तोक्त्या जातेरेव संमार्गं प्रत्युद्देश्यत्वादित्यर्थः । ३ ग्रहं संमृज्याद्यं संमृज्यात्स चैक इत्येवं रूप इत्यर्थः । ४ गुणानां संमार्गादीनां संस्काररूपत्वादनियम एष्वेवेति नियमाभाव इत्यर्थः । पूर्वपक्षसूत्रम् । ५ यत्र प्रधाने आनर्थक्यं तत्र तदङ्गेषु निवेशः, यथा वाजपेये प्रधाने यूपाभावेन यूपस्याङ्गभूतप्राजापत्येनिवेश इत्यर्थः । सिद्धान्तसूत्रम् । ६ कर्मणा धात्वर्थेन सममभिक्रमणस्यानन्वयात्क-

विन्मन्त्रव्यवधानात्सामिधेनीप्रकरणविच्छेदाद्दर्शपूर्णमासाङ्गमेवेति सिद्धान्तः ॥ ११ ॥

वैकङ्कतादिपात्राणां सर्वयागगुणताधिकरणम् ॥ १२ ॥

## गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ॥ १२ ॥

वारणो यज्ञावचर इति पात्राण्याधानप्रकरणात्तदङ्गपवमानेष्टिष्वेवेति प्राप्ते,—पवमानेष्टीनामग्न्यर्थत्वेनाधानाङ्गत्वाभावात्सर्वयज्ञार्थतैवेति सिद्धान्तः इति भाष्यकारः । वार्तिककारस्त्वग्निमादधीतेति द्वितीयाश्रुत्या आधानस्यैवाग्न्यर्थत्वं न तु पवमानेष्टीनां श्रुत्याद्यभावात् किं तु प्रकरणादाधानाङ्गत्वमेव तासाम् । पात्राणां तु सर्वयज्ञार्थत्वं यज्ञत्वाविशेषात् यज्ञशब्देनैवापूर्वावगत्या तदर्थे प्रकरणानपेक्षणादित्याह ॥ १२ ॥

वार्त्रघ्नावृधन्वद्वाक्यानामाज्यभागाङ्गताधिकरणम् ॥ १३ ॥

## मिथश्चानर्थसंबन्धः ॥ १३ ॥

वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामित्याज्यभागसंनिधिपठितमन्त्राणां दर्शपूर्णमासाङ्गत्वबोधकमिति प्राप्ते,—वैकल्पिकमन्त्राणामाज्यभागयोरेव कालकृतव्यवस्थार्थं वचनमिति सिद्धान्तः ॥ १३ ॥

हस्तावनेजनादीनां यावत्प्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

## आनन्तर्यमचोदना ॥ १४ ॥

दर्शपूर्णमासयोर्हस्तावनेजनमुलपराजिस्तरणाङ्गमानन्तर्यादिति प्राप्ते,—लिङ्गात्करिष्यमाणसर्वकर्मार्थमिति सिद्धान्तः ॥ १४ ॥

चतुर्धाकरणस्याग्नेयमात्राङ्गताधिकरणम् ॥ १६ ॥

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात् ॥ १५ ॥

आग्नेयं चतुर्धा करोतीति चतुर्धाकरणमग्नीषोमीयस्यापि भवति

---

तृविशेषणतया कर्मान्वये वाक्यभेदः स्यादित्यर्थः । पूर्वपक्षसूत्रम् । ७ अवान्तरप्रकरणसंदेहवाक्येषु निविद्भिर्व्यवहितत्वाद्वाक्यभेदः स्यात् । सिद्धान्तसूत्रम् ।

१ गुणानां प्रधानार्थत्वादसन्निधानस्य समत्वादसंबन्धः स्यादित्यर्थः । सिद्धान्तसूत्रम् । २ मिथश्चेत्यस्याग्रे प्रधानेनेति शेषः । मिथो नाम द्वित्वविशिष्टयोः पुरोऽनुवाक्यायाज्ययोः प्रधानेनाभिसंबन्धोऽनर्थक इत्यर्थः । सिद्धान्तसूत्रम् । ३ पौर्णमास्यामावास्याकालोपलक्षितनियमार्थमित्यर्थः । ४ आनन्तर्यं सन्निधिः, अचोदना साधकाभावः, एकवाक्यताया इति शेषः । एवं च सन्निधिर्नैकवाक्यतासाधक इत्यर्थः । सिद्धान्तसूत्रम् । ५ शेषश्चतुर्धाकरणमग्निगुणसंबद्धमपि सर्वपुरोडाशशेषः प्रतीयेत, चतुर्धाकरणानां शाखान्तरेऽभिसंबन्धित्वेनाश्रवणादित्यर्थः । पूर्वपक्षसूत्रम् ।

तस्याप्यग्निसंबन्धित्वादिति प्राप्ते,—आग्नेयशब्देन केवलाग्निदैवत्यस्यैवोक्तत्वात्तस्यैव भवति नाग्नीषोमीयस्येति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

## तृतीयाध्यायस्य द्वितीयः पादः ।



लवनमन्त्राणां मुख्यविनियोगाधिकरणम् ॥ १ ॥

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥**

मन्त्राणां मुख्ये गौणे चार्थे लिङ्गाद्विनियोग इति प्राप्ते,—सामर्थ्यरूपलिङ्गस्य मुख्ये स्वारसिकत्वात्तत्रैव विनियोग इति सिद्धान्तः ॥ १ ॥

श्रुत्या विनियोगाधिकरणम् ॥ २ ॥

**वचनात्त्वयथार्थमैन्द्री स्यात् ॥ २ ॥**

ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गृहपतेरयं गार्हपत्य इति व्युत्पत्त्या इन्द्र एवोच्यते । अथवा गार्हपत्यस्य समीपे स्थित्वा इन्द्रोपस्थानमिति प्राप्ते,—गार्हपत्यशब्दस्याग्नौ रूढत्वान्नेन्द्रप्रतीतिः अग्नेश्चोपान्मन्त्रकरण इत्यनुशिष्टात्मनेपदगम्यप्रधानभूताभिधानक्रियां प्रत्येव कर्मत्वाद्वचनाद्गार्हपत्योपस्थान एव विनियोग इति सिद्धान्तः ॥ २ ॥

आह्वानार्थानां तत्र विनियोगाधिकरणम् ॥ ३ ॥

**तथाह्वानमपीति चेत् ॥ ३ ॥**

हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीत्यत्र मन्त्रस्यावघाते विनियोगो न

---

१ अग्निर्देवतास्याग्नेय इति व्युत्पत्त्या देवतातद्धितस्याग्निमात्रादुत्पत्तेस्तस्यैव देवत्वमित्यर्थः। २ औत्पत्तिकेनार्थेन मन्त्रघटकपदानां संबन्धः पदपदार्थनां संबन्धस्यानादित्वादतो मुख्यार्थस्मरणद्वारा मन्त्राणां क्रत्वङ्गत्वमित्यर्थः । सिद्धान्तसूत्रम् । ३ स्मरणादिनापि गौणार्थविनियोगसंभवान्न तत्र मन्त्रस्य विनियोजकत्वमिति तत्त्वम् । ४ गार्हपत्यमिति द्वितीयावचनाच्छ्रुत्यैन्द्री ऋगिन्द्रप्रकाशिका नेत्यर्थः, सिद्धान्तसूत्रम् । ५ यद्वोपतिष्ठत इति द्वे क्रिये विद्येते समीपस्थानमात्मनेपदानुमितं चाभिधानम्, तत्रैन्द्रमन्त्रकरणकेऽभिधाने गार्हपत्यस्य कर्मत्वं न संभवतीति समीपस्थानविशेषणं गार्हपत्यो भवति गार्हपत्यमुपेत्याभिधत्त इति शास्त्रदीपिका । ६ गौण्या वृत्त्या गार्हपत्यप्रकाशकत्वं यथा तथाह्वानवाचकमपीति चेदित्यर्थः । पूर्वपक्षसूत्रम् ।

त्वाह्वाने अवघ्नन्नित्यत्र काललक्षणापत्तेरिति प्राप्ते,—मन्त्रस्यावघाते सामर्थ्याभावादवघातकाले साहाय्यार्थमाह्वानस्य मन्त्रस्य च प्राप्तत्वान्निरभ्यासमात्रं विधीयत इति सिद्धान्तः ॥ ३ ॥

अग्निविहरणादिप्रकाशकानां तत्रैव विनियोगाधिकरणम् ॥ ४ ॥

**त[1]थोत्थानविसर्जने ॥ ४ ॥**

उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरेति व्रतं कृणुतेति वाचं विसृजति अत्रापि कालार्थ एव संयोगो नाङ्गाङ्गिभावः ॥ ४ ॥

सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् ॥ ५ ॥

**सूक्त[3]वाके च कालविधिः परार्थत्वात्[4] ॥ ५ ॥**

सूक्तवाकेन प्रस्तरमनुप्रहरतीत्यत्र सूक्तवाककाल इत्यर्थो न तु सूक्तवाकस्य प्रहरणाङ्गत्वं दृष्टदेवताप्रकाशकत्वेन कृतार्थत्वादिति प्राप्ते,—तृतीयाश्रुत्या वचनेनार्थस्यापि विनियोगः । एवं च सूक्तवाकदेवतानां प्रहरणसंबन्धात्तस्य होम[2]रूपत्वमिति सिद्धान्तः ॥ ५ ॥

अर्थानुसारेण सूक्तवाकविनियोगाधिकरणम् ॥ ६ ॥

**कृ[5]त्स्नोपदेशादुभयत्र सर्ववचनम् ॥ ६ ॥**

दर्शे पूर्णमासे च सकलसूक्तवाकप्रयोग इति प्राप्ते,—पूर्णमासीदेवताप्रकाशकभागस्यैव पूर्णिमायाममावास्यादेवताप्रकाशकभागस्यैव चामावास्यायां प्रयोग इष्टदेवताप्रकाशनार्थत्वात् । अन्यथा देवताप्रकाशनस्यादृष्टार्थतापत्तेरिति सिद्धान्तः ॥ ६ ॥

काम्ययाज्यानुवाक्यानां काम्याङ्गताधिकरणम् ॥ ७ ॥

**लि[6]ङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ ७ ॥**

काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवताका इष्टयः क्रमेण समाम्नाताः । काम्य-

---

१ यथावघ्नन्निति कालोपलक्षकं तथोत्थानविसर्जनेऽपि काललक्षके इत्यर्थः । सिद्धान्तसूत्रम् । २ ब्राह्मणवाक्येन विनियोगेऽपि गार्हपत्यशब्दवन्न द्वितीयाश्रुतिरस्त्यतः प्रबलेन लिङ्गेनैव विनियोग इति सुबोधिनी । ३ सूक्तवाकपदघटितवाक्ये सूक्तवाकेनेति तृतीयान्तेन तत्कालविधानं सूक्तवाकप्रस्तरयोर्देवतास्तुतिस्रुग्धारणार्थत्वादित्यर्थः । पूर्वपक्षसूत्रम् । ४ द्रव्यदेवतयोः सत्त्वात् । ५ सूक्तवाकेनेति वाक्येन कृत्स्नस्याङ्गत्वश्रवणात्पौर्णमास्याममावास्यायां च सर्वमन्त्रपाठः कार्य इत्यर्थः । पूर्वपक्षसूत्रम् । ६ कामनापदघटितेष्टिकाण्डसंबन्धिविधिवाक्येषु लिङ्गक्रमसमाख्याभिर्विनियोगो न लिङ्गमात्रेणेत्यर्थः । सिद्धान्तसूत्रम् ।

याज्यानुवाक्याकाण्डं तेनैव क्रमेण समाम्नातम् 'इन्द्राग्नी रोचना दिव' इत्यादि। तत्र मन्त्रकाण्डस्य लिङ्गात्सर्वकर्मसु विनियोग इति प्राप्ते,—क्रतुसंबन्धं विना लिङ्गमात्रस्याविनियोजकत्वात् क्रमसमाख्यानाभ्यां काम्येष्टिसंबन्धावगमात्तत्रैव विनियोग इति सिद्धान्तः॥ ७॥

आग्नीध्रोपस्थाने प्राकृतमन्त्रविनियोगाधिकरणम्॥ ८॥

अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्॥ ८॥

ज्योतिष्टोमे आग्नेय्याग्नीध्रमुपतिष्ठत इति श्रुतं तत्र आग्नेयी या काचिद्ग्राह्या न तु प्रकरणपठिता तस्याः स्तोत्रादौ विनियुक्तत्वेन निराकाङ्क्षत्वादिति प्राप्ते,—प्रकरणपठितैव अग्न आयाहि वीतय इत्यादिका ग्राह्या तस्या ज्योतिष्टोमापूर्वसाधनत्वस्य क्लृप्तत्वादुपस्थानरूपद्वारमात्रसंबन्धे लाघवादन्यत्रोभयकल्पने गौरवादिति सिद्धान्तः॥ ८॥

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम्॥ ९॥

लिङ्ग[2]समाख्याभ्यां भक्षार्थताऽनुवाकस्य॥ ९॥

भक्षेहि माविशेत्यादिमन्त्रस्य भक्षमात्रे विनियोगो भक्षानुवाकसमाख्यानादिति प्राप्ते,—ग्रहणसम्यग्जरणादौ लिङ्गाद्विभज्य विनियोगो ग्रहणादेरविधानेऽप्यनुष्ठेयत्वाविशेषादिति सिद्धान्तः॥ ९॥

मन्द्राभिभूतिरित्यादिमन्त्राणामेकवाक्यत्वाधिकरणम्॥ १०॥

[3]गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्॥ १०॥

मन्द्राभिभूतिरित्यादितृप्यत्वित्यन्तं लिङ्गात्तृप्तावेव विनियुज्यत इति प्राप्ते,—तृप्तेर्भक्षानुनिष्पन्नत्वेनाननुष्ठेयत्वात्तृप्तिविशिष्टभक्षप्रकाशन एव विनियोग इति सिद्धान्तः॥ १०॥

इन्द्रपीतस्येत्यादीनामूहेन यावद्भक्षेषु विनियोगाधिकरणम्॥ ११॥

लिङ्ग[4]विशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्॥ ११॥

भक्षमन्त्रे इन्द्रपीतस्येति श्रूयते अत ऐन्द्रप्रदानेष्वेवायं मन्त्रः अनैन्द्रा-

---

१ यस्य कस्यचित् क्रतोः सन्निधौ यो मन्त्रः सः प्रकृताप्रकृताङ्गमित्यर्थः। पूर्वपक्षसूत्रम्। २ भक्षप्रतिपादकानुवाकस्य लिङ्गसमाख्याभ्यां भक्षाङ्गत्वमित्यर्थः। पूर्वपक्षसूत्रम्। ३ मन्द्रशब्दाद्यवयवत्वविशिष्टो भक्षयामीति चरमावयवत्वविशिष्ट एको मन्त्रस्तृप्तिरूपगुणप्रकाशकत्वाद्वाक्ययोरेकार्थप्रतिपादकत्वादित्यर्थः। सिद्धान्तसूत्रम्। ४ प्रकृतिविकृतिभावरहितेषु मैत्रावरुणादिग्रहभक्षेषु मन्त्राभावो मन्त्रे इन्द्रपीतस्येति लिङ्गविशेषदर्शनादन्यत्र विनियोगाभावात्। पूर्वपक्षसूत्रम्।

णाममन्त्रकं भक्षणमित्येकः पक्षः । अनैन्द्रेष्वनूहेन मन्त्र इति द्वितीयः । तत्रोहंपक्षे सूत्रम् ॥ ११ ॥

पुनरभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ॥ १२ ॥

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं तद्विशेषत्वात् ॥ १२ ॥

ऐन्द्रसोमशेषयुक्तेषु चमसेषु मित्रावरुणादिभ्यः पुनः सोमो गृह्यते तद्भक्षणे इन्द्रमित्रावरुणपीतस्येति नोहः पूर्वदेवतासंबन्धापनयादिति प्राप्ते,—इन्द्रशेषसत्त्वेऽपि तस्य करिष्यमाणयागार्थत्वाभावात्पूर्वदेवतासंबन्धानपायादूहो यथोक्त इति सिद्धान्तः ॥ १२ ॥

पात्नीवतभक्षणे इन्द्रादीनामनूहाधिकरणम् ॥ १३ ॥

## पात्नीवते तु पूर्ववत् ॥ १३ ॥

ऐन्द्रवायवादीनां शेषा आग्रयणास्थाल्यां सन्ति पत्नीवद्देवतायै चाग्रयणात्सोमो गृह्यते तद्भक्षे इन्द्रवाय्वादीनामप्यूह इति प्राप्ते,—आग्रयणात् गृह्यमाणस्य सर्वस्य पात्नीवतत्वेन पूर्वदेवताविच्छेदान्नैन्द्रवाय्वाद्यूह इति सिद्धान्तः ॥ १३ ॥

पात्नीवतभक्षणे त्वष्टुरनुपलक्षणाधिकरणम् ॥ १४ ॥

## त्वष्टारं तूपलक्षयेत्पानात् ॥ १४ ॥

पात्नीवते त्वष्ट्रा सोमं पिब स्वाहेति त्वष्टुः साहित्यात्त्वष्टापि देवतोहितव्य इति प्राप्ते,—मन्त्रे त्वष्टुः साहित्येऽपि विधौ तद्धितेन केवलपत्नीवत एव देवतात्वावगमात्त्वष्टुः पानाप्रतीतेः पत्नीवन्मात्रमेव देवतोहितव्यो न त्वष्टेति सिद्धान्तः ॥ १४ ॥

पात्नीवतभक्षणे त्रिंशतामनुपलक्षणाधिकरणम् ॥ १५ ॥

## त्रिंशच्च परार्थत्वात् ॥ १५ ॥

---

१ इन्द्रपीतस्येत्यस्याद्युदात्ततया बहुव्रीहिसमासेनेन्द्रेण पीतः सोमो यस्मिन् सवन इति विगृह्य सवनपरतया एकार्थसमवायात्सर्वभक्षेषूह इति भावः । २ पुनरभ्युन्नीतसोमेषु ग्रहेषु इन्द्रमित्रावरुणादीनां सर्वेषामुपलक्षणमिन्द्राहुतिशिष्टेन सहैव सोमग्रहणहोमेन द्विदेवत्वादित्यर्थः । सिद्धान्तसूत्रम् । ३ पात्नीवतशेषभक्षणमन्त्रे द्विदेवत्वः ऊह्याः पूर्वाहुतसोमशेषसत्त्वेन द्विदेवत्यशेषविशिष्टत्वादित्यर्थः । पूर्वपक्षसूत्रम् । ४ पात्नीवतभक्षणे त्वष्टुरुपलक्षणं कर्तव्यं मन्त्रे त्वष्टुः सह पानबोधकलिङ्गसद्भावादित्यर्थः । पूर्वपक्षसूत्रम् । ५ सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्रेव सहगमनेऽपि तत्पात्राभावात्पानाप्रतीतेरिति भावः । ६ त्रयस्त्रिंशच्च नोपलक्ष्याः परार्थत्वादुत्पत्तिविधौ तेषामश्रुतत्वादित्यर्थः । सि० सू० ।

पात्नीवत एव पत्नीवतस्त्रिंशतं त्रींश्च देवानतुष्वधमावह मादयस्वेति याज्यामन्त्रे त्रयस्त्रिंशतां पानं विना अग्नेस्तन्मादयितृत्वासंभवात्तेषामपि देवतात्वमित्यूह इति प्राप्ते,—अग्नेरेव यजमानदेवतात्वमितरे त्वग्निदत्तेन माद्यन्तु नाम अतो न देवतात्वं तेषामिति नोहः ॥ १५ ॥

भक्षेऽनुवषट्कारदेवताद्युपलक्षणाधिकरणम् ॥ १६ ॥

## वषट्कारश्च कर्तृवत् ॥ १६ ॥

अनुवषट्कारदेवता अग्निरप्रधानदेवतत्वात्प्रकृताविव न कीर्तनीय इति सिद्धान्तः ॥ १६ ॥

अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥

## छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ १७ ॥

इदानीमिन्द्रपीतस्येत्यत्र प्रथमपक्षोऽभिधीयते अनैन्द्राणाममन्त्रकमेव भक्षणमिति सर्वेषां समानविधानत्वेन प्रकृतिविकारभावाभावात् एवं स्थिते पुनः कृत्वाचिन्ता ॥ १७ ॥

ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥ १८ ॥

## ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ १८ ॥

ऐन्द्राग्नप्रदानेऽपि इन्द्रपीतस्येति भवति इति प्राप्ते,—पानलक्षितस्य दानस्योभयविषयत्वान्न मन्त्रः किं तु केवलैन्द्रप्रदान एवेति ॥ १८ ॥

गायत्रं छन्द इत्यादीनामनेकछन्दस्के विनियोगाधिकरणम् ॥ १९ ॥

## छन्दश्च देवतावत् ॥ १९ ॥

मन्त्रे गायत्रच्छन्दस इति श्रवणाद्यत्र प्रदाने गायत्रमेव छन्दस्तत्र मन्त्रः स्यादिति प्राप्ते,—केवलगायत्रछन्दस्कप्रदानाभावान्नानाछन्दस्केऽपि मन्त्र इति सिद्धान्तः ॥ १९ ॥

---

१ अनुवषट्कारदेवताऽपि कर्तृवद्धोतृवन्नोपलक्षणीयः। सि० सू०। २ प्रकृतिविकृतिभावो नेति शेषः। अभिषवादिसोमधर्माणां प्रकृतिविकृतिभावो न सर्वयागोद्देश्यत्वात्, जगतीच्छन्दनिषेधोऽपि वाचनिक इत्यर्थः। द्वि. पू. ३ ऐन्द्राग्नशेषभक्षणे त्विन्द्राग्निभ्यां पीतेऽपीन्द्रपीतत्वरूपलिङ्गसद्भावात्समन्त्रं स्यात्। देवदत्तयज्ञदत्तयोर्माता दत्तमातेतिवदनूहेऽपि समन्त्रं पठितुं शक्यत्वादित्यर्थः। पू. सू.। ४ देवतायाः पानकर्तृत्वाभावाद्दाने पाधातोर्लक्षणेति भावः। ५ समुदायपर्याप्तोद्देश्यताकत्वात्। ६ पूर्वाधिकरणदेवतावद्गायत्रादिछन्दो यत्र तत्रैव भक्षमन्त्र इत्यर्थः। पू.

एकादशाधिकरणोक्तस्योपसंहाराधिकरणम् ॥ २० ॥

**[1]सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ २० ॥**

स्थितादुत्तरम्—इन्द्रेण पीतः सोमो यस्मिन्सवने तत्संबन्धिनः सोमस्य भक्षणं मन्त्रेणोच्यते तादृशाश्च सर्वे सोमा इति सर्वेषां समन्त्रकं भक्षणमिति सिद्धान्तः ॥ २० ॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## तृतीयाध्यायस्य तृतीयः पादः ।

उच्चैष्ट्वादीनां वेदधर्मत्वाधिकरणम् ॥ १ ॥

**[2]श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥**

अग्नेर्ऋग्वेद इत्याद्युपक्रम्य तस्मादुच्चैर्ऋचा क्रियत इत्यादिश्रुतम् । अत्र उच्चैष्ट्वादयो ऋगादिमन्त्रधर्मा उपक्रमे वेदस्तुतिस्तु विधिवशेन व्याख्येयेति प्राप्ते,—असंजातविरोध्युपक्रमानुरोधेन वेदसंबन्धिविधिप्रतीतेर्विधेश्च स्तुतिकल्प्यत्वात्तदेकवाक्यतानुसारेण ऋगादिशब्दानां तत्प्रायवेदलक्षणया ऋग्वेदादिविहितकर्मणि उच्चैष्ट्वादिविधिरिति सिद्धान्तः ॥ १ ॥

आधाने गानस्योपांशुताधिकरणम् ॥ २ ॥

**[3]गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ २ ॥**

याजुर्वैदिकमाधानं तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधिः । तत्र सामविधिनिबन्धनस्य उच्चैष्ट्वस्यानुष्ठानमिति प्राप्ते,—साङ्गस्याधानस्य यजुर्वेदविहितत्वात्प्रधानानुसारेणोपांशुत्वमेव बलवदिति सिद्धान्तः । अथवा यस्य मन्त्रस्य वेदान्तरे पाठः वेदान्तरे च विनियोगस्तत्र प्रथमोपस्थितत्वादुत्पत्तिनिबन्धनस्वर इति प्राप्ते,—क्रियत इत्यनुष्ठानप्रतीतेस्तस्य विध्यधीनत्वाद्विनियोजकवेदस्वर इति सिद्धान्तः ॥ २ ॥

---

१ ऐन्द्राणामनैन्द्राणां सर्वेषामेकमन्त्रत्वमविकृतत्वं पाधातोस्त्यागोपलक्षकत्वादित्यर्थः । सिद्धान्तोपसंहारसूत्रम् । २ श्रुतेरुच्चैष्ट्वादिधर्मस्य जाताधिकारः जातावधिकार इति व्युत्पत्त्या जातिपरकत्वाज्जातौ शक्तिरिति भावः । पू० सू० । ३ गुणप्रधानधर्मविरोधे गुणस्य प्रधानार्थत्वान्मुख्यानुसारेण वेदधर्मो नेय इत्यर्थः । सि० सू० ।

ज्योतिष्टोमस्य याजुर्वेदिकताधिकरणम् ॥ ३ ॥

## भूयस्त्वेनोभयश्रुति[1] ॥ ३ ॥

वेदद्वये श्रुतस्य ज्योतिष्टोमस्य यजुर्वेदेऽङ्गबाहुल्यश्रवणाद्विधिः सामवेदे गुणार्थं श्रवणमत उपांशुत्वमेव यजुर्वेदनिबन्धनम् ॥ ३ ॥

प्रकरणस्य विनियोजकताधिकरणम् ॥ ४ ॥

## [2]असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ४ ॥

प्रयाजादीनां फलाश्रवणाद्विश्वजिन्न्यायेन स्वर्गः फलं रात्रिसत्रन्यायेन वा आर्थवादिकं शत्रुपराजयरूपं फलमिति प्राप्ते,—दर्शपूर्णमासयोरितिकर्तव्यताकाङ्क्षा प्रजायाजादीनां च फलाकाङ्क्षेति प्रकरणात्तदङ्गमेवेति सिद्धान्तः ॥ ४ ॥

क्रमस्य विनियोजकताधिकरणम् ॥ ५ ॥

## [4]क्रमश्च देशसामान्यात् ॥ ५ ॥

दन्धिर्नामासीति मन्त्रस्य नोपांशुयाजमात्राङ्गत्वं लिङ्गप्रकरणयोराग्नेयादिष्वपि साम्यादिति प्राप्ते,—यथासंख्यरूपक्रमादुपांशुयाजमात्राङ्गत्वमिति सिद्धान्तः । संनिधिरूपक्रमात्तु सान्नाय्यपात्रशुन्धनाङ्गत्वं शुन्धध्वमितिमन्त्रस्येति ज्ञेयम् ॥ ५ ॥

समाख्याया विनियोजकताधिकरणम् ॥ ६ ॥

## [5]समाख्या चैवं तदर्थत्वात् ॥ ६ ॥

आध्वर्यवादिसमाख्यया अध्वर्य्वादीनां तदङ्गत्वं न त्वनियम इति सिद्धान्तः ॥ ६ ॥

---

१ यस्य कर्मणो वेदद्वये विधानं तत्राङ्गबाहुल्येन तद्वेदपरत्वमवधार्य तदनुसारेण स्वरनिर्णय इत्यर्थः । सि० सू० । २ श्रुतिलिङ्गवाक्यैरसंयुक्तमुभयाकाङ्क्षारूपात्प्रकरणाद्विनियुज्यते, प्रधानस्य कथंभावाकाङ्क्षासत्त्वादित्यर्थः । सिद्धान्तसूत्रम् । ३ स्वार्थबोधसमाप्तानां वाक्यानामङ्गाङ्गित्वाकाङ्क्षायां प्रकरणवशादेकवाक्यतेति भवति प्रकरणस्य विनियोजकत्वम् । ४ क्रमो नाम स्थानं मन्त्रविनियोजकं देशैक्यादित्यर्थः। सिद्धान्तसूत्रम् । क्रमो नाम स्थानं, तद्द्विविधम्; पाठसादेश्यमनुष्ठानसादेश्यं च । पाठसादेश्यमपि यथासंख्यपाठसंनिधिपाठभेदेन द्विधा । यथासंख्यपाठस्य दन्धिर्मन्त्र उदाहरणं, संनिधिपाठस्य शुन्धनमन्त्र इति विवेकः । ५ समाख्यापि विनियोजिका क्रियाकर्तृसंबन्धार्थत्वादित्यर्थः । सिद्धान्तसूत्रम् ।

श्रुत्यादीनां पूर्वपूर्वप्राबल्याधिकरणम् ॥ ७ ॥

## श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ ७ ॥

इदानीं श्रुत्यादीनां बलाबलं चिन्त्यते । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र इन्द्रप्रकाशकत्वलिङ्गादिन्द्रोपस्थाने विनियोगो न तु गार्हपत्योपस्थाने अस्यापि बाधितार्थबोधनायोगादिति प्राप्ते,—गौण्यापि ऐन्द्रमन्त्रस्य गार्हपत्यप्रकाशकत्वेन बाधाभावाच्छ्रुत्या लिङ्गं बाध्यते श्रुतेः साक्षादेवाङ्गताबोधकत्वाल्लिङ्गस्य त्वशब्दत्वाच्छ्रुतिकल्पनयेति पारम्पर्यादङ्गताबोधकत्वम्, अतः श्रुतिर्बलीयसीति सिद्धान्तः ।

लिङ्गवाक्ययोस्तु 'स्योनं ते' मन्त्रे विरोधः । तत्र वाक्यात्सदनविशिष्टसादनप्रतीतेस्तत्र विनियोग इति प्राप्ते,—लिङ्गाद्विभज्यैव विनियोगः लिङ्गस्य शीघ्रं श्रुतिकल्पकत्वाद्वाक्यस्य तु लिङ्गकल्पनाद्वारा तथात्वात् । सदनप्रकाशकभागे हि सदनरूपविशेषणद्वारा सादनप्रकाशकत्वं कल्प्यं सदने तु तत्क्लृप्तमेव अतो विप्रकर्षाद्वाक्यं दुर्बलमिति सिद्धान्तः ।

वाक्यप्रकरणयोर्विरोधे सूक्तवाक उदाहरणम् । तत्र देवतापदं निष्कृष्य पर्वद्वये प्रयुज्यते तदेकवाक्यतापन्नमिदं हविरजुषेतामित्यादि तूभयत्र प्रकरणाविशेषात्प्रयोज्यमिति प्राप्ते,—क्लृप्तैकवाक्यतया तत्तद्देवतापदं यत्र तत्रैव तच्छेषभूतं प्रयोज्यं न त्वन्यत्र । वाक्येन हि विशेषणद्वारा लिङ्गप्रकाशकत्वरूपं कल्प्यते न श्रुतिरिति संनिकर्षः । प्रकरणेन त्वक्लृप्तवाक्यं कल्प्यं तेन लिङ्गं तेन श्रुतिरिति विप्रकर्षात्प्रकरणस्य दौर्बल्यमिति सिद्धान्तः ।

स्थानप्रकरणयोस्तु विरोधे राजसूयान्तर्गताभिषेचनीययागसंनिधौ विदेवनादय उदाहरणम् । ते संनिधानादभिषेचनीयमात्राङ्गमिति प्राप्ते,—प्रकरणाविशेषात्सर्वार्थाः । प्रकरणापेक्षया संनिधानस्य श्रुतिविप्रकर्षाद्दौर्बल्यमिति सिद्धान्तः ।

स्थानसमाख्ययोर्विरोधे तु शुन्धध्वमिति मन्त्र उदाहरणम् । पौरोडाशिक-

---

१ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां विरुद्धयोर्द्वयोरेकत्र संनिपाते पूर्वपूर्वापेक्षयोत्तरोत्तरस्य दौर्बल्यमुत्तरोत्तरेण पूर्वपूर्वाक्षेपे विनियोगस्य दूरस्थत्वेन बहिरङ्गत्वादित्यर्थः । सिद्धान्तसूत्रम् ।

समाख्यावशात्पुरोडाशपात्रशुन्धनाङ्गमिति प्राप्ते,—संनिधानात्सांनाय्यपात्रमात्रशुन्धनाङ्गं समाख्यया हि पुरोडाशमन्त्रयोः संवन्धः कल्प्यः, संनिधाने तु क्लृप्तः संवन्ध एकस्थानरूपः, अतो विप्रकर्षात्समाख्या दुर्वलेति सिद्धान्तः ॥ ७ ॥

द्वादशोपसत्ताया अहीनाङ्गताधिकरणम् ॥ ८ ॥

### अहीनो वा प्रकरणाद्गौणः[1] ॥ ८ ॥

ज्योतिष्टोमे तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति श्रुतम् । तत्राहीनस्येत्यनेन न हीयत इति व्युत्पत्त्या प्रकृतज्योतिष्टोम एव द्वादशोपसदो विकल्पेन विधीयन्ते इति प्राप्ते,—अहीनशब्दस्याहर्गणेषु रूढिप्रावल्यात्तत्रैव द्वादशोपसत्त्वविधिः । रूढिश्च 'अह्नः खः क्रतौ' इत्यनुशासनाद्गम्यत इति सिद्धान्तः ॥ ८ ॥

कुलायादौ प्रतिपदोरुत्कर्षाधिकरणम् ॥ ९ ॥

### द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य[2] ॥ ९ ॥

ज्योतिष्टोमे युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् एते असृग्रमिन्दव इति वहुभ्यो यजमानेभ्य इति श्रुतं, स्तोत्रादिभूता ऋक् प्रतिपदुच्यते । अयं च विधिर्ज्योतिष्टोम एव । तत्रापि कदाचिदशक्त्या द्विबहुयजमानसंभवादिति प्राप्ते,—कर्त्रैकत्वस्यानुपादेयत्वान्न तस्य त्यागो युक्तः उपादेय एव यथाशक्त्युपवन्धात् अतो विकृतावुत्कर्ष इति सिद्धान्तः ॥ ९ ॥

जाघन्याः प्रकरणादुत्कर्षाधिकरणम् ॥ १० ॥

### जाघनी चैकदेशत्वात्[3] ॥ १० ॥

दर्शपूर्णमासयोः जाघन्या पत्नीः संयाजयन्तीति श्रुतं, तत्र दर्शपूर्णमासयोर्जाघन्यभावात् यत्र पशौ जाघनी विद्यते तत्संस्कारकत्वेन पत्नीसंयाजविधिः आरादुपकारापेक्षया संनिपत्योपकारस्य लघुत्वादेकदेशद्रव्यत्वेन परप्रयुक्तताप्रतीतेश्चेति प्राप्ते,—जाघनीशव्दस्यावयवगतजातिवचनत्वान्नोत्तरार्धादिशव्दवत्सापेक्षत्वमतः पत्नीसंयाजाङ्गत्वेन तृतीयाश्रुत्या विधानमिति सिद्धान्तः ॥ १० ॥

---

१ द्वादशाहीनस्येत्येतद्वाक्यघटकोऽहीनशब्दो गौणो यौगिको ज्योतिष्टोमप्रकरणपाठादित्यर्थः । न हीन इति योगः । पू० सूत्रम् । २ द्वित्ववहुत्वयुक्तं मन्त्रद्वयं प्रकरणादुत्कृष्यते ज्योतिष्टोमे कर्तृवहुत्वस्याविधानादित्यर्थः । सिद्धान्तसूत्रम् । ३ जाघनीविधानं पशावुत्कृष्टं स्यात्पुच्छैकदेशरूपायाः जाघन्याः पश्वङ्गत्वादित्यर्थः । पू० सू० ।

संतर्दनस्य संस्थाविशेषे निवेशाधिकरणम् ॥ ११ ॥

## संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ ११ ॥

ज्योतिष्टोमे न संतृणत्तीत्यभिषवफलकयोरसंतर्दनं विधाय अथो खलु दीर्घसोमे संतृद्याद्धृत्या इति श्रुतं, संतर्दनं नाम संघट्टनं संतर्दनासादनयोः प्रकृतौ विकल्पः तत्रापीष्टाद्यपेक्षया दीर्घत्वसंभवादिति प्राप्ते,—सोमगत-दीर्घत्वस्य सोमान्तरापेक्षत्वाद्विकृतावुत्कर्ष इति सिद्धान्तः ॥ ११ ॥

प्रवर्ग्यनिषेधस्य प्रथमप्रयोगविषयत्वाधिकरणम् ॥ १२ ॥

## संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ १२ ॥

ज्योतिष्टोमेऽस्ति प्रवर्ग्यः पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्तीति तं प्रकृत्य श्रूयते तन्न प्रथमयज्ञे प्रवृञ्ज्यादिति। तत्र प्रथमयज्ञशब्देन ज्योतिष्टोमोऽभि-धीयते एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति श्रुतेः अतो ज्योतिष्टोमसर्वप्रयोगेषु निषेध इति प्राप्ते,—प्रथमशब्दस्यारम्भवाचित्वाज्ज्यो-तिष्टोमप्रथमप्रयोग एव निषेधः अग्निष्टोमे प्रवृणक्तीति वाक्यं तु अनूचा-नविषयं कामं तु योऽनूचानस्तस्य प्रवृञ्ज्यादिति श्रुतेः। एवं चाग्निष्टोमप्र-थमप्रयोगे अनूचानस्य नित्यं प्रयोगः। अन्येषां त्वप्रयोग एवेति सिद्धान्तः ॥ १२ ॥

पौष्णपेषणस्य विकृतौ निवेशाधिकरणम् ॥ १३ ॥

## पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ १३ ॥

दर्शपूर्णमासयोः 'पूषा प्रपिष्टभागः' इति पेषणं, प्रकरणे पूषाभावाद्यत्र पूषा तत्र वाक्यादुत्कृष्यत इति प्राप्तिसूत्रमेतत् ॥ १३ ॥

पौष्णपेषणस्य चरावेव कर्तव्यताधिकरणम् ॥ १४ ॥

## तत्सर्वार्थमविशेषात् ॥ १४ ॥

---

१ संतर्दनमभिषवणफलकयोः संयोगः प्रकृतिसंयोगी दीर्घस्य यजमानस्य सोम इति व्युत्पत्त्या प्रकृतावपि दीर्घसोमत्वरूपार्थसद्भावात्, क्रयणवत्, यथा गवा क्रीणा-तीत्यनेन क्रयनिष्पत्तौ वासःप्रभृतीनां क्रये विकल्पस्तद्वदसंतर्दनेन संतर्दनविकल्प इत्यर्थः। पूर्वपक्षसूत्रम्। २ इष्ट्याद्यपेक्षया दीर्घत्वमव्यभिचारान्न सोमविशेषणमतः सोमान्तरापेक्षमिति भावः। ३ प्रथमादिसंख्याघटितं वाक्यं प्रथमत्वविशिष्टक्रतुसं-बन्धि प्रकरणादनृतवदननिषेधवदित्यर्थः। पू० सू०। ४ विधिनिषेधबोधकवचनद्व-यबलेन व्यवस्थितविकल्पाश्रयणेनैषा व्यवस्थेति तत्त्वम्। ५ पूषदेवसंबन्धिपेषणं विकृतौ स्यात्प्रकृतौ यागाङ्गत्वेन पूष्णः अचोदितत्वादित्यर्थः।

तत्पेषणं चरौ पशौ पुरोडाशे च विधीयते अविशेषादिति प्राप्ते,—पशावाकृतिनाशापत्तेः पुरोडाशे नित्यप्राप्तत्वाच्चरावेव विधीयते द्वारलोपान्निवृत्तस्य प्रतिप्रसवे लाघवादिति सिद्धान्तः ॥ १४ ॥

पौष्णपेषणस्यैकदेवत्ये एव निवेशाधिकरणम् ॥ १९ ॥

एकस्मिन्नेकसंयोगात् ॥ १५ ॥

पेषणं यत्र केवलपूषा तत्रैव भवति न तु यत्रान्यसहितः सामर्थ्यादिति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

## तृतीयाध्यायस्य चतुर्थः पादः।

निवीतस्यार्थवादताधिकरणम् ॥ १ ॥

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥

दर्शपूर्णमासयोः श्रुतं निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इति। तत्र निवीतं शुद्धमनुष्यधर्मः क्रतुयुक्तपुरुषधर्मो वा शुद्धक्रतुधर्मो वा मनुष्यप्रधानान्वाहार्यदानादिप्राकरणिकधर्मो वा स्वतन्त्रमनुष्यप्रधानातिथ्यादिधर्मो वेति क्त्वाचिन्तया पक्षाः। उपवीतविध्येकवाक्यत्वात्तदर्थवादत्वमिति तु सिद्धान्तः ॥ १ ॥

उपवीतस्य दर्शपूर्णमासयोर्निवेशाधिकरणम् ॥ २ ॥

उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ २ ॥

---

१ चरौ त्वविघातकं प्रपिष्टचरावपि पाकवैशद्येन चरुशब्दप्रयोगाच्चोदकप्राप्तं च तत्प्रयोजनाभावान्निवर्तमानं प्रतिप्रसूयत इति लाघवात्तत्रैव पेषणमिति शास्त्रदीपिका। २ पेषणं केवलपूषदेवताके चरावेव न द्विदैवत्ये पूषा प्रपिष्टभाग इत्यत्र एकत्वविशिष्टस्य देवतात्वादित्यर्थः। सिद्धान्तसूत्रम्। ३ निवीतविधिर्मनुष्याङ्गं षष्ठ्यन्तमनुष्यशब्दस्य मनुष्यप्राधान्यबोधकत्वादित्यर्थः। पू०सू०। ४ षष्ठी श्रुत्येत्यध्याहारः। ५ श्रुतिप्रकरणयोरविरोधादित्यध्याहारः। ६ प्रयाजादिवत्। मनुष्यग्रहणं कर्तृसंबन्धानुवादकम्। ७ अनुवादवैयर्थ्यप्राचीनावीतोपवीतवैषम्यप्रकरणानुग्रहैरिति शेषः। ८ प्राचीनावीतोपवीतयोः पितृदैवत्ये स्वातन्त्र्यवदित्यर्थः। ९ पुरुषार्थातिरिक्तपक्षाणां पूर्वपूर्वोपमर्देनोत्तरोत्तरोत्पत्त्या दुष्टत्वात्पुरुषार्थत्वे फलकल्पनाद्विध्येकवाक्यतापक्ष एव ज्यायानिति भावः। १० उपवीतं उपव्ययत इति विधिबोधितमुपवीतं यावत्कर्माङ्गं प्राचीनावीती दोहयेद्यज्ञोपवीती देवेभ्य इति लिङ्गदर्शनादित्यर्थः। पूर्वपक्षसूत्रम्।

उपवीतं सर्वदैवकर्माङ्गं मृताग्निहोत्रे प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयतीति लिङ्गदर्शनादिति प्राप्ते,—प्रकरणाद्दर्शपूर्णमासाङ्गत्वमेव लिङ्गं तु यथाप्राप्ति व्याख्येयमिति सिद्धान्तः ॥ २ ॥

उपवीतस्य विधित्वाधिकरणम् ॥ ३ ॥

## विधिर्वा स्यादपूर्वत्वात् ॥ ३ ॥

स्मृतिप्राप्तत्वादुपव्ययत इत्यनुवाद इति प्राप्ते,—क्रत्वर्थतया अप्राप्तत्वाद्विधिरिति सिद्धान्तः । अथवा पूर्वाधिकरण एव सर्वार्थतया स्मृतिप्राप्तस्यानुवाद इति पूर्वपक्षः । सिद्धान्तस्तूक्त एव । एवं चामृताग्निहोत्रे यज्ञोपवीती देवेभ्यो दोहयतीति विधिरेवेति ॥ स्थितं चापर्यवसितम् ॥ ३ ॥

पुरोदञ्च इत्यस्य अनुवादताधिकरणम् ॥ ४ ॥

## उदक्त्वं चापूर्वत्वात् ॥ ४ ॥

मृताग्निहोत्र एव ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रांस्तृणीयादित्यत्र ये पुरोदञ्च इत्यपि विधिरप्राप्तत्वादिति प्राप्ते,—अग्रवन्त्युदगग्राणीति स्मृतिप्राप्तत्वादनुवाद इति ॥ ॥ स्थितादुत्तरं—यज्ञोपवीती हीति प्राचीनावीतिस्तुत्यर्थो दर्शपूर्णमासगतस्यानुवाद इति सिद्धान्तः ॥ ४ ॥

यज्ञोपवीतीहीत्यस्यानुवादताधिकरणम् ॥ ५ ॥

## विधिस्तु धारणेऽपूर्वत्वात् ॥ ५ ॥

मृताग्निहोत्रे श्रूयते अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति तत्रोपरिधारणमनुवादः हविष आच्छादनस्याचारप्राप्तत्वादिति प्राप्ते,—आच्छादनासमर्थत्वात्स्रुग्दण्डे समिधमुपसंगृह्येति च श्रवणेनाच्छादनासंभावादप्राप्ते विधिरिति सिद्धान्तः ॥ ५ ॥

दिग्विभागस्यार्थवादताधिकरणम् ॥ ६ ॥

## दिग्विभागश्च तद्वत् ॥ ६ ॥

प्राचीनवंशं करोतीति विधाय श्रूयते प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या इति । अत्र मनुष्यवाक्ये अभजन्तेति पुराकल्पेन प्रशंसया सुकल्पो विधिरिति प्राप्ते,—निवीतवदर्थवादत्वमेवेति सिद्धान्तः ॥ ६ ॥

---

१ उपव्ययत इति विधिरपूर्वत्वादप्राप्तप्रापकत्वादित्यर्थः । सिद्धान्तसूत्रम् । २ उदक्त्वद्युक्तं उत्तराग्रानित्यादि विधिरप्राप्तप्रापकत्वादित्यर्थः । पूर्वपक्षसूत्रम् । ३ धारणे समिद्धारणे विधिरेव अप्राप्तार्थत्वादित्यर्थः । सिद्धान्तसूत्रम् । ४ प्राचीं देवा व्यभजन्त इत्यादिदिग्विभागो विधिरपूर्वार्थत्वादित्यर्थः । पूर्वपक्षसूत्रम् ।

परुपि दितादीनामनुवादताधिकरणम् ॥ ७ ॥

पैरुषिदितपूर्णघृतविदग्धं च तद्वत् ॥ ७ ॥

यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणां, तथा यत्पूर्णं तन्मनुष्याणां, तथा घृतं देवानां निष्पक्कं मनुष्याणामित्यादौ अन्तरेत्यादिविशेषनियममात्रविधौ लाघवादिति शङ्कायां,—निवीतवद्देवार्थवादत्वमिति सिद्धान्तः ॥ ७ ॥

नानृतमित्यस्य क्रतुधर्मताधिकरणम् ॥ ८ ॥

अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ ८ ॥

दर्शपूर्णमासयोर्नानृतं वदेदिति निषेधः पुरुषार्थ एव स्मृतिमूलभूतः, अथवा दर्शपूर्णमासकर्तृधर्मः प्रकरणात् आख्यातेन च कर्त्रभिधानादिति स्मृतिप्राप्तस्यानुवादः, अथवा प्रयाजादिवत्क्रत्वर्थं एवानुवाद इति प्राप्ते,—क्रत्वर्थत्वेनाप्राप्तत्वात्तु विधिरेवेति सिद्धमाख्यातेन कर्तुरनभिधानान्न पुरुषार्थत्वमिति ॥ ८ ॥

जञ्जभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम् ॥ ९ ॥

अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ ९ ॥

दर्शपूर्णमासयोर्जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति मन्त्रवचनं वाक्यात्पुरुषार्थं फलं तु प्राणापानावेवात्मन् धत्त इत्यार्थवादिकमिति प्राप्ते,—क्रतुयुक्तपुरुषधर्मत्वमविरोधादिति सिद्धान्तः ॥ ९ ॥

---

१ यत्परुषि दितं तद्देवानां, यत्पूर्णं तन्मनुष्याणां, घृतं देवानां यो विदग्धः स नैर्ऋत इत्यादिमहापितृयज्ञज्योतिष्टोमदर्शपूर्णमासयोः श्रुतानि निवीतवदर्थवादान्येवेति भावः। सिद्धान्तसूत्रम्। २ क्रतुसंयुक्तं क्रतुप्रकरणपठितमनृतवदननिषेधकवाक्यं नित्यानुवादः सत्यं वदेत्यादिनोपनयनवेलायामेवानृतवदननिषेधेन प्राप्तप्रापकत्वरूपानुवादत्वलक्षणाक्रान्तत्वादित्यर्थः। पू० सू०। ३ यत्पुरुषोपकारितया प्रसक्तं वदनं तत्तदपकार्येवेति निषेधवाक्यार्थः। तेन श्रुत्या प्रकरणबाधात् पुरुषार्थः प्रतिषेधः। स्मार्तप्रतिषेधस्याप्येतदेव मूलमिति भावः। ४ जञ्जभ्यमानोऽनुब्रूयादितिवत्। सोऽयं स्मार्तनिषेधानुवादः। स्मृत्या पुरुषस्योपनयनावधिमरणं यावन्निषिद्धेऽनृतवदने दर्शपूर्णमासयोरपि तत एव निषेधलाभेऽनुवादत्वस्यापरिहार्यत्वादिति भावः। ५ पुरुषः स्वार्थतयानृतवदनं वर्जयतीति स्वार्थत्वात् क्रतावपि प्राप्तमेव वर्जनमिति तत्त्वम्। ६ लः कर्मणीत्यादीनां कर्तुरेकत्वे लकारैकवचनमित्याद्यर्थादाख्यातानां भावनावाचितया कर्तुरनभिधानादिति हृदयम्। ७ जञ्जभ्यमानमन्त्रपाठः केवलपुरुषार्थः वाक्येन पुरुषार्थत्वप्रतीतेः अहीनपदश्रवणाद्द्वादशोपसदां प्रकरणविच्छेदवदित्यर्थः। पू० सू०।

अवगोरणस्य पुमर्थताधिकरणम् ॥ १० ॥

## शंयौ[1] च सर्वपरिदानात् ॥ १० ॥

तत्रैव यो ब्राह्मणायावगुरेत्तं शतेन यातयात्तस्माद्ब्राह्मणाय नावगुरेतेति अवगूरणं ताडनाय दण्डोद्यमनम्। अयं प्रतिषेधः क्रत्वर्थः फलाश्रवणादिति प्राप्ते,—यातयादिति प्रत्यवायश्रवणात्पुरुषार्थ इति सिद्धान्तः ॥ १० ॥

मलवद्वाससा न संवदेदित्यस्य पुमर्थताधिकरणम् ॥ ११ ॥

## प्रा[2]गपरोधान्मलवद्वाससः ॥ ११ ॥

तत्रैव मलवद्वाससा न संवदेदिति श्रुतं, मलवद्वासा रजस्वला। अयं प्रतिषेधः प्रकरणात्क्रत्वर्थ इति प्राप्ते,—तामपरुध्य यजेतेति वचनात् क्रतौ प्रसक्त्यभावात्पुरुषार्थ एवेति सिद्धान्तः ॥ ११ ॥

सुवर्णधारणस्य पुमर्थताधिकरणम् ॥ १२ ॥

## अप्र[3]करणे तु तद्धर्मस्ततो विशेषात् ॥ १२ ॥

अनारभ्याधीतं सुवर्णं हिरण्यं भार्यमिति हिरण्यधारणं क्रत्वङ्गं फलाश्रवणात्, क्रतुगतहिरण्यानुवादेन धारणविधिर्वा, हिरण्ये सुवर्णता विधिर्वेति प्राप्ते,—प्रकरणाभावात्पुरुषार्थमेव, फलं त्वार्थवादिकं दुर्वर्णोऽस्य भ्रातृव्य इति सिद्धान्तः ॥ १२ ॥

जयाहोमादीनां वैदिककर्माङ्गताधिकरणम् ॥ १३ ॥

## [4]शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ १३ ॥

येन कर्मणेर्त्सेत्तत्र जयान् जुहुयादिति जयादयो लौकिकवैदिकसकलकर्माङ्गमनारभ्याधीतत्वात्तस्मात्कृष्यादिनापीर्त्सेत्तत्राग्नौ जुहुयाज्जयानिति प्राप्ते,—कथंचिदाहवनीये जयानुष्ठानेऽपि क्षेत्रे कृषिराहवनीये च होम इति प्रधानभिन्नदेशत्वाद्वैगुण्यमतो वैदिक एवेति सिद्धान्तः ॥ १३ ॥

---

१ शंय्यूपक्रमवाक्यस्थनिषेधो न प्रकरणमात्रे यातयादित्यनेन क्रतुयुक्ततदितरसर्वब्राह्मणावगोरणसंबन्धितया यातनाप्रतीतेरित्यर्थः। सिद्धान्तसूत्रम्। २ मलवद्वाससः ऋतुमत्याः कर्मारम्भात्प्रागेव गृहेऽवरोधाद्बहिष्करणाद्वा अध्वर्योः न तया संवाद इत्यर्थः। सिद्धान्तसूत्रम्। ३ अनारभ्याधीतं सुवर्णधारणं पुरुषधर्मः क्रतुप्रकरणाधीतेभ्यो विलक्षणत्वादित्यर्थः। सिद्धान्तसूत्रम्। ४ अप्रकरणाधीतः अविशेषाल्लौकिकवैदिकसर्वकर्मशेष इत्यर्थः। पू० सू०।

वैदिकाश्वप्रतिग्रहे इष्टेः कर्तव्यताधिकरणम् ॥ १४ ॥

दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ १४ ॥

यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदितीष्टिरश्वदातुरिति वक्ष्यते । सा लौकिकेऽश्वदाने स्यात् तत्रैव दोषनिरासप्रयोजनात् वरुणपाशान्मुञ्चतीति । वैदिके तु विधिवशान्न दोषोऽस्तीति न तत्रेष्टिरिति प्राप्ते,—वरुणपाशरूपजलोदरदोषस्य लौकिकदाने प्रमाणाभावात् वैदिकेऽपि त्यागाद्दुःखदर्शनात्तदेव वरुणशब्देनोच्यते तस्य च मोचनं इष्टिविनोदेनेति वैदिकत्वसाम्यात्तत्रैवेष्टिः । किंच ' लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता । न चैकस्योभयार्थत्वं वैरूप्यादुपपद्यते' इति सिद्धान्तः ॥ १४ ॥

दातुर्वारुणेष्ट्यधिकरणम् ॥ १५ ॥

अचोदितं च कर्म भेदात् ॥ १५ ॥

इयमिष्टिः प्रतिग्रहीतुरेव प्रतिगृह्णीयादिति प्राप्ते,—प्रजापतिर्वरुणायाश्वमनयदित्यर्थवादे प्रजापतेर्दातुरुपक्रमात् स तं वारुणं चतुष्कपालमपश्यत्तन्निरवपदिति तस्यैवेष्टिकर्तृत्वश्रवणात्तदनुरोधेन प्रतिगृह्णीयादिति हेतुकर्तोच्यते इति सिद्धान्तः ॥ १५ ॥

वैदिकपानव्यापदि सौमेन्द्रचरुविध्यधिकरणम् ॥ १६ ॥

पानव्यापच्च तद्वत् ॥ १६ ॥

सौमेन्द्रं चरुं निर्वपेद्यः सोमं वमतीतीष्टिर्लौकिकवमने दोषाद्भवति वैदिके तु पानमात्रेणैव कृतार्थत्वान्न दोष इति प्राप्ते,—लोके वमनार्थमेव पानान्न दोषः । वैदिके तु सम्यग्जरणपर्यन्तपानवैगुण्यात्तत्रैव भवतीति सिद्धान्तः ॥ १६ ॥

सौमेन्द्रचरोः यजमानपानविषयताधिकरणम् ॥ १७ ॥

तत्सर्वत्राविशेषात् ॥ १७ ॥

---

१ अश्वप्रतिग्रहनिमित्ता वारुणेष्टिरैच्छिकरूपे लौकिके प्रतिग्रहे एव जलोदरव्याधिरूपदोषसंयोगात्, शास्त्रविहितत्वाद्वैदिकस्य तु तादृशप्रतिग्रह इत्यर्थः । पू० सू० । २ अचोदितमित्यस्याग्रे प्रतिग्रहीतुरिति शेषः, अविहितमिदमिष्टिरूपं कर्म प्रतिग्रहीतुरेव ददातिप्रतिगृह्णात्योर्भेदेन प्रकृते प्रतिगृह्णातेः प्रयोगादित्यर्थः पू० सू० । ३ सोमपानवमननिमित्तभूतेष्टिरपि लौकिकवमनविषयेत्यर्थः । पू० सू० । ४ तत् वमनं सर्वेषामृत्विजां यजमानस्य चेष्टिनिमित्तं स्यात्, विशेषानभिधानादित्यर्थः । पू० सू० ।

इयमिष्टिः सर्वेषां वमने स्यादिति प्राप्ते,—इष्टिवमनयोः समानकर्तृत्वश्रवणाद्यजमान एवेति सिद्धान्तः ॥ १७ ॥

आग्नेयाष्टकपालादीनां व्यवदानमात्रहोमाधिकरणम् ॥ १८ ॥

**सर्वप्रदानं हविषस्तदर्थत्वात् ॥ १८ ॥**

दर्शपूर्णमासयोः सकलपुरोडाशस्यैव प्रदानं व्यवदानवाक्यं तु द्विर्द्विरवदाय सकलहोम इति प्रकारपरमिति प्राप्ते,—व्यवदानप्रदानमात्रेण पुरोडाशस्य आग्नेयत्वोपपत्तेर्न द्रव्यानुरोधेन प्रधानावृत्तिरिति सिद्धम्। वार्तिके तु सकलपुरोडाशस्य देवतोद्देशेन त्यागः चतुरवत्तं जुहोतीति प्रक्षेपः संस्कारो विधीयते न तु होमे चतुरवत्तसाधनविधिः होमस्याप्राप्तत्वात्। एवंच वचनात् शेषकार्याणीत्युक्तम् ॥ १८ ॥

सर्वहविःशेषेण स्विष्टकृदद्ग्रहणाधिकरणम् ॥ १९ ॥

**अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् ॥ १९ ॥**

स्विष्टकृदादि कस्माच्चिदेकस्माद्धविषः कार्यमिति प्राप्ते,—संस्कारत्वात्सर्वेभ्य इति सिद्धान्तः ॥ १९ ॥

प्राथमिकप्रेपात्स्विष्टकृदादिप्रयोगाधिकरणम् ॥ २० ॥

**एकस्माच्चेद्याथाकाम्यमविशेषात् ॥ २० ॥**

---

१ यो वमति स स्वीयक्रतुवैगुण्यपरिहाराय चरुं कुर्यादित्यर्थबोधे यागकर्तुः वमनकर्तुश्चैक्याद्दक्षिणाक्रीतानामृत्विजां तत्र स्वत्वाभावात् कर्तुरेव चरुरिति भावः। २ यदाग्नेय इत्यादिविहितः पुरोडाशः सर्वमवदानमग्नये जुष्टमित्यनेन निखिलहविषः प्रदानार्थत्वादित्यर्थः। पू० सू०। ३ हविषां प्रायेण होमप्रयोजनत्वादभिमुखा वै देवा इत्यर्थवादाच्च सकलस्य हविषः देवतोद्देशेन विहितत्वम्। तत्र चतुरवत्तं जुहोतीति वाक्यात्तावन्मात्रस्यैवाग्नौ होमः। तावतापि देवतासंबन्धो हविष उपपन्नः। एवं हि शेषात् स्विष्टकृते समवद्यतीत्यप्युपपद्यते। न च देवतोद्देशेन त्यक्ते पुरोडाशे तत्र स्वत्वाभावात्कथं स्विष्टकृदर्थत्वम्। वचनबलात्तावत्येव स्वत्वनिवृत्तेः। अत एव ऋत्विग्भ्योऽपि प्राशनार्थं पुरोडाशशेषः प्रतिपाद्यत इति सर्वमवदातम्। ४ एकस्मादेव कस्माच्चिद्धविषः स्विष्टकृदवदातव्यः शेषं प्रति हविषः अप्रयोजकत्वात्, शेषस्य गुणभूतत्वात् शेषकार्यं प्रति हविष अङ्गत्वादित्यर्थः। पू० सू०। ५ प्रतिपत्तिसंस्कारत्वादित्यर्थः। अयं भावः अकीर्णकरस्य प्रतिपत्तिसापेक्षस्य शेषस्य प्रतिपत्तिरयं स्विष्टकृद्यागः। एवं च यस्यैव नावदीयेत तस्यैव प्रतिपत्तिलोपप्रसङ्ग इति सर्वेभ्योऽवदानम्। ६ चेद्यद्येकस्मादवदानं तदा अस्मादेवेति विशेषनियामकाभावात् यथेच्छं यस्मात् कस्माच्चिदवदातव्यमित्यर्थः। पू० सू०।

यदैकस्मात्तदा अनियम इति प्राप्ते,—मुख्यस्य प्रथमोपस्थितत्वात्तस्मादेवेति क्त्वाचिन्ता ॥ २० ॥

पुरोडाशविभागस्य भक्षार्थताधिकरणम् ॥ २१ ॥

भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ २१ ॥

चतुर्धाकृतहविर्दानमृत्विग्भ्यस्तदानत्यर्थमिति प्राप्ते,—दत्ते स्वातन्त्र्याभावाच्छेषप्रतिपत्त्यर्थमिति सिद्धान्तः ॥ २१ ॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## तृतीयाध्यायस्य पञ्चमः पादः ।



ध्रुवाज्यादिभिः शेषकार्याननुष्ठानाधिकरणम् ॥ १ ॥

आज्याच्च सर्वसंयोगात् ॥ १ ॥

आज्यादपि शेषकार्याणीति प्राप्ते,—उपस्तरणाद्युपयोगित्वेनाकृतार्थत्वान्नेति सिद्धान्तः ॥ १ ॥

साकंप्रस्थायीये स्विष्टकृदननुष्ठानाधिकरणम् ॥ २ ॥

साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् ॥ २ ॥

साकंप्रस्थायीये कुम्भीभिरभिक्रमणमात्रं होमस्तु जुह्वां चतुर्गृहीतस्येति शेषकार्यं स्यादिति प्राप्ते,—अभिक्रमणस्य होमार्थत्वात्कुम्भीभिरेव होम इति शेषाभावान्नेति सिद्धान्तः ॥ २ ॥

सौत्रामण्यां शेषाननुष्ठानाधिकरणम् ॥ ३ ॥

सौत्रामण्यां च ग्रहेषु ॥ ३ ॥

सौत्रामण्यां ग्रहेषु शेषाभावान्न शेषकार्यमित्यतिदेशः ॥ ३ ॥

सर्वपृष्ठेष्टौ स्विष्टकृदादीनां सकृत्प्रयोगाधिकरणम् ॥ ४ ॥

द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ ४ ॥

---

१ दानबोधकपदाभावात् इदं ब्रह्मण इत्यादि ऋत्विक् परिक्रयणार्थमित्यर्थः । पू० सू० । २ ध्रुवास्थाज्यस्य सर्वयागाङ्गत्वात् स्विष्टकृदर्थमवदानमित्यर्थः । पू० सू० । ३ कृतोपयोगस्य प्रतिपत्त्यर्हत्वादिति हृदयम् । ४ साकंप्रस्थायीये कृते स्विष्टकृदिडाद्यवदानमुपांशुयागवच्छेषाभावान्न कर्तव्यमित्यर्थः । सि० सू० । ५ सौत्रामण्यां ग्रहेषु निखिलस्य होमान्न स्विष्टकृदिडे भवत इत्यर्थः । सि० सू० । ६ द्रव्यस्य पुरोडाशस्यैक्येऽपि कर्मणो भेदात्प्रतिकर्म स्विष्टकृदाद्यनुष्ठेयं प्रतिप्रधानं गुणावृत्तेरित्यर्थः । पू० सू० ।

सर्वपृष्ठायां षट् कर्माणि इन्द्राय रथन्तराय निर्वपतीत्यादीनि तत्र सर्वेषां एकं पुरोडाशं कृत्वा समन्ततोऽवदाय प्रधानानुष्ठानं तत्र स्विष्टकृदादिप्रधानभेदेन भिन्नं कार्यमिति प्राप्ते,—शेषस्य साधारण्यात् सकृत्कृते सर्वेषां कृतं भवतीति सिद्धान्तः ॥ ४ ॥

ऐन्द्रवायवग्रहे द्विः शेषभक्षाधिकरणम् ॥ ५ ॥

## ऐन्द्रवायवे[2] तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ ५ ॥

ऐन्द्रवायवे ग्रहे तु वचनाद्विर्भक्षणम् ॥ ५ ॥

होमे शेषभक्षाधिकरणम् ॥ ६ ॥

## सोमे[3] वचनाद्भक्षो न विद्यते ॥ ६ ॥

सोमस्य निःशेषहोमात् प्रमाणाभावाच्च न भक्षणमिति प्राप्ते,—अल्पं जुहोतीति वचनात् पुरस्तादैन्द्रवायवं भक्षयतीति वचनात् समाख्यावषट्कारहोमाभिषवरूपकारणाद्भक्ष इति सिद्धान्तः ॥ ६ ॥

चमसिनां शेषभक्षाधिकरणम् ॥ ७ ॥

## उद्गातृचमसमेकः[4] श्रुतिसंयोगात् ॥ ७ ॥

प्रोद्गातृणां चमस इति मन्त्रप्रसिद्ध्या समाख्यया भक्षो बहुवचनादुद्गातृसहितसर्वर्त्विजां भवतीति प्राप्ते,—उद्गातृशब्दस्योद्गातृप्रभृतित्रिष्वेव लक्षणा तेषामेकस्तोत्रसंबन्धात्सदोमण्डपे भक्षकाले व्यापारादित्यपसुब्रह्मण्यानामेव भक्ष इति सिद्धान्तः ॥ ७ ॥

ग्रावस्तुतोऽपि सोमभक्षाधिकरणम् ॥ ८ ॥

## ग्रावस्तुतो[5] भक्षो न विद्यतेऽनाम्नानात् ॥ ८ ॥

यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्तीत्युक्त्वा अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त इति श्रुतं, तत्र सर्वशब्देन प्रकृतचमसिनामेव भक्ष इति प्राप्ते,—सर्वशब्दसंकोचायोगात्सर्वेषां भक्ष इति सिद्धान्तः ॥ ८ ॥

---

१ अयं भावः उत्तरार्धात् स्विष्टकृतेऽवद्यतीत्युत्तरार्धस्य तद्देशत्वात्तस्य यावद्यागशेषत्वात्साधारण्यम् । २ ऐन्द्रवायवे तु प्रतिवषट्कारं भक्षाद्विरैन्द्रवायवस्य भक्षयतीति वचनादित्यर्थः । सि० सू० । ३ सोमे न भक्षो विद्यते तत्प्रतिपादकवचनाभावादित्यर्थः । पू० सू० । ४ एक उद्गातैव उद्गातृचमसं भक्षयेत् उद्गातृणां चमस इति समाख्यया उद्गात्रैव संयोगादित्यर्थः । पू० सू० । ५ ग्रावस्तुतो न भक्षो विद्यते अविहितत्वादित्यर्थः । पू० सू० । ६ भक्षणस्यापूर्वकर्मत्वात् कर्त्राकाङ्क्षायां प्राकृतैः कर्तृभिः तच्छान्तेऽप्रकृतचमसिनां पुनर्विधानं वाक्यभेदं जनयेदिति सर्वेषां भक्षसंबन्धो युक्त इति न सर्वार्थः संकोचनीय इति तात्पर्यम् ।

वषट्कारस्य भक्षनिमित्तताधिकरणम् ॥ ९ ॥

### वषट्काराच्च भक्षयेत् ॥ ९ ॥

वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षानुवादेन प्राथम्यमात्रविधिः न तु वषट्कारनिमित्तभक्षविधिरिति प्राप्ते,—एकप्रसरताभङ्गप्रसङ्गात्प्राथम्यविशिष्टभक्षविधिरेवेति वषट्कारोऽपि निमित्तमिति सिद्धान्तः ॥ ९ ॥

होमाभिषवयोरपि भक्षनिमित्तताधिकरणम् ॥ १० ॥

### होमाभिषवाभ्यां च ॥ १० ॥

हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्तीत्यभिषवहोमसमानकर्तृकभक्षणविधिः अतोऽभिषवहोमावपि भक्षनिमित्तम् ॥ १० ॥

वषट्कर्त्रादीनां चमसे सोमभक्षाधिकरणम् ॥ ११ ॥

### प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥ ११ ॥

चमसेषु चमसिनामेव भक्षः समाख्यायास्तन्मात्रविषयत्वान्न तु वषट्कर्तुरध्वर्योश्चान्यत्र सावकाशत्वात्प्रतिपत्तेरेकेनैव भक्षेण सिद्धेरिति प्राप्ते, वाचनिकत्वाद्बाधायोगेन तयोरपि भक्ष इति सिद्धान्तः ॥ ११ ॥

होतुः प्रथमभक्षाधिकरणम् ॥ १२ ॥

### एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ १२ ॥

तत्र प्रथममध्वर्युर्भक्षयेत्स्वहस्तगतत्वात्, ततो वषट्कर्ता चमसिभ्यः प्रथममिति प्राप्ते,— वषट्कर्तुः प्रथमभक्ष इति वचनाद्वषट्कर्तुरेव प्रथमभक्ष इति सिद्धान्तः ॥ १२ ॥

---

१ वषट्काराच्च वषट्कर्ता प्रथमं भक्षयेदित्यर्थः। सि० सू०। २ प्रथमभक्ष इति समस्तं पदं तत्रैकांशेन भक्षणमुद्दिश्यापरेण प्राथम्यविधाने उद्देश्यविधेयभावेन प्रतीत्यजनकत्वरूपैकप्रसरताभङ्ग इत्यर्थः। ३ होमाभिषवहेतुकमपि भक्षणं भवतीत्यर्थः। सि० सू०। ४ चमसानां भक्षणस्य प्रत्यक्षेण चमसां चमसिनो भक्षयन्तीति वाक्येनोपदेशात् शिष्टेषु ग्रहेषु कर्ता अव्यक्तः अभिषवादिकर्तेत्यर्थः। पू० सू०। ५ होमाभिषवयोरिति शेषः। अयं भावः, होमाभिषवयोर्वाचनिकत्वान्न समाख्यया, निरवकाशत्वात्तस्याश्च वा ताभ्यां बाधो युक्तः। प्रतिपत्तिस्तु लेशतोऽपि भक्षेण सेत्स्यतीति होत्रध्वर्योरपि भवति भक्षसंयोगः। ६ बहूनामेकपात्रे पानप्राप्तौ सांनिध्यात् पूर्वमध्वयुर्भक्षयेदित्यर्थः। पू० सू०।

भक्षस्यानुज्ञापूर्वकताधिकरणम् ॥ १३ ॥

वचनादनुज्ञातभक्षणम् ॥ १३ ॥

नानुपहूतेन सोमः पातव्य इति वचनादनुज्ञातस्यैव भक्षणं भवतीत्यर्थः । एवं चोपहूतशब्देनानुज्ञोच्यत इति दर्शितं भवति ॥ १३ ॥

वैदिकवचनेनानुज्ञापनाधिकरणम् ॥ १४ ॥

उपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ १४ ॥

उपहूत उपह्वयस्वेति मन्त्रेणानुज्ञापनं लिङ्गादित्यर्थः ॥ १४ ॥

अर्थक्रमतः प्रतिवचनाधिकरणम् ॥ १५ ॥

तत्रार्थात्प्रतिवचनम् ॥ १५ ॥

उपह्वयस्वेति भागोऽनुज्ञापने उपहूत इत्यनुज्ञाप्रतिवचने अर्थक्रमेण विभज्य प्रयोक्तव्यः नत्वेकत्रैव समस्तमन्त्रप्रयोगः ॥ १५ ॥

एकपात्राणामनुज्ञापनाधिकरणम् ॥ १६ ॥

तदेक[1]पात्राणां समवायात् ॥ १६ ॥

तदनुज्ञापनमेकपात्राणामेव सर्वेषां दृ[2]ष्टार्थत्वादिति ॥ १६ ॥

स्वयं यष्टुर्भक्षाधिकरणम् ॥ १७ ॥

या[3]ज्यापनयनेनापनीतो भक्षः प्रवरवत् ॥ १७ ॥

याज्याया होतृपठनीयाया यजमानस्य याज्येति वचनाद्यजमानेन पाठो ननु वषट्कारभक्षयोरपि यजमानकर्तव्यत्वमिति प्राप्ते,—स्वयं निषद्य यजतीति यजमानस्य यष्टृत्वश्रवणाद्वषट्कारेण च तत्संपत्तेः वषट्कारस्तन्निमित्तभक्षश्च याज्यावद्यजमानेन कार्य इति सिद्धान्तः ॥ १७ ॥

फलचमसस्येज्याधिकारताधिकरणम् ॥ १८ ॥

फ[4]लचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ १८ ॥

यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दध्युन्मृज्य तस्मै भक्षं प्रयच्छेन्न सोममिति राजन्यवैश्यनिमित्तेन सोमस्थाने फलचमसः श्रुतः स भक्षमात्रे न याग

---

१ तदभ्यनुज्ञातं भक्षणमेकपात्राणां भवति एकत्र समवायादित्यर्थः । सिद्धान्तसूत्रम् । २ अभ्यनुज्ञया भक्षणे न्यूनाधिकभागलाभेऽपि वैमत्याभावरूपदृष्टार्थत्वमिति भावः । ३ वचनाद्धोतुर्याज्यायां विच्छेदेऽपि न भक्ष अपैति, वरणवत् यथा न तस्यापनयस्तद्वदित्यर्थः । पू० सू० । ४ राजन्यादिकर्तृकत्वनिमित्तः फलचमसो भक्षविकारो विभक्षयिषेदित्यादिश्रवणादित्यर्थः । पू० सू० ।

इति प्राप्ते,—यागार्थद्रव्यसंस्काररूपभक्षणसंगतेः स्तिभिनीचमसो यागे द्रव्यमित्यवधार्यते इति सिद्धान्तः ॥ १८ ॥

ब्राह्मणानामेव राजन्यचमसानुसर्पणाधिकरणम् ॥ १९ ॥

अनुप्रसर्पिषु सामान्यात् ॥ १९ ॥

राजसूये दशपेयाख्यः सोमयागस्तत्र राज्ञोऽधिकारः। ज्योतिष्टोमाद्दश चमसाः प्राप्तास्तेष्वेको यजमानचमसः। तत्र दश दशैकैकं चमसमनुप्रसर्पेयुः शतं ब्राह्मणाः सोमं भक्षयन्तीति श्रुतं तत्र राजन्यचमसेषु दश-राजन्याः इतरेषु ब्राह्मणाः, शतं ब्राह्मणा इति ब्राह्मणाब्राह्मणसमुदाये ब्राह्मणशब्दोऽनुवाद इति प्राप्ते,—शतं ब्राह्मणा इत्यस्यानुवादत्वे आनर्थक्याद्विधित्वमेवेति राजन्यचमसे ब्राह्मणानामेव भक्ष इति सिद्धान्तः ॥१९॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## तृतीयाध्यायस्य षष्ठः पादः।

---

अनारभ्योक्तपर्णतादीनां प्रकृतिनिवेशाधिकरणम् ॥ १ ॥

सर्वार्थमप्रकरणात् ॥ १ ॥

यस्य पर्णमयी जुहूर्भवतीति अनारभ्य विहितं पर्णत्वं प्रकृतिविकृतिसाधारणमिति प्राप्ते,—प्रकृतौ विधानेनैव विकृतावपि प्राप्ते पुनर्विधिवैयर्थ्यात्प्रकृतावेव पर्णत्वविधिरिति सिद्धान्तः ॥ १ ॥

सामिधेनीनां सप्तदशत्वस्य विकृतिगामिताधिकरणम् ॥ २ ॥

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ २ ॥

---

१ राजन्यचमसानुप्रसर्पिषु दश राजन्या एव एकजातीयत्वादित्यर्थः। पू० सू०। २ जुह्वा पर्णमयीत्वं प्रकृतिविकृतिरूपसर्वप्रयोगार्थमनारभ्याधीतत्वादित्यर्थः। पू० सू०। ३ चोदकात् यत्राङ्गप्राप्तिः सा प्रकृतिः। यथा दर्शपूर्णमासौ नक्षत्रानिर्दिष्टमङ्गजातम्। प्राकृतैरेव तैः प्रधानस्य निराकाङ्क्षत्वात्। यत्र चोदकोऽङ्गान्यतिदिशति सा विकृतिः। यथा सौर्यश्चरुः। अत्र प्रकृतिवदित्यतिदेशेनाङ्गप्राप्तिः। प्राकरणिकैस्तैराकाङ्क्षाया अनिवृत्तेः। ये तु विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति तल्लक्षणं ब्रुवते तेषां गृहमेधीयाधिकरणविरोधः। नहि ततो विकृतिरङ्गानि गृह्णातीति संक्षेपः। ४ दर्शपूर्णमासप्रकरणे सामिधेनीनां पञ्चदशत्वसंख्यावरुद्धत्वात्तद्विरुद्धं साप्तदश्यं विकृतौ स्यादित्यर्थः। सि० सू०।

सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रुतं साप्तदश्यमपि पूर्ववत्प्रकृतावेवेति प्राप्ते,—प्रकृतेः पाञ्चदश्यावरुद्धत्वाद्विकृतावेवेति सिद्धान्तः॥ २॥

वैश्यसाप्तदश्यादीनां प्रतिगामिताधिकरणम्॥ ३॥

[2]नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्॥ ३॥

सप्तदश वैश्यस्येति वैश्यनिमित्तं तु साप्तदश्यं विशेषरूपत्वात्पाञ्चदश्यबाधेन प्रकृतावेव न विकृतावुत्कृष्यते एवं काम्यगोदोहनाद्यपीति॥ ३॥

आधानस्य पवमानेष्ट्यनङ्गताधिकरणम्॥ ४॥

[3]इष्ट्यर्थमग्न्याधेयं प्रकरणात्॥ ४॥

आधानमग्निसंस्कारद्वारेण पवमानेष्ट्यङ्गम्' इष्टयस्तु विश्वजिन्न्यायात्स्वर्गार्था इति प्राप्ते,—कर्माङ्गाग्न्युत्पादकमाधानमिष्टयोऽपि फलवदग्न्यङ्गमाधानाङ्गं वा न स्वतन्त्रफला इति सिद्धान्तः॥ ४॥

आधानस्य सर्वयागार्थताधिकरणम्॥ ५॥

[4]तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः॥ ५॥

[5]तदाधानं न प्रकृत्यर्थं किंत्वग्न्यर्थमेवेति शिष्यहितार्थमुच्यते॥ ५॥

पवमानेष्टीनामसंस्कृतेऽग्नावनुष्ठानाधिकरणम्॥ ६॥

[6]तासामग्निः प्रकृतितः प्रयाजवत्॥ ६॥

पवमानेष्टिष्वपि पवमानेष्टयः कार्या अग्न्यर्थमिति प्राप्ते,—अग्नीनां पवमानेष्टिसाध्यत्त्वान्न साधनत्वसंभव इति न [7]कार्या इति सिद्धान्तः॥ ६॥

---

१ प्रकरणपठितस्य प्राकृतापूर्वसाधकत्वं स्वारसिकमिति पाञ्चदश्यस्य प्राबल्यम्, साप्तदश्यस्य तु विधानानर्थक्यादपूर्वसंबन्धमात्रमपेक्षितमिति यथाकथंचित्तत्संबन्धबोधकतया दौर्बल्यमिति प्रकृतौ निवेशमलभमानं तद्विकृतौ निविशते। तत्रापि न सर्वत्रापि तु मित्रविन्दादिष्वेवेति तत्त्वम्। २ नैमित्तिकं साप्तदश्यादि प्रकृतौ निविष्टं सत्तद्विकारः तस्य पाञ्चदश्यादेर्विकारो निवर्तकः, पशुफलरूपस्य विशेषस्य पूर्वापेक्षया सत्त्वादित्यर्थः। सि०सू०। ३ आग्न्याधेयमाधानं पवमानेष्ट्यङ्गं प्रकरणपाठादित्यर्थः। पू० सू०। ४ तदाधानं प्रकृत्यर्थं स्यात् अन्यस्यानारभ्यविहितस्य पर्णमयीत्वादेस्तुल्यत्वादित्यर्थः। पू० सू०। ५ आधानं प्रकृत्यर्थं सर्वार्थं वेति द्वैते, पर्णमयीन्यायेनानारभ्य विहितत्वात्प्रकृतिमात्रार्थत्वे प्राप्ते आहवनीयादिस्वरूपस्यादृष्टत्वाच्छ्रुत्यवगतत्स्वरूपार्थत्वेऽपि विधेरानर्थक्याभावान्न साधनांशलक्षणया क्रत्वर्थत्वमेवाधानस्य किंत्वग्न्यर्थत्वम्। अतः आधानोत्पन्नानामग्नीनां सर्वार्थत्वमिति सिद्धान्तः। ६ तासां पवमानेष्टीनां प्रकृतितः अग्निरतिदिश्यतेऽङ्गत्वेन प्रयाजातिदेशवदित्यर्थः। पू० सू०। ७ अयं भावः पवमानेष्टिसंस्कृतेऽग्नौ पवमानेष्ट्यनुष्ठाने तत्रापि पवमानेष्ट्यन्तरमेवं तत्रापीत्यनवस्थाभयान्न पुनःपुनस्तदिष्टिः।

उपाकरणादीनामग्नीषोमीयपशुधर्मताधिकरणम् ॥ ७ ॥

## तुल्यः[1] सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ ७ ॥

ज्योतिष्टोमे त्रयः पशवः तत्राग्नीषोमीयः क्रयसन्निधौ विहितः औपवसथ्येऽहन्यालब्धव्य इति वचनात्तत्रानुष्ठीयते, सवनीयः सुत्यादिने, अनुबन्ध्यस्त्ववभृथान्ते। तत्रौपवसथ्येऽहनि विहितानां यूपच्छेदनादिपशुधर्माणां ज्योतिष्टोम आनर्थक्यात्तदङ्गसर्वपशुसाधारण्यम्, अथवा औपवसथ्येऽपि आग्नेयः पशुरग्निष्टोम इति विधानात्तदवान्तरप्रकरणात्तदङ्गत्वमेव, अथवा स्थानादग्नीषोमीयार्था अपीति प्राप्ते,—औपवसथ्येऽहनि सवनीयस्य प्रचारविप्रकर्षरूपगुणविधानार्थमनुवादान्नावान्तरप्रकरणम् । अतोऽनुष्ठानसादेश्यादग्नीषोमीयाङ्गत्वमेवेति सिद्धान्तः ॥ ७ ॥

शाखाहरणादेरुभयदोहधर्मताधिकरणम् ॥ ८ ॥

## दोहयोः[2] कालभेदादसंयुक्तं श्रुतं स्यात् ॥ ८ ॥

दोहधर्माः शाखाहरणादयः पूर्वेद्युः क्रियमाणत्वात्पूर्ववत्सायं दोहार्था इति प्राप्ते,—प्रकरणाविशेषात्सायंप्रातर्दोहार्था इति सिद्धान्तः ॥ ८ ॥

सवनादीनां सवनत्रयधर्मताधिकरणम् ॥ ९ ॥

## तद्वत्[4]सवनान्तरे ग्रहाम्नानम् ॥ ९ ॥

प्रातःसवनसंनिधौ विहिता ग्रहधर्माः प्राकरणिकसर्वग्रहार्थाः पूर्ववदित्यतिदेशः ॥ ९ ॥

रशनात्रिवृत्त्वादेर्यावत्पशुधर्मताधिकरणम् ॥ १० ॥

## रशना[5] च लिङ्गदर्शनात् ॥ १० ॥

आग्नीषोमीये सवनीये च परिव्याणं विहितम्। परिव्ययत्यूर्ग्वै रशनेति आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति च। तत्र रशनातद्धर्माः

---

१ पशुधर्म उपाकरणादिः सर्वेषु पशुषु तुल्यः संनिधेरविशेषादित्यर्थः । पू० सू० । २ श्रुतं प्रातर्दोहो दोहधर्मेण शाखाहरणादिना असंयुक्तं द्वयोर्दोहयोः कालभेदादित्यर्थः । पू० सू० । ३ नहि स्थानं प्रकरणस्येष्टे, न च दधियागस्यावान्तरं प्रकरणमस्ति, न च स्थानमपि प्रधानस्य विद्यते तस्यापरेद्युरेवानुष्ठानात्, दधिसिद्ध्यर्थास्तु केचिद्धर्माः पूर्वेद्युः क्रियन्ते, न च तदर्थाः शाखाहरणादयः प्रधानार्थत्वात्, तस्मादुभयार्था इति शास्त्रदीपिका । ४ तद्वत्सवनान्तरे दोहधर्मवत् सवनान्तरे ग्रहधर्माम्नानं सप्तसंस्थावतः सोमस्य सर्वार्थत्वादित्यर्थः । सि०सू० । ५ त्रिवृद्वतीत्यादिधर्मविशिष्टा रशना उभयार्था, सवनीयपरिव्याणे त्रिवृदादिगुणविशिष्टरशनानुवादरूपलिङ्गदर्शनादित्यर्थः । सि० सू० ।

त्रिवृद्भवति दर्भमयीत्यादयः अग्नीषोमीयसंनिधौ विहितास्तदर्था एवेति प्राप्ते,—यूपस्यैकत्वात्तत्संबन्धिपरिव्याणद्वयेऽपि धर्मा इति सिद्धान्तः॥१०॥

अंश्वदाभ्ययोरपि सादनधर्मताधिकरणम् ॥ ११ ॥

आराच्छिष्टमसंयुक्तमितरैरसंनिधानात् ॥ ११ ॥[1]

ग्रहधर्माः प्राकरणिकग्रहाणामेवेति प्राप्ते,—यागसाधनत्वाविशेषादनारभ्याधीतानामपीति सिद्धान्तः ॥ ११ ॥

चित्रिण्यादीष्टकानां चयनधर्मताधिकरणम् ॥ १२ ॥

अग्न्यङ्गमप्रकरणे तद्वत् ॥ १२ ॥[2]

इष्टकाधर्मा अखण्डामकृष्णामित्यादयः पूर्ववदनारभ्याधीतानामपीत्यतिदेशः ॥ १२ ॥

क्रयाभिषवादीनां सोममात्रधर्मताधिकरणम् ॥ १३ ॥

नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ १३ ॥[3]

अभिषवादिसंस्कारा नैमित्तिकस्यापि फलचमसस्य समानविधानाः ज्योतिष्टोमापूर्वसाधनत्वाविशेषादिति प्राप्ते,—नित्यसंस्काराणामनित्यफलचमसद्वारत्वायोगान्नैमित्तिकस्य तत्काले उपस्थितत्वाच्च न समानविधानत्वमिति सिद्धान्तः ॥ १३ ॥

प्रतिनिधावपि मुख्यधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

प्रतिनिधिश्च तद्वत् ॥ १४ ॥[4]

प्रतिनिधिस्तु समानविधिरेव तत्र मुख्यावयवसत्त्वादिति सिद्धान्तः१४

श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मताधिकरणम् ॥ १५ ॥

नियमार्था गुणश्रुतिः ॥ १५ ॥[5]

यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति वचनेन पूतीकानां विधानात्फलचमसवद्द्रव्यान्तरत्वादसमानविधित्वे प्राप्ते,—सोमाभावे पूतीकवि-

---

१ प्रकरणपठितग्रहविशेषणं संमार्गादि अनारभ्याधीतग्रहैर्न संयोगभाग् दूरदेशस्थत्वादित्यर्थः । पू० सू० । २ अप्रकरणे श्रुतं चित्रिणीत्वादि अग्न्यङ्गम् अदाभ्यादिग्रहवदित्यर्थः । सि० सू० । अखण्डत्वादय इष्टकाधर्माः प्राकृतानामेवेष्टकानां न अनारभ्याधीतचित्रिण्यादीनामसंनिधेरिति प्राप्ते प्रकृतापूर्वसंबन्धात्तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः । ३ राजन्यादिनिमित्तं फलचमसं सोमेन तुल्यविधानं न नित्यनैमित्तिकयोरतुल्यत्वादित्यर्थः । सि०सू० ।४ प्रतिनिधेरनित्यत्वात् फलचमसे सोमधर्माननुष्ठानवन्न तत्र मुख्यधर्मानुष्ठानमित्यर्थः । पू०सू० ।५ पूतीकगुणश्रवणं सोमसादृश्याद्द्रव्यान्तरप्राप्तौ नियामकमित्यर्थः । सि० सू० ।

ध्यभावात्सोमप्रतिनिधित्वेन पूतीकनियमात्सोमावयवानामेव साधनत्वात्पूर्ववत्समानविधित्वमिति सिद्धान्तः ॥ १५ ॥

दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ॥ १६ ॥

**संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ १६ ॥**

ज्योतिष्टोमस्य चतस्रः संस्थाः अग्निष्टोमः उक्थ्यः षोडशी अतिरात्र इति। तत्राग्निष्टोमसंस्था क्रत्वर्था उक्थ्यादयस्तु क्रत्वाश्रिताः फले विधीयन्ते पशुकाम उक्थ्यं गृह्णीयादित्यादिना। तत्र दीक्षणीयाद्यङ्गानि ज्योतिष्टोमस्य संस्थानां च तुल्यानीति प्राप्ते,—अङ्गानामाश्रयभूतक्रियासंबन्धस्यावश्यकत्वात्संस्थासंबन्धेऽपि उच्यमाने नित्यत्वानित्यत्ववैरूप्यापत्तेर्न च संस्थानां समानविधित्वमिति सिद्धान्तः ॥ १६ ॥

इति श्रीन्यायबिन्दौ तृतीयाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

## तृतीयाध्यायस्य सप्तमः पादः ।

---

बर्हिरादीनां दर्शपूर्णमासतदङ्गोभयाङ्गताधिकरणम् ॥ १ ॥

**प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥**

वेदिं खनति बर्हिर्लुनाति इति वेदिबर्हिस्तद्धर्मा प्रधानहविषामेव प्रकरणादिति प्राप्ते,—प्रकरणेनापि प्रधानोपकारिहविरङ्गत्वावगमादङ्गहविषोऽपि तथात्वादङ्गप्रधानसाधारणमिति सिद्धान्तः ॥ १ ॥

स्वामिसंस्काराणां प्रधानार्थताधिकरणम् ॥ २ ॥

**फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ २ ॥**

ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्कारास्तद्वारेणाङ्गप्रधानार्था इति प्राप्ते,—भोक्तृत्वस्य प्रधानत्वादलौकिकत्वाच्च तदर्थाः संस्काराः प्रधानार्था एवेति सिद्धान्तः ॥ २ ॥

---

१ संस्था समाप्तिः उक्थ्यादयः संस्थाः सोमेन तुल्यविधाना ज्योतिष्टोमप्रकरणविच्छेदाभावादित्यर्थः । पू० सू० । २ उत्पत्तिवाक्ये उद्देश्येनासंबद्धं प्रधानस्य धर्म इत्यर्थः । पू० सू० । ३ प्रयाजादिहवींष्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तमिति माधवः । ४ स्वामिना युक्तं यजमानसंस्कारकं कर्म प्रधानाङ्गं यजमानस्य फलभोक्तृत्वादित्यर्थः । सि० सू० ।

सौमिकवेद्यादीनामङ्गप्रधानोभयार्थताधिकरणम् ॥ ३ ॥

## चिकीर्षया च संयोगात् ॥ ३ ॥

सौमिकी वेदिः केवलप्रधानार्था शक्ष्यामहेऽस्यां कर्तुमिति तुमुनोक्तस्य चिकीर्षितत्वस्य प्रधान एव फलवत्त्वेन सत्त्वादिति प्राप्ते,—साङ्गप्रधानस्यैव फलोपधायकतया चिकीर्षितत्वात्साङ्गप्रधानार्थैवेति सिद्धान्तः ॥३॥

अभिमर्शनस्योभयाङ्गताधिकरणम् ॥ ४ ॥

## तथाऽभिधानेन ॥ ४ ॥

'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्याम्' इति मन्त्रावपि अङ्गप्रधानार्थावित्यतिदेशः ॥ ४ ॥

दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥ ५ ॥

## दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ५ ॥

दीक्षाः सोमस्य दक्षिणाः सोमस्येति वचनाद्दीक्षादक्षिणं प्रधानाङ्गमेवेति सिद्धान्त इत्यर्थः ॥ ५ ॥

अन्तर्वेदेर्यूपानङ्गताधिकरणम् ॥ ६ ॥

## तथा यूपस्य वेदिः ॥ ६ ॥

अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदीति वेद्येकदेशस्य प्रयोगत्वमिति प्राप्ते,—अर्धं बहिर्वेदीत्यस्य नियतप्राप्त्यभावाद्विधाने च वाक्यभेदादुभयलक्षितदेशविधानमेवेति सिद्धान्तः ॥ ६ ॥

---

१ शक्ष्यामहेऽस्यां कर्तुमिति चिकीर्षापदघटितवाक्याद्वेदिः प्रधानाङ्गमित्यर्थः । पू० सू० । २ पौर्णमासीमित्यादिप्रधानवाचकेन संयोगान्मन्त्रौ तथा प्रधानाङ्गम् । पू०सू० । ३ पृथिवी होतेत्यादिको मन्त्रश्चतुर्होता । अग्निर्होतेत्यादि पञ्च होतेति माधवः । ४ इमौ मन्त्रौ मुख्यहविर्विषयकौ पौर्णमास्यमावास्याशब्दयोर्मुख्यहविर्वाचकत्वादिति प्राप्ते तयोः कर्मवाचित्वात् कर्मण उपस्पर्शनासंभवात् काललक्षणायां तत्संबन्धस्य मुख्याङ्गसाधारण्यादुभयोरप्यभिसंबन्ध इति सिद्धान्तः । ५ सोमस्य दीक्षा सोमस्य दक्षिणेति वचनात् दीक्षा च दक्षिणा च दीक्षादक्षिणं प्रधानाङ्गमित्यर्थः । सि०सू० । ६ दीक्षा दक्षिणा च प्रधानद्वाराङ्गप्रधानोभयार्थेति प्राप्ते इति शेषः । ७ यथा दीक्षादक्षिणं प्रधानार्थमेवं वेदिर्यूपावटस्यार्थेत्यर्थः । पू० सू० । ८ वाचनिकस्यार्धवेदिदेशस्य विधानेऽर्धान्तरव्यावृत्तावप्यैच्छिकवेद्यर्धभागप्राप्तेर्वारयितुमशक्यत्वात्तदर्थम् अर्धं बहिर्वेदीत्यस्यापि विधाने स्फुटो वाक्यभेदः ।

हविर्धानस्य सामिधेन्यनङ्गत्वाधिकरणम् ॥ ७ ॥

सा[1]मिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ ७ ॥

उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति दक्षिणस्मिन्हविर्धाने स्थित्वा सामिधेन्यनुवचनं विधीयत इति प्राप्ते,—आहवनीयप्रत्यग्देशस्य प्राप्तस्यैव दक्षिणहविर्धानसामीप्यनियमो न तु हविर्धानस्याङ्गत्वमिति सिद्धान्तः ॥ ७ ॥

त्यागातिरिक्तस्य ऋत्विक्कर्तृत्वाधिकरणम् ॥ ८ ॥

शा[2]स्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात् ॥ ८ ॥

दर्शपूर्णमासादिप्रयोगं सर्वं यजमान एव कुर्यादिति प्राप्ते,—दक्षिणादानस्य दृष्टार्थत्वात्प्रयोजकत्वेन यजमानस्य कर्तृत्वानपायाच्च द्रव्यत्यागादन्यत्र ऋत्विक्कर्तृकत्वमिति सिद्धान्तः ॥ ८ ॥

ऋत्विजां संख्याविशेषनियमाधिकरणम् ॥ ९ ॥

त[3]त्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥९॥

दक्षिणावशादन्य एक एव स्यादिति प्राप्ते,—व[4]रणभेदाद्यावद्वरणं यावत्संज्ञं कर्तृभेद इति सिद्धान्तः ॥ ९ ॥

चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥ १० ॥

च[5]मसाध्वर्यवश्च तैर्व्यपदेशात् ॥ १० ॥

ज्योतिष्टोमे षोडशर्त्विजः सिद्धास्तन्मध्य एव केचिद्योगाच्चमसाध्वर्युशब्देनोच्यन्त इति प्राप्ते,—वरणभेदात्तेषामपि भेद इति सिद्धान्तः ॥ १० ॥

चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥ ११ ॥

उ[6]त्पत्तौ तु बहुश्रुतेः ॥ ११ ॥

---

१ हविर्धानशकटयोर्मध्ये यत्र सोमं सुन्वन्ति तत्सामिधेनीनामङ्गं स्यात् यत् सुन्वन्ति तदन्वाहुरिति वचनादित्यर्थः। पू० सू०। २ शास्त्रबोधितं फलं प्रयोगकर्तरि कर्तृभोक्त्रोः सामानाधिकरण्यात् तस्मात् प्रयोगे अनुष्ठाने स्वयं यजमानस्य स्यादित्यर्थः। पू० सू०। ३ तत्र ऋत्विजां संख्याविषये अनियमः एतावन्त इतीयत्ताया अभावः विशेषे नियोजकाभावात्, एवं च अर्थात् कार्यानुसारेण कर्तृसंख्यापरिमाणमित्यर्थः। ४ वरणं प्रार्थना। सा च महर्त्विजां होत्रकाणाम् अग्निर्मे होतेत्यादिवैदिकेन, अन्येषां तु लौकिकेनेति विवेकः। संख्यानियमस्तु दर्शपूर्णमासस्य यज्ञक्रतोश्चत्वार इत्यादि रूपः। ५ चमसाध्वर्यव उक्तेभ्योऽन्ये भवेयुः तैः चमसाध्वर्युभिः व्यपदेशात् चमसाध्वर्यून् वृणीत इति वचनादित्यर्थः। सि०सू०। एतेन सदस्यो व्याख्यातः। ६ उत्पत्तिवाक्ये चमसाध्वर्यून् वृणीत इति बहुवचनश्रवणाच्चमसाध्वर्यवो बहव इत्यर्थः। सि० सू०।

चमसाध्वर्यूणां वरणोद्देश्यत्वेऽपि बहुत्वं ऋत्वङ्गतया विवक्षितम् ॥११॥

चमसाध्वर्यूणां दशत्वसंख्याधिकरणम् ॥ १२ ॥

**दशत्वं लिङ्गदर्शनात् ॥ १२ ॥**

चमसानां दशत्वाच्चमसाध्वर्यवोऽपि दशैव ॥ १२ ॥

शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

**शमिता च शब्दभेदात् ॥ १३ ॥**

अध्वर्य्वादिभ्यः शमिताऽन्य एव संज्ञाभेदादिति प्राप्ते,—वरणाभावादध्वर्युव्यतिरिक्तेषु प्रकृतेष्वेव कश्चित्, परागावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादिति वचनादध्वर्योरसंभवादिति सिद्धान्तः ॥ १३ ॥

उपगानामपृथक्त्वाधिकरणम् ॥ १४ ॥

**उपगाश्च लिङ्गदर्शनात् ॥ १४ ॥**

उपगातारः अन्य एवेति प्राप्ते,—वरणाभावात्त एवेत्यतिदेशः ॥ १४ ॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥ १५ ॥

**विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ १५ ॥**

सोमविक्रयी त्वन्य एव कर्मणो विक्रयस्य क्रत्वङ्गत्वेनाविहितत्वादित्यर्थः ॥ १५ ॥

सप्तदशानामेव ऋत्विक्त्वाधिकरणम् ॥ १६ ॥

**कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ १६ ॥**

सप्तदशर्त्विज इति वचनाच्चमसाध्वर्यूणां न ऋत्विक्त्वम् ॥ १६ ॥

दक्षिणोक्त्या ब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधिकरणम् ॥ १७ ॥

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ १७ ॥**

---

१ अयं भावः चमसाध्वर्यूणां वरणं प्रत्युद्देश्यतया बहुत्वविवक्षायां वाक्यभेदो ग्रहैकत्ववदतो बहुत्वमविवक्षितमिति प्राप्ते प्रकरणसहकृतवचनेन वरणसंस्कृतास्ते क्रतोरङ्गत्वेन विधीयन्त इत्युपादेयतया विवक्षितं बहुत्वमिति सिद्धान्तः । २ दश दशैकैकं चमसमुपसर्पन्तीति लिङ्गम् । सि० सू० । ३ शमितेतिशब्दभेदाच्छमिता तेभ्योऽन्यः। पू० सू० । ४ नाध्वर्युरुपगायेदिति निषेधरूपलिङ्गदर्शनादुपगाता नान्यः, अन्यत्वेऽध्वर्योरप्राप्तेरित्यर्थः । सि० सू० । ५ सोमविक्रयी सप्तदशभ्योऽन्यः सोमक्रयणान्यथानुपपत्त्या तत्सिद्धेर्विधानाभावादित्यर्थः । सि० सू० । ६ विहितकर्मानुष्ठानात्सर्वेषामपि ऋत्विक्त्वमविशेषात् । पू० सू० । ७ चमसाध्वर्यूणामपि कार्यकरत्वात् ऋत्विक्त्वमस्त्विति पूर्वपक्षोऽत्र द्रष्टव्यः । ८ ब्रह्मादीनामेव ऋत्विक्त्वनियमः दक्षिणायोगान्नामश्रवणाच्चेत्यर्थः । सि० सू० ।

ऋत्विग्भ्यो ददातीत्युक्त्वा ब्रह्मणे ददातीत्यादिना षोडशानां कीर्तनात्तेषामृत्विक्त्वम् ॥ १७ ॥

ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥ १८ ॥

**[1]स्वामिसप्तदशाः कर्मसामान्यात् ॥ १८ ॥**

सप्तदशः सदस्य इति प्राप्ते,—तस्य क्रतुयजनाभावात्स्वाम्येव सप्तदश इति सिद्धान्तः ॥ १८ ॥

आध्वर्यवादिषु अध्वर्युप्रभृतीनां नियतत्वाधिकरणम् ॥ १९ ॥

**ते [2]सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ १९ ॥**

ऋत्विजः सर्वे सर्वार्था इति प्राप्ते,—समाख्यादिभिर्व्यवस्थिता[3] इति अग्नयस्तु प्रकृतिविकृतिहोमसाधारणाः न तु पर्णतादिवत्प्रकृत्यर्था एव प्रकृतिसमकालमेव विकृतावप्यामनहोमोपदेशेन द्विरुक्तदोषाभावादिति सिद्धान्तः ॥ १९ ॥

समाख्याप्राप्तस्य क्वचिद्बाधाधिकरणम् ॥ २० ॥

**[4]तस्योपदेशेन समाख्यानेन निर्देशः ॥ २० ॥**

उपदेशेन समाख्याबाधः यथा मैत्रावरुणः प्रेष्यति चानु चाहेति तथा याजमानमित्यादिविशेषसमाख्ययापि ॥ २० ॥

प्रैषानुवचनयोः समुच्चितयोर्मैत्रावरुणकर्तृताधिकरणम् ॥ २१ ॥

**[5]प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ २१ ॥**

प्रैषमात्रे अनुवचनमात्रे च मैत्रावरुणः उद्देश्यसाहित्यस्याविवक्षितत्वादिति प्राप्ते,—प्रत्येकं निर्ज्ञातकर्तृत्वेनापेक्षाभावात्प्रैषान्तानुवचनेषु प्रैषांशेनाध्वर्योरनुवचनांशेन च होतुः प्राप्तेरेकमन्त्रत्वेनानेककर्तृकत्वासंभवादपेक्षितो मैत्रावरुण एकः कर्ता विधीयते[6] इति सिद्धान्तः ॥ २१ ॥

---

१ स्वामी सप्तदशसंख्यापूरणः येषां ते, कर्मकरत्वेन तुल्यत्वात् । सि० सू० । २ ऋत्विजः सर्वक्रियाकर्तारः स्वेच्छया भृत्या नियुक्तत्वात्, एवमग्नयोऽपि स्वतन्त्रत्वादनारभ्याधीतत्वादित्यर्थः । पू० सू० । ३ होतुरिदं हौत्रमित्यादि यौगिकव्युत्पत्त्या स्वे स्वे कर्मण्येव योगाः । न च दण्डी प्रेष्यति चान्वाहेत्यत्र कथं मैत्रावरुणकर्तृत्वम् । वचनेन समाख्याबाधादिति भावः । ४ तस्य दण्डी प्रेष्यति चानु चाहेत्युपदेशसहितसमाख्यया व्यवस्थेत्यर्थः । सि० सू० । इदं समाख्याविनियोगस्यातिप्रसङ्गवारकं नाधिकरणान्तरमितिशास्त्रदीपिकायाम् । ५ प्रैषानुवचनमेव मैत्रावरुणस्य प्रेष्यति चान्वाहेति तयोस्तस्योपदेशादित्यर्थः । पू० सू० । ६ अयं भावः, यत्र प्रैषे अनुवचने चाध्वर्युहोतृकर्तृकत्वं न संभवति तानि कर्तारं विनानुपपन्नानि स्वकर्तृत्वेन मित्रावरुणेनान्वयं लभन्ति तदधिकारपठितत्वात् ।

चमसहोमेऽध्वर्योः कर्तृताधिकरणम् ॥ २२ ॥

## चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ २२ ॥

चमसेषु चमसाध्वर्यूणामेव समाख्यया कर्तृत्वे प्राप्ते अध्वर्युशब्दस्य तत्र गौणत्वान्मुख्यासंभव एव ते कर्तार इति सिद्धान्तः ॥ २२ ॥

श्येनवाजपेययोर्नानाकर्तृकताधिकरणम् ॥ २३ ॥

## वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ २३ ॥

औद्गात्रे श्येनो वाजपेयश्चाध्वर्यवे पठितः । तत्र समाख्यया उद्गाता अध्वर्युश्च सर्वत्रेति प्राप्ते,—अतिदेशस्य प्राथमिकत्वात्तदनन्तरभाविप्रयोगविधिस्तदनुरोधेन प्रकृतिवन्नानाकर्तृप्रापक इति सिद्धान्तः ॥ २३ ॥

इति श्रीन्यायविन्दौ तृतीयाध्यायस्य सप्तमः पादः ॥ ७ ॥

# तृतीयाध्यायस्याष्टमः पादः ।

परिक्रयस्य स्वामिकर्तृताधिकरणम् ॥ १ ॥

## स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥

दक्षिणादानं आध्वर्यवादिसमाख्यावशादध्वर्य्वादिकर्तृकं यजमानेन संपाद्यमिति प्राप्ते,—दक्षिणादानात्प्रागध्वर्य्वादेरभावात्तत्र यजमानस्यैव कर्तृत्वं अन्येषां तु दक्षिणावशेन कर्तृत्वमिति समाख्यया तन्नियममात्रं क्रियते न त्वध्वर्योरत्यन्ताप्राप्तस्य परिक्रयकर्तृत्वस्य विधिरिति सिद्धान्तः ॥ १ ॥

वपनादीनां याजमानताधिकरणम् ॥ २ ॥

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ २ ॥

---

१ चमसांश्चमसाध्वर्यव इत्युपदेशात् । पू० सू० । २ चमसाध्वर्यव इत्यत्राप्यध्वर्योरपेक्षितत्वादध्वर्योर्मुख्यत्वम्, चमसेष्वध्वर्युवद्भासन्त इति तेषां गौणत्वम् । ३ वेदे सामवेदे श्येनस्य पाठात् चमसेष्वध्वर्युकर्तृकत्ववत् अन्यत्र वेदे पाठेऽपि स्वीयवेदानुसारेण तत्रोद्गातृकर्तृतैवेत्यर्थः । पू० सू० । ४ परिक्रयो ऋत्विजां दक्षिणया स्वीकरणं यजमानस्य कर्म, कर्मणः फलार्थत्वादित्यर्थः । सि०सू० । ५ अयंभावः, कर्त्रन्तरसद्भावेऽपि फलार्थित्वाद्यजमानेन किंचित् कर्तव्यमवश्यमिति तन्नियममिदं दक्षिणादानम् । एवं चात्यन्ताप्राप्ताध्वर्य्वादिविधानं न कर्तव्यं भवतीति लाघवम् । य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यादित्यादौ तु वचनादध्वर्योर्दानप्राप्तिरिति न समाख्यया सर्वत्रैव तस्य कर्तृत्वमिति सर्वमवदातम् । ६ संस्काराः वपनादयः समाख्यया यथावेदं यत्र यो विहितः तस्याध्वर्य्वादेर्भवेयुः पुरुषस्याधिकारसंपादकतयोपयुक्ताः सार्थका इत्यर्थः । पू० सू० ।

वपनादिसंस्काराः समाख्यानादाध्वर्यवा इति प्राप्ते,–फलाधानयोग्यता संस्कारफलमतो यजमानस्यैवेति सिद्धान्तः ॥ २ ॥

तपसो याजमानताधिकरणम् ॥ ३ ॥

तपश्च³ फलसिद्धत्वाल्लोकवत् ॥ ३ ॥

उपवासादिकं तपः समाख्यानान्नाध्वर्यवं किं तु लिङ्गप्रकरणाभ्यां फलप्रतिबन्धकदुरितनिरासार्थत्वाद्याजमानमिति सिद्धान्तः ॥ ३ ॥

हिरण्यमालित्वादीनां सर्वर्त्विग्धर्मताधिकरणम् ॥ ४ ॥

गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ ४ ॥

हिरण्यमालिन ऋत्विजः प्रचरन्तीति संस्काराः समाख्यानात्सं-माख्यातानामेवेति प्राप्ते,–सर्वेषां संस्कारं प्रति प्राधान्यात्कार्या इति सिद्धान्तः ॥ ४ ॥

वृष्टिकामनाया याजमानताधिकरणम् ॥ ५ ॥

तथा कामोऽर्थसंयोगात् ॥ ५ ॥

यदि कामयेत वर्षुकः पर्जन्यस्यान्नीचैः सदो मिनुयादिति गुणफल-मध्वर्योः, मिनुयादिति सामानाधिकरण्यादाध्वर्यवत्वाच्चेति प्राप्ते,–परस्मैप-देन परार्थत्वावगमाद्यजमानस्यैव अन्यथा नाभिदघ्न इत्यादिक्रत्वर्थगुण-चाधो न स्यात् तस्य यजमानकर्तव्यत्वात् न त्वध्वर्युफलानुरोधेन यज-मानोऽङ्गहानिं कुर्यादिति सिद्धान्तः ॥ ५ ॥

आयुर्दा इत्यादिमन्त्रपाठस्य याजमानताधिकरणम् ॥ ६ ॥

मन्त्राश्चाकर्मकरणास्तद्वत् ॥ ६ ॥

आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादयः स्वाशीःप्रकाशका मन्त्राः समा-

---

१ न हि योग्यतामाधातुं पुरुषान्तरं कश्चित् परिक्रीणीतेऽपि तु कार्यार्थम् । तेन परिक्रीतानां स्वे स्वे कर्मणि योगः । संस्कारास्तु प्रधानस्यैव । २ चशब्दोऽप्यर्थः । तप उपवासादि पापक्षयद्वारा फलसिध्यर्थत्वाद्याजमानम्, लौकिककृष्यादिवदित्यर्थः । सि० सू० । ३ यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवतीति लिङ्गम् । ४ लोहितो-ष्णीषात्वादीनामृत्विक्संस्कारार्थत्वात् वेदेन सामवेदपठितत्वेन न संकोच इत्यर्थः । सि० सू० । ५ उद्गातृगणानाम् । ६ तपोवत् कामः यजमानस्य साङ्गफलभोक्तृत्वादि-त्यर्थः । सि० सू० । ७ परस्मैपदश्रुत्या कर्तृभोक्त्रोः सामानाधिकरण्यनियमभङ्गोऽत्र बीजम् । ८ अकरणा अनुष्ठेयार्थाप्रकाशकाः, तद्वत् कामनावद्याजमानाः । सि० सू० ।

ख्यया आध्वर्यवा इति प्राप्ते,–कर्मफलस्य आशास्यत्वात् अन्यथा क्रत्वनङ्गत्वप्रसङ्गाद्यजमान एव प्रयोक्तेति सिद्धान्तः ॥ ६ ॥

द्व्याम्नातस्योभयकर्तृताधिकरणम् ॥ ७ ॥

द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ ७ ॥

वाजस्य मा प्रसवेनेत्यादीनामाध्वर्यवे च याजमाने च द्विराम्नानाद्येन केनचिदथवा स्रुग्व्यूहनादेराध्वर्यवत्वादध्वर्युणैव प्रयोग इति प्राप्ते,–पाठद्वये कर्त्रपेक्षायां समाख्याद्वयेन कर्तृद्वयसमुच्चय इति सिद्धम् । न च स्मृतमन्त्रेणैवार्थप्रकाशनान्न पाठापेक्षेति वाच्यम् । पाठस्योपस्थितत्वेन तस्यैव मन्त्रग्रहणोपायतया प्रयोगविधिना नियमनात् । अत एवोच्चैष्ट्वादिविधेरपि सङ्गतिरिति ज्ञेयम् ॥ ७ ॥

विज्ञस्यैव वाचयितव्यताधिकरणम् ॥ ८ ॥

ज्ञाते च वाचनं नह्यविद्वान्विहितोऽस्ति ॥ ८ ॥

वाजपेये क्लृप्तीर्यजमानं वाचयतीति वाचनमज्ञस्यैव ज्ञस्य स्वत एव वचनसंभवादिति प्राप्ते,–अज्ञस्यानधिकारात् ज्ञस्यैव ब्रूहीति वाचनमिति सिद्धान्तः ॥ ८ ॥

द्वादशद्वन्द्वानामाध्वर्यवताधिकरणम् ॥ ९ ॥

याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥ ९ ॥

दर्शपूर्णमासयोर्वत्समुपावसृजति उखामधिश्रयति इत्यादीनामाध्वर्यवे याजमाने च कीर्तनं अतस्तेषामुभयकर्तृकत्वासंभवाद्विशेषसमाख्यया याजमानत्वे प्राप्ते,–आध्वर्यवे तेषां विधानान्न कर्त्रपेक्षेत्याध्वर्यवत्वमेव याजमाने तु द्वन्द्वतासंपादनमात्रम् । एतानि वै द्वादश द्वन्द्वानि तानि संपाद्य यजेतेति अतश्च द्वन्द्वतासंपादने स्मारकत्वेन यजमानस्य कर्तृत्वमिति सिद्धान्तः ॥ ९ ॥

---

१ द्विवारमाम्नाताः पठितास्तेषूभावपि प्रयोक्तारौ द्विराम्नानस्यार्थवत्वात् । सि० सू० । २ मन्त्रानुपूर्व्या अभेदेऽप्यर्थभेदः समुच्चितयोः प्रयोक्तृत्वं गमयति । मन्त्रोक्तमनुष्ठास्यामीत्यध्वर्युपठितस्य, अत्र न प्रमदिष्यामीति च याजमानस्यार्थ इति तत्त्वम् । ३ ज्ञाते विदुषि क्लृप्तिवाचनं प्रयोक्तव्यम्, न ह्यविद्वान् क्रतावधिकारीत्यर्थः । सि० सू० । ४ वत्समुपावसृजतीत्यादीनां याजमाने पाठात् तानि कर्माणि यजमानेनानुष्ठेयानि स्युरित्यर्थः । पू० सू० ।

होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ १० ॥

## विप्रतिषेधे करणसमवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ १० ॥

अग्नीषोमीयपशावध्वर्युणा होत्रा च प्रयुक्तौ परिव्याणकरणक्रियमाणानुवादिनौ परिवीरसि युवा सुवासा इति मन्त्रौ चोदकपरम्परया कौण्डपायिनामयनं प्राप्तौ तत्र च ऋत्विक्संक्षेपोऽस्ति यो होता सोऽध्वर्युरिति तत्रैको होता द्वौ प्रयोक्तुमशक्तत्वात्स्वधर्मं क्रियमाणानुवादिनमेव ब्रूयात् होतृधर्मानुरोधेनाध्वर्युधर्मविधानात् परिधिधर्मानुरोधेन यूपधर्मवदिति प्राप्ते,—आध्वर्यवे प्रत्यक्षवचनाद्धोतुः प्राप्तेर्हौत्रेषु चातिदेशात्प्राप्तेर्दुर्वलत्वादाध्वर्यवमेव वदेत् परिधौ तु पशुं नियुञ्जीतेति वचनं नियोजनमात्रे न यूपधर्मेष्विति वैषम्यमिति सिद्धान्तः ॥ १० ॥

प्रैषप्रैषार्थयोः भिन्नकर्तृताधिकरणम् ॥ ११ ॥

## प्रैषेषु च पराधिकारात् ॥ ११ ॥

प्रैषेषु प्रैषार्थेषु च प्रोक्षणीरासादयेत्यादिषु समाख्यानादध्वर्युरेव कर्ता लोट् च प्राप्तकालतायामिति प्राप्ते,—प्रैषसमाख्यानाल्लिङ्गेन समाख्याबाधेनान्यः प्रेषितेति सिद्धान्तः ॥ ११ ॥

प्रैषप्रैषार्थयोः यथाक्रममाध्वर्यवाग्नीध्रताधिकरणम् ॥ १२ ॥

## अध्वर्युस्तु दर्शनात् ॥ १२ ॥

तत्र पदार्थेषु प्राधान्यबहुत्वाभ्यां नाध्वर्युबाधः प्रैषे त्वेकत्वाद्गुणत्वाच्चाध्वर्युबाधेनाग्नीत्कर्तेति प्राप्ते,—अध्वर्योः प्रैषप्रयोजकत्वेन पदार्थेष्वपि कर्तृत्वसंभवान्न कस्यापि बाध इति अध्वर्युः प्रैषं अग्नीत्प्रैषार्थं कुर्यादिति सिद्धान्तः ॥ १२ ॥

---

१ एकेन होत्रा प्रयोगद्वयानुष्ठानविरोधे अध्वर्युमन्त्रं ब्रूयात् यो होतेति विधेयसमवाये अतिदेशप्राप्तसंबन्धतो विशेषात्, इतरमातिदेशिकं मैत्रावरुण एव पठेत्, यतस्तस्मिन् अच्छावाकादिभ्यो होतृसामीप्यरूपविशेषः स्यादित्यर्थः । सि० सू० । २ यो होता सोऽध्वर्युरिति मुख्यत्वाच्छ्रुतिवृत्तो होता जघन्याध्वर्युलक्षितेषु कार्येषु प्रत्यक्षेण वाक्येन विधीयते, हौत्रेषु तु नोदकतः प्राप्तिरिति वाक्यबलादाध्वर्यवमेव वदेदिति शा० दी० । ३ प्रैषेषु तु प्रैषकर्तुरन्यः कर्ता मध्यमपुरुषघटितत्वेन परनिष्ठत्वस्य स्वाभाविकत्वादित्यर्थः । सि० सू० । ४ अध्वर्युः प्रैषार्थकर्ता स्यात् वज्रो वै स्फ्यः यदन्वग्रं धारयेत् वज्रेणाध्वर्युं क्षिण्वीतेति लिङ्गदर्शनादित्यर्थः । पू० सू० । अध्वर्युस्तथा लिङ्गदर्शनादिति पाठो युक्तः ।

करणमन्त्रेषु यजमानफलस्याशासितव्यताधिकरणम् ॥ १३ ॥

**[1]ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ १३ ॥**

ममाग्नेवर्च इत्यादय आशीरूपा अपि करणमन्त्रत्वात् क्रियाकर्त्रा अध्वर्युणैव कार्याः ममेति लिङ्गात्फलमप्यध्वर्योरेवेति प्राप्ते,—प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानफलस्य याजमानत्वावगतेर्मम यो यजमानस्तस्य वर्च इति मन्त्रार्थ इति सिद्धान्तः ॥ १३ ॥

करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताधिकरणम् ॥ १४ ॥

**[2]कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्ता स्यात् ॥ १४ ॥**

मा मा संतप्तमिति फलं तु ऋत्विग्गामित्वेनानुष्ठानोपयोगितया यजमानस्येष्टमिति ऋत्विग्गाम्येव [3]युक्तम् ॥ १४ ॥

द्रव्यसंस्कारस्याङ्गप्रधानताधिकरणम् ।

**[4]व्यपदेशाच्च ।**

तन्नौ सहेतिद्विवचनादप्येवम् ।

अपूर्वप्राकृतधर्माणां विकृतावसंबन्धाधिकरणम् ॥ १५ ॥

**द्रव्य[5]संस्काराः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ १५ ॥**

बर्हिर्धर्मा अङ्गप्रधानार्थत्वाद्यूपावटस्तरणबर्हिष्यपि कार्या इति प्राप्ते,—[6]अप्राकृतकार्यत्वान्नेति सिद्धान्तः ॥ १५ ॥

---

१ ममाग्नेवर्च इत्यादिकरणमन्त्रगतं फलं ऋत्विज अध्वर्योः स्यात् करणमन्त्रघटकममेतिपदस्यैवं सत्यर्थवत्वादित्यर्थः । पू० सू० । विशिष्टं हवनं येषां यज्ञानां ते विहवाः तेषु वर्चस्तेजोपलक्षितं यत् फलं तन्ममास्त्वित्यनेन लिङ्गेन मन्त्रसंचारयितुरध्वर्योस्तत् फलमिति जैमीनीयमालायाम् । २ तेषाम् ऋत्विजां संतापाभावरूपं फलं कर्मार्थं यजमानकर्मसिद्ध्यर्थं यत अतो ऋत्विग्द्वारा स्वामिनं प्रत्यप्यर्थवत्वादित्यर्थः । सि० सू० । ३ अयमत्राशयः, स्वर्गमुद्दिश्य यष्टुं प्रवृत्तो यजमानस्तथा यतते यथा साङ्गं कर्म समाप्तिमियात् । तदर्थं कर्मकरानध्वर्युप्रमुखान् परिक्रीणीते । अध्वर्योः संतापेऽनुष्ठानमेवासिद्धम् । अतस्तदन्यथानुपपत्या संतापाभावमध्वर्योरिच्छति यजमान इति भवति ऋत्विग्गाम्यपि फलम् । ४ निर्देशादपि क्वचिदृत्विजां फलम् । सि० सू० । ५ द्रव्यबर्हिषोः संस्काराः सर्वकर्मार्थाः प्रकरणस्य विशेषविषयत्वाभावादित्यर्थः । पू० सू० । ६ बर्हिधर्मा प्राकृतकार्यद्वारा विकृतिं व्याप्नुवन्ति न स्वत इति यूपावटस्तरणस्य प्राकृतत्वाभावान्न ते । अत्राधिकरणद्वयं पूर्वपक्षोत्तरपक्षरूपं शास्त्रदीपिकादौ स्थापितम् ।

विकृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥ १६ ॥

[1]विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ १६ ॥

संस्कृतस्य बर्हिषः सर्वस्य स्तरणे विनियोगात्पवित्राद्यसंस्कृतादेव कार्यम् ॥ १६ ॥

प्राकृतपुरोडाशादीनां निधानार्थताधिकरणम् ॥ १७ ॥

[2]अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ १७ ॥

पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधातीति न सवनीयपुरोडाशस्य तस्य यागे विनियोगात् किंतु पुरोडाशान्तरं कृत्वेति प्राप्ते,—विनियुक्तस्यैव संस्कारविधानात्सवनीयस्यैव निधानं कार्यमिति सिद्धान्तः ॥ १७ ॥

काम्येष्टियूपांशुत्वस्य प्रधानार्थताधिकरणम् ॥ १८ ॥

[3]विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ १८ ॥

यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इति उपांशुत्वं काम्या इति वचनात्प्रधानाङ्गमेव नाङ्गप्रधानसाधारणम् ॥ १८ ॥

श्येनाङ्गानां नवनीताज्यत्वाधिकरणम् ॥ १९ ॥

[4]सन्निधानविशेषादसंभवे तदङ्गानाम् ॥ १९ ॥

श्येने दृतिनवनीतमाज्यं भवतीति सोमस्थाने प्रधानाङ्गमिति प्राप्ते,—[5]विशिष्टविधिगौरवादतिदेशप्राप्तानुवादेन दृतिनवनीतत्वविधानादङ्गार्थमेवेति सिद्धान्तः ॥ १९ ॥

सर्वेषामेव श्येनाङ्गानां नवनीताज्यत्वाधिकरणम् ॥ २० ॥

[6]तत्काले वा लिङ्गदर्शनात् ॥ २० ॥

दृतिनवनीतमपि श्येनवैशेषिकाङ्गत्वात्सुत्याकालमेव सह पशूनाल-

---

१ विरोधे संस्कृतस्य स्तरणादन्यत्र निषेधे विधृत्यादौ धर्मरहितो बर्हिर्ग्राह्यः संस्कृतस्य वेदिं स्तृणातीति स्तरणश्रुतिविशेषादित्यर्थः । सि० सू० । २ सवनीयपुरोडाशैकदेशस्यापनयः ऐन्द्रवायव्यमात्रे निधानं विद्यमानस्यैव विधिसंयोगविषयत्वात् । सि० सू० । ३ विकृतौ विहितः शेषः गुणः सर्वार्थः दर्शपूर्णमासे वेदिवदित्यर्थः । पू० सू० । ४ दृतिनवनीतत्वविशिष्टाज्यविधानासंभवे संनिधानविशेषात् आतिदेशिकाज्यानुवादेनोक्तगुणविधानात् प्रधाने आज्याभावात् अङ्गानां विधानमाज्ये स्यात् । सि० सू० । ५ विशिष्टविधौ विशेषणविधेरार्थिकत्वाद्गौरवं स्पष्टम् । ६ दृतिनवनीतं सुत्याकालेऽनुष्ठेयं लिङ्गस्यानुमानस्य दर्शनात् । प्रयोगस्तु श्येनविकृतिधर्माः सुत्याकालयोगिनः सोमविकृतिविशेषधर्मत्वात् सह पशूनालभत इतिवत् । पू० सू० ।

भत इति साहित्यवदिति प्राप्ते,—अनुमानस्याप्रयोजकत्वात्सर्वत्रेति सिद्धान्तः ॥ २० ॥

सवनीयानां मांसमयताधिकरणम् ॥ २१ ॥

मांसं तु [1]सवनीयानां चोदनाविशेषात् ॥ २१ ॥

शाक्यानामयने तरसमयाः सवनीयाः पुरोडाशा भवन्तीति इदं मृगमांसं सर्वपुरोडाशेषु स्यादुद्देश्यविशेषणस्य सवनीयत्वस्याविवक्षितत्वादिति प्राप्ते,—सवनीयहविःसामान्योद्देशेन तरसविधिः पुरोडाशपदं पुरोडाशापुरोडाशसमुदाये गौणं पुरोडाशानलंकुर्विंतिवदिति सिद्धान्तः ॥ २१ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ तृतीयाध्यायस्याष्टमः पादः। तृतीयाध्यायश्च समाप्तः ॥ ३ ॥

## चतुर्थाध्यायस्य प्रथमः पादः ।

क्रत्वर्थपुरुषार्थजिज्ञासाधिकरणम् ॥ १ ॥

[2]अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

अत्र प्रयोजकाप्रयोजकयोः क्रत्वर्थपुरुषार्थान्यतररूपत्वात् तयोर्जिज्ञासा अर्थात्प्रयोजकत्वाप्रयोजकत्वप्रकारिका क्रियत इति प्रतिज्ञासूत्रं संगतिबोधनार्थम् अङ्गिनैवाङ्गानां प्रयुक्तिरिति तन्निरूपणस्य प्रयुक्तिहेतुतेति ॥ १ ॥

वर्णकान्तरसहितं क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ॥ २ ॥

[3]यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

फले फलसाधने च पुरुषप्रीतिरिति तत्पुरुषार्थं, तद्भिन्नं क्रत्वर्थमथवा भावनाविशेषणत्वात्करणादिवत्फलस्यापि विधेयत्वशङ्का निराक्रियते,—रागत एव तत्र प्रवृत्तिसिद्धेरिति । यद्वा गोदोहनेन पशुकामस्य प्रणयेदिति

---

१ सवनीयसंबन्धिधानाकरम्भादीनाम् । विधेर्विशेषविषयत्वाभावात् । शेषं स्पष्टम् । सि०सू० । २ अथशब्द आनन्तर्ये, अतः शब्दो हेतौ, यत इत्यध्याहारः, शेषशेषिभावनिरूपणानन्तरं यतः शेषशेषिनिरूपणस्य यतो वक्ष्यमाणक्रत्वर्थपुरुषार्थनिरूपणे हेतुत्वमतस्तयोर्जिज्ञासा क्रियत इत्यर्थः । पू० सू० । ३ यस्मिन् स्वर्गादौ तत्साधने च पुरुषस्य कृतकृत्योऽहमिति प्रीतिर्भवति स पुरुषार्थः तस्य पुरुषार्थस्य लिप्सा शास्त्रं विनाप्यर्थसिद्धा फलेन सह साध्यसाधनरूपेणाविभक्तत्वा दव्यभिचारा दित्येकोऽर्थः । यद्वा यस्मिन्ननुष्ठिते सति पुरुषस्य तदेव सुखसाधनं भवति स पुरुषार्थः । शेषं पूर्ववत् । पू० सू० ।

इनं फलहेतुत्वात्प्रणयनद्वारा क्रतूपकारकत्वाच्च पुरुषार्थं क्रत्वर्थं चेति प्राप्ते,– श्रुत्या पुरुषार्थत्वमेव न तु क्रत्वर्थमपि तदर्थतया विध्यभावादिति सिद्धम्। अथवा प्रतिग्रहादिना ब्राह्मणादेर्द्रव्यार्जननियमविधिः स्मृत्युक्तः क्रत्वर्थः पुरुषार्थत्वे नियमानर्थक्यादिति प्राप्ते,–प्रत्यक्षेण पुरुषार्थत्वमेव क्रत्वर्थता त्वनुमानेन स्यात् तच्च दुर्बलं क्रतोरपि पुरुषार्थत्वात्तदुपयोगेऽपि न क्रत्वर्थता नियमस्तु प्रत्यवायपरिहारार्थ इति सिद्धान्तः ॥ २ ॥

प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ॥ ३ ॥

**तदुत्सर्गे कर्मणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥**

नेक्षेतोद्यन्तमादित्यमित्यत्र निषेध एव वाक्यार्थः न तूद्यदादित्यानीक्षणसंकल्पविधिः तत्र क्रियान्वयस्यैव व्युत्पन्नत्वात् लक्षणापत्तेश्च तेन यत्र कर्मणि आदित्येक्षणं श्रुतं तत्रोद्यतस्तन्निषेधस्तत्कर्माङ्गमिति प्राप्ते,– तस्य व्रतमित्युपक्रमेऽनुष्ठेयवाचिव्रतशब्दबलादुक्तसंकल्पलक्षणाया आवश्यकत्वात्पर्युदास एव पापक्षयार्थः नैतावताहैनसा युक्तो भवतीति वाक्यशेषादिति सिद्धान्तः ॥ ३ ॥

यज्ञायुधानामनुवादत्वाधिकरणम् ॥ ४ ॥

**द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥ ४ ॥**

स्फ्यश्च कपालानि चेत्युपक्रम्य तेषां एतानि वै दश यज्ञायुधानीति

---

१ द्रव्यार्जनं रागप्राप्तं न शास्त्रव्यापारमपेक्षते इति लौकिकालौकिकपुरुषार्थभूतं प्रत्यक्षेण पुरुषार्थमेव । क्रतुरपि पुरुषार्थ एवेति तदर्थत्वमप्यार्थिकं न तु नियतमिति नानुमानेन क्रतुशेषतैव बोध्यत इति भावः । २ प्रतिग्रहादिना द्रव्यार्जनरूपः। अयमाशयः, द्रव्यार्जनस्य दृष्टकार्यार्थत्वाभावे वरमदृष्टार्थत्वं भवतु न तावता क्रत्वङ्गत्वमपि तु नियमस्यैव तदङ्गत्वमदृष्टार्थस्यापि पुरुषार्थत्वात् । एवं सति विहितोपायातिरेकेण द्रव्यमर्जन् प्रत्यवेयादिति प्रत्यवायपरिहारद्वारा पुरुषार्थतैव नियमस्येति तत्त्वम् । ३ एतद्वाक्यविहितकर्मणि प्रीत्यभावेऽपि निषेधः पुरुषार्थो भवति शास्त्रस्य तर्काबाध्यत्वात्, क्रत्वङ्गभूतं संस्कृतं द्रव्यं न चिकीर्ष्यते निषेध्यत्वेन निषेधस्यानारभ्याधीतत्वात् तेन हेतुना फलेनाभिसंबन्धात् पुरुषस्य श्रुतिरित्यर्थः । सि० सू० । ४ निषेधे मुख्यार्थलाभात् । ५ प्रतिषेधे । ६ ईक्षणास्य संकल्पलक्षणापत्तेः । किंच पुरुषाधिकारसिद्धये फलमपि कल्प्यम् । ७ द्रव्याणि स्फ्यकपालादीनि अविशेषेण श्रुतान्यपि वाक्यवैय्यर्थ्याद्देवतोद्देशेन दातव्यानीत्यर्थः । पू० सू० ।

वाक्येन यज्ञसाधनत्वं विधीयते स्फ्येनोद्धन्तीत्यादिसिद्धानुवादकत्वे सकलवाक्यानर्थक्यापत्तेः अतः पुरोडाशादिभिर्विकल्प इति प्राप्ते,—यज्ञायुधानि संभरन्तीति विधिनैकवाक्यत्वादर्थवादत्वमिति सिद्धान्तः ॥ ४ ॥

पश्वेकत्वविवक्षाधिकरणं, लिङ्गस्य च ॥ ५ ॥

[१]तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ५ ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र पश्वेकत्वं समानपदश्रुत्या पश्वन्वितं क्रियान्वयाभावादविवक्षितमिति प्राप्ते,—समानाभिधानश्रुत्या प्रबलया कारकान्वितस्य क्रियान्वयाद्विवक्षितमेव [३]तत्, पश्वन्वयस्तु [३]पार्ष्ठिक इति सिद्धान्तः । एवं [४]वा अलिङ्गे विपरीतलिङ्गे च वृक्षमक्षिकादौ प्रयोगाल्लिङ्गमशब्दार्थ इत्यविवक्षितमिति प्राप्ते,—सिंहः सिंहीत्यादौ नियतलिङ्गप्रतीतेः शब्दवाच्यत्वात्तदपि विवक्षितमिति सिद्धान्तः ॥ ५ ॥

आश्रयिणामदृष्टार्थताधिकरणम् ॥ ६ ॥

[५]आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयते ॥ ६ ॥

स्वाहाकारस्विष्टकृदादयो द्रव्यदेवतासंस्कारा एवेति प्राप्ते,—प्रक्षेपमन्त्राभ्यां संस्कारेऽपि त्यागांशेनादृष्टावश्यकत्वादुभयार्थां इति सिद्धान्तः ॥ ६ ॥

दध्यानयनस्यामिक्षाप्रयोज्यताधिकरणम् ॥ ७ ॥

[६]एकनिष्पत्तेः सर्वं समं स्यात् ॥ ७ ॥

तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुतं, तत्रामिक्षा वाजिनं चेत्युभयमपि दध्यानयनप्रयोजकं तत्साध्यत्वा-

---

१ समुच्चय इत्यपि ज्ञेयम् । २ उदाहृतवाक्ये एकत्वं संख्यामात्रं यज्ञाङ्गं न यागान्वितं न अर्थस्य पश्वादेस्तत्र विशेषणत्वादित्यर्थः । पू० सू० । ३ एकत्वम् । पृष्ठात् जातः, आरुण्यस्येव एकहायनीद्वारा क्रये । ४ इदमधिकरणान्तरमिति शास्त्रदीपिकाकारस्य मतम् । भाष्ये तु पूर्वाधिकरणशेष अधिकरणान्तरं वेत्युभयमुक्तम् । ५ अन्यदीयं द्रव्यं देवतां वा ये आश्रयन्ति ते आश्रयिणः स्वाहाकारप्रभृतयः, तेषु अपूर्वं कर्म प्रतीयते तेषामपूर्वकर्मत्वं, कुतः अपूर्वार्थैर्वैलक्षण्यादित्यर्थः । सि० सू० । * अर्थेन समवैषम्यमतो द्रव्यकर्मणाम् ॥ अर्थेन फलेन सहान्वयवेलायां द्रव्यकर्मणां समवैषम्यं प्रतिजानीत इत्यर्थः । एतावत्पर्यन्तं शेषशेषिचिन्तैव कृता अत ऊर्ध्वं प्रयोज्यप्रयोजकचिन्ताकरिष्यत इति प्रतिज्ञा क्रियते । अत एवास्य प्रतिज्ञाधिकरणमिति नाम शास्त्रदीपिकादिषु दृश्यते । अत्र ग्रन्थे तदनुल्लेखे बीजं मृग्यम् । ६ आमिक्षावाजिनयोरुभयोरपि एकदैव निष्पत्तेः तयोः सर्वं प्रयोजकत्वादि समं स्यादित्यर्थः । पू० सू० । घनीभूतं पयः आमिक्षा, जलं वाजिनम् ।

विशेषादिति प्राप्ते,—सेति तत्पदेन दध्यानयनं प्रत्यपि प्रधानतया परामृष्टस्य पयसो देवतासंबन्धाद्धनीभावेन तस्यामिक्षापदार्थत्वात्तदर्थं दध्यानयनं श्रुतं न वाजिनार्थमिति न तद्दध्यानयनप्रयोजकमतो न तन्नाशादौ पुनर्दध्यानयनानुष्ठानमिति सिद्धान्तः ॥ ७ ॥

गवानयनस्य पदकर्मप्रयोज्यत्वाभावाधिकरणम् ॥ ८ ॥

**पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ ८ ॥**

एकहायन्या क्रीणातीत्युपक्रम्य षट्पदान्यनुनिष्क्रामति सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति तेनाक्षमुपाञ्ज्यादिति च श्रुतं, तत्र क्रयाक्षाभ्यञ्जनयोर्द्वयोरप्येकहायनीनयनसाध्यत्वात्तत्प्रयोजकत्वमिति प्राप्ते,—क्रयार्थत्वेनैकहायनीश्रवणात्तत्संस्कारार्थं नयनमपि क्रयार्थमेव; अक्षाभ्यञ्जनं तु क्रयार्थानीयमानैकहायनीपदपांसूनुपजीवतीति तदभावे यत्किंचित्पांसुभिः कार्यमिति सिद्धान्तः ॥ ८ ॥

कपालानां तुषोपवापाप्रयोज्यताधिकरणम् ॥ ९ ॥

**अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थे हि विधीयते ॥ ९ ॥**

पुरोडाशकपालेन तुषानुपवपतीत्यत्र तृतीयया पुरोडाशकपालस्य तुषोपवापार्थत्वावगमात्तुषोपवापोऽपि तत्प्रयोजक इति प्राप्ते,—पुरोडाशार्थतयोपात्तस्यैव विनियोगात्पुरोडाश एव प्रयोजको न तुषोपवापः अतस्तदसंभवे हस्तादिना स कार्य इति सिद्धान्तः ॥ ९ ॥

शकृल्लोहितयोः पशावप्रयोजकताधिकरणम् ॥ १० ॥

**पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ १० ॥**

अग्नीषोमीयं पशुं प्रकृत्य हृदयस्याग्रेऽवद्यति शकृत्संप्रविध्यति लोहितं निरस्यतीति श्रुतं तत्र हृदयाद्यवदानं शकृल्लोहितनिरसनं चाविशेषादा-

---

१ तथा च मन्त्रः "जुषन्तां युज्यं पयः" इति। २ पदकर्म अक्षाभ्यञ्जनं गवामयनस्य प्रयोजकं न तस्य सोमक्रयार्थत्वादित्यर्थः। सि० सू०। ३ अर्थेन फलेन सहाभिधानं यस्य कपालस्य तत्साध्यं कर्म तुषोपवापादि अप्रयोजकम्, भविष्यता पुरोडाशेन सह यः संबन्धस्तस्यैव पुरोडाशकपालव्यवहारप्रयोजकत्वात्, अतस्तुषोपवापप्रयोजनको भाविसंबन्ध एव विधीयत इत्यर्थः। सि० सू०। ४ प्रयुक्तस्य पुनः प्रयुक्तिर्न भवतीत्यभिप्रायः। ५ लोहितशकृतोः पशावप्रयोजकत्वं तदर्थं पशोरनालम्भादित्यर्थः। सि० सू०।

लम्भस्य प्रयोजकमिति प्राप्ते,—हृदयादेर्हविष्ट्वात्प्रयोजकत्वं शकृल्लोहित-निरसनं तु प्रतिपत्तिमात्रमिति सिद्धान्तः ॥ १० ॥

पुरोडाशस्य स्विष्टकृदप्रयोज्यताधिकरणम् ॥ ११ ॥

**[1]एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ ११ ॥**

उत्तरार्धात्स्विष्टकृते समवद्यतीति स्विष्टकृत्पुरोडाशान्तरप्रयोजकः आग्नेयस्य देवतान्तरासंगतेरिति प्राप्ते,—[2]उत्तरार्धादिशब्दानां संबन्ध्याकाङ्क्षायां प्रकृताग्नेयादिपुरोडाशस्यैवान्वयाद्वचनाद्देवतान्तरसंबन्धोपपत्तेः प्रतिपत्तिः, स्विष्टकृदप्रयोजकः, अतस्तन्नाशे आज्येनैव समापनमिति सिद्धान्तः ॥ ११ ॥

अभिघारणे शेषधारणतत्पात्रयोरनुष्ठानाधिकरणम् ॥ १२ ॥

**[3]अभिघारणे विप्रकर्षादनूयाजवत्पात्रभेदः स्यात् ॥ १२ ॥**

वाजपेये ऋतुपशवः प्राजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते । पर्यग्निकरणान्ते ब्रह्मसाम्न्यालभन्त इति माध्यन्दिने प्राजापत्यानामुत्कर्षः ऋतुपशवस्तु प्रातःसवन एवालभ्यन्ते तत्र प्रयाजशेषेण हवींष्यभिघारयतीति वचनात्प्राजापत्यवपाभिघारणाय प्रातःकृतप्रयाजशेषः पात्रान्तरे धारयितव्यः जुह्वा व्यापृतत्वात् । न चाभिघारणं शेषस्य प्रतिपत्तिः सा प्रातर्जातैवेति वाच्यम्, उपयोक्ष्यमाणहविःसंस्कारस्योपयुक्तसंस्काराद्बलवत्वात् [4]विभक्तिश्रुतत्वाच्चेति प्राप्ते,—शेषप्रतिपत्तौ [5]दृष्टार्थत्वाद्धविःसंस्कारस्य चादृष्टत्वादनपेक्षितत्वाच्च शेषप्रतिपत्तिरेव युक्ता हविराधारनियमस्त्वदृष्टार्थः तस्मान्न शेषधारणमिति सिद्धान्तः ॥ १२ ॥

समानयनस्याज्यप्रयोज्यताधिकरणम् ॥ १३ ॥

**[6]समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ १३ ॥**

---

१ एकदेशः पुरोडाशोत्तरार्धो द्रव्यं यस्य स स्विष्टकृत् पुरोडाशस्याप्रयोजकः, उत्पत्तौ कर्मोत्पत्तिवाक्ये यदाग्नेयोऽष्टाकपाल इत्यनेनाग्न्यादिभिस्तस्य क्लृप्तसंबन्धात्वादित्यर्थः । सि०सू० । २ उत्तरार्धादिशब्दा न स्वतन्त्रेणार्थप्रतिपादकाः, न च स्ववाक्ये प्रतिसंबन्धी वर्तते अस्योत्तरार्धादिति तेन भवति संबन्ध्याकाङ्क्षा । ३ अभिघारणेऽनुष्ठेये सति कालान्तरभाविना हविषा विप्रकर्षात् दूरस्थत्वात् पात्रभेदः स्यादनुयाजसाधनपृषदाज्यधारणपात्रवदित्यर्थः । पू० सू० । ४ द्वितीयाविभक्तिश्रुतेरित्यर्थः । ५ शेषस्य प्रतिपत्तिरपेक्षिता तादर्थ्येऽभिघारणं दृष्टार्थं भवति, हविःसंस्कारस्त्वनपेक्षितोऽदृष्टं कल्पयेतेति शास्त्रदीपिका । ६ उपभृतः सकाशात् जुह्वां समानयनं घृतस्य मुख्यं

यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्यदुपभृति प्रयाजानुयाजेभ्यः अतिहायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमिति श्रुतं तत्र प्रयाजानुयाजेभ्य इत्यविशेषश्रवणादौपभृतं सर्वप्रयाजार्थमिति तदारम्भ एवानीतमुपभृति केवलमनुयाजार्थमेवास्ति तस्येदमानयनं संस्कारमात्रत्वादप्रयोजकं जौहवौपभृतयोराज्ययोः प्रयाजेषु विकल्प इति प्राप्ते,—समानयनमुद्दिश्य लाघवाद्बर्हिःप्रतीति कालमात्रविधानादनुयाजार्थस्याप्राप्तस्यानयनस्य कालस्य च विधौ गौरवाददृष्टकल्पनापत्तेश्च प्रयाजार्थस्यैवेदमानयनं प्रयाजद्वयं कर्तुमिति प्रयोजकमेव । एवं च प्रयाजानुयाजेभ्य इत्युपरितनप्रयाजद्वयविषयं भवति जौहवं तु आद्यप्रयाजत्रयविषयमिति विषयभेदात्समुच्चय इति सिद्धान्तः ॥ १३ ॥

औपभृतजौहवयोः क्रमेणोभयानुभयार्थताधिकरणम् ॥ १४ ॥

## तत्रोत्पत्तिरविभक्ता स्यात् ॥ १४ ॥

चतुर्जुह्वां गृह्णाति अष्टावुपभृति चतुर्ध्रुवायामित्याज्यानि सर्वकार्यार्थानि प्रयाजेभ्यस्तदित्यादिस्त्वनुवादः अथवौपभृतं केवलानुयाजार्थं जौहवं च प्रयाजार्थमिति प्राप्ते,—प्रयाजानुयाजेभ्य इति वचनादौपभृतमुभयार्थं जौहवं प्रयाजार्थम् ,—अनुयाजेभ्य इति वचनं त्वौपभृतस्यानुवाद इति सिद्धान्तः ॥ १४ ॥

उपभृति द्विचतुर्गृहीताधिकरणम् ॥ १५ ॥

## तदष्टसंख्यं श्रवणात् ॥ १५ ॥

अष्टावुपभृति गृह्णातीति अष्टसंख्यैकग्रहणविधिः तेन चतुर्गृहीतं जुहो-

---

प्रधानकर्म स्यात् " चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान्यक्ष्यन् भवतीति लिङ्गदर्शनादित्यर्थः । सि० सू० ।

१ सर्वप्रयाजार्थयोरेकार्थत्वात् । २ तथाह्यन्यार्थे विधानं दृष्टार्थं च समानयनं भवतीति भावः । ३ तत्र जौहवाद्याज्ये उत्पत्तिः ग्रहणोत्पत्तिबोधकं वाक्यम् अविभक्ता एतदर्थमेव ग्रहणमिति विभागरहिता स्यात् । इदं प्रयाजेभ्य इदमनुयाजेभ्य इति विभागाभावात्सर्वार्थमित्यर्थः । ग्रहणवाक्ये प्रयाजानुयाजपदमनुवादकमिति भावः । पू० सू० । ४ अयं भावः, यज्जुह्वां गृह्णाति तद्यदि केवलप्रयाजार्थं तर्ह्यौपभृतमपि केवलानुयाजार्थं स्यात् । अथ तत्रानुयाजपदमनुवादस्तर्ह्यत्रापि समानन्यायात् प्रयाजपदमनुवादकमेव स्यादिति । ५ अनुवादत्वे आनर्थक्यात् प्रमाणबलप्राप्तस्य त्यागायोगात् व्यवस्थितविषयत्वमस्त्वित्यभिप्रायः । ६ तदौपभृतमाज्यमष्टसंख्यं स्यात् अष्टावुपभृतीत्युत्पत्तिवाक्येऽष्टत्वस्य श्रवणादित्यर्थः । पू० सू० ।

तीत्यस्य बाध इति प्राप्ते'—चतुःसंख्यायाः प्रधानार्थत्वात्तया ग्रहणाङ्गाष्टसंख्या अङ्गाङ्गत्वाद्बाध्यते अतोऽष्टत्वस्य निष्फलत्वापत्त्या चतुःसंख्याद्वयलक्षणार्थत्वमिति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायबिन्दौ चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

## चतुर्थाध्यायस्य द्वितीयः पादः ।

स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

### स्वैरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

पशौ यूपस्य स्वरुं करोति स्वरुणा पशुमनक्तीति । अत्र स्वरुं करोतीति स्वरुकर्मकभावनाविधिः । तत्र करणेतिकर्तव्यताकाङ्क्षायां यूपस्येत्यनेन लक्षणया खादिरादिकाष्ठं करणत्वेन, छेदनादि चेतिकर्तव्यतात्वेन बोध्यते। तथाभूतस्य पश्वञ्जने विनियोगः । एवं च स्वरुनाशे पुनस्तदुत्पादनमिति प्राप्ते,—अञ्जनसाधनत्वेनावगतस्य स्वरोः प्राप्तमुपादानं करोतिनाऽनूद्य यूपस्येति तदनुनिष्पन्नशकलस्य विधानादप्रयोजकः स्वरुरुत्पत्तेरिति सिद्धान्तः ॥ १ ॥

शाखाया आहार्यताधिकरणम् ॥ २ ॥

### शाखायां तत्प्रधानत्वात् ॥ २ ॥

प्राचीमाहरतीति प्राचीं दिशं प्रति शाखामाहरतीत्यर्थ इति प्राप्ते,—अध्याहारे मानाभावात्प्रकृतशाखैव प्राचीशब्देनोच्यते वृक्षस्य या प्राचीशाखा तामिति सिद्धान्तः ॥ २ ॥

---

१ यूपच्छेदनवेलायां प्रथमपतितः काष्ठशकलः स्वरुः, सः यूपक्रियान्यक्रियोत्पत्तिः स्यात्, यूपस्य स्वरुं करोतीति स्वतन्त्रवाक्येन तदुत्पत्तिबोधनादित्यर्थः पू० सू० । २ अयं भावः, स्वरुभावनाविधाने भावनायाः स्वभावतः करणाद्याकाङ्क्षायां यूपशब्दो लक्षणया खादिरादिवृक्षं करणत्वेन छेदनादीनि च कर्माणीतिकर्तव्यतात्वेनार्पयन्मुख्यस्य यूपस्यैव जघन्यवृत्तित्वं कुर्यात् । मम तु जघन्यस्य करोतेर्लक्षणा । किंच एतेनैव वाक्येन करणेतिकर्तव्यतादीनामपि विधेयत्वाद्बहुविधेयं तव; मम तु विशेषणमात्रविधानमित्यल्पं विधेयमिति दिक् । ३ शाखायामित्यस्याग्रे प्राची इति शेषः। तथा च शाखायां प्राचीशब्दो वर्तते शाखायाः प्रधानत्वादित्यर्थः । सि० सू० । ४ दिग्बोधकत्वे दिश आहरणासंभवात् दिशं प्रत्याहरतीति व्याख्याने प्रतिशब्दाध्याहारदोषात् शाखापदसामानाधिकरण्याच्चात्र वृक्षस्य प्राची शाखैव ग्राह्या ।

छेदनस्य शाखाप्रयुक्तताधिकरणम् ॥ ३ ॥

**शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ॥ ३ ॥**

मूलतः शाखां परिवास्योपवेषं करोति उपवेषेण कपालान्युपदधाति शाखया वत्सानपाकरोति इति श्रुतं, तत्र शाखाशब्देन मूलाग्रयोर्द्वयोरप्यभिधानात् द्वयमपि छेदनादीनां प्रयोजकमिति प्राप्ते,—मूलापादानकस्य परिवासनस्याग्रसंस्कारत्वान्मूलमपि तदर्थमेव, तत्प्रयुक्तेनैव तेन कपालमुपधीयत इति सिद्धान्तः ॥ ३ ॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ४ ॥

**हरणे जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात् ॥ ४ ॥**

सह शाखया प्रस्तरं प्रहरतीति सहयोगेन शाखाया प्रस्तरवद्यागसाधनत्वमिति प्राप्ते,—प्रहरणमात्रे साहित्येऽपि यागाश्रवणान्न तत्साधनत्वं सूक्तवाकेनेति वाक्ये तु मन्त्रविधिबलात्प्रहरतिर्यागलक्षणार्थो न त्वत्र मानाभावादिति सिद्धान्तः ॥ ४ ॥

निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ५ ॥

**उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद्विभागः स्यात् ॥ ५ ॥**

अपः प्रणयतीति प्रणीताभिर्हवींषि संयौतीति अन्तर्वेदि प्रणीता निनयतीति च श्रुतं, तत्र संयवनं निनयनं च द्वयमपि प्रणीताप्रयोजकमिति प्राप्ते,—तृतीयया संयवने विनियुक्तानां द्वितीयया निनयनं प्रतिपत्तिर्विधीयते अतस्तदप्रयोजकमिति सिद्धान्तः ॥ ५ ॥

---

१ शाखायां शाखाच्छेदनप्रतिपादके वाक्ये शाखां छिनत्तीति द्वितीयायोगात् शाखायाः प्राधान्यात् उपवेषेण छेदनभेदः प्रतीयते तस्य करोतिकर्मत्वेन छेदनस्य तदर्थत्वेन शाखातो वैषम्यादित्यर्थः । सि० सू० । २ हरणवाक्ये हरणपदं जुहोत्यर्थकं प्रस्तरशाखयोः समं यागसाधनत्वात्, द्रव्याणां यागशेषत्वान्न शाखा प्रधानं प्रेरहणं प्रतीत्यर्थः । पू० सू० । सूक्तवाकेनेति वाक्ये मान्त्रवर्णिकदेवताविधिबलाद्यागकल्पनायामपि प्रहरणे सूक्तवाकसाधनकत्वाभावान्न यागविधिरिति भावः । ३ अपः प्रणयतीत्युत्पत्तिविधौ संयवनविमुञ्चनयोरश्रवणात् प्रणीतानामपां ध्रुवाज्यवदुभयत्र तुल्यो विनियोग इत्यर्थः । पू० सू० । ४ अयं भावः, उत्पत्तिवाक्ये एतदर्थमेवेति विशेषाश्रवणेऽपि प्रयोजनवशात् तृतीयया संयवनार्थत्वं प्रणीतानामपां प्रतीयते । तथा च कृतोपकाराणां पुनर्द्वितीयाश्रुत्या विधीयमानं निनयनं प्रतिपत्तिरेवेति ।

दण्डदानस्यार्थकर्मताधिकरणम् ॥ ६ ॥

**प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ ६ ॥**

मैत्रावरुणाय दण्डं प्रयच्छतीति दानं दण्डप्रतिपत्तिरिति प्राप्ते,—चतुर्थ्या मैत्रावरुणस्याभिप्रेतत्वेन तत्प्रधानं दानं दण्डमिति तु अनीप्सितकर्मणि द्वितीया अवलम्बनार्थत्वेन दृष्टार्थत्वमेव दानस्येति सिद्धान्तः ॥ ६ ॥

प्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ७ ॥

**उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमनेऽशेषत्वात्प्रतिपत्तिः स्यात् ॥ ७ ॥**

चात्वाले कृष्णविषाणां प्रास्यतीति कण्डूयनोपयुक्ताया विषाणायाः प्रतिपत्तिरेव कृतकार्यस्याप्याकीर्णतानिवृत्त्यर्थं तदपेक्षणादिति सिद्धान्तः ७

अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ८ ॥

**सौमिके च कृतार्थत्वात् ॥ ८ ॥**

यत्किंचित्सोमलिप्तं तेनावभृथं यन्तीति तृतीयाश्रुतेः सोमलिप्तं साधनमिति प्राप्ते,—वारुणेनैककपालेनावभृथं यन्तीति पुरोडाशद्रव्यके सोमलिप्तासंभवादवभृथदेशनयनं तत्प्रतिपत्तिरिति सिद्धान्तः ॥ ८ ॥

कर्तृदेशकालविधीनां नियमार्थताधिकरणम् ॥ ९ ॥

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ ९ ॥**

दर्शपूर्णमासयोश्चत्वार ऋत्विजः समे यजेतेत्यादिकर्तृदेशकालव्रीह्यादिद्रव्याणामर्थादेव प्राप्तेर्न तद्विधिः किं त्वनुवाद इति प्राप्ते,—नियमार्थत्वेन तद्विधिरेवेति सिद्धान्तः ॥ ९ ॥

---

१ चात्वाले कृष्णविषाणां प्रास्यतीति वन्मैत्रावरुणाय दण्डदानं कृतार्थत्वात् प्रतिपत्तिकर्मेत्यर्थः । पू० सू० । २ उपयुक्तस्य संस्कारादुपयोक्तव्यस्य गरीयस्त्वात् । ३ तत्फलं तु निरूढपशौ दीक्षाया अभावेऽपि अदृष्टार्थं मैत्रावरुणाय दण्डप्रदानम् ४ उत्पत्तिवाक्ये यदङ्गं यत्फलयुक्तं तदर्थं तद् भवति, कुतः तृतीयाश्रुतेः तत्कार्यं प्रत्यङ्गत्वबोधने हेतुत्वात्, तस्य तु वाक्यान्तरेण पदार्थान्तरसंबन्धबोधने द्वितीयाया अनङ्गत्वात् प्रतिपत्तिः स्यादित्यर्थः । सि० सू० । ५ सोमसंबन्धिन्यवभृथे सोमलिप्तपात्रानयनं प्रतिपत्तिः कृतार्थत्वादित्यर्थः । सि० सू० । ६ उत्पत्तिशिष्टवारुणैककपालावरुद्धे यागे सोमलिप्तानां हविष्ट्वासंभवादवभृथसोमलिप्तसंबन्धविधाने गौरवात् प्रक्षेपपदेन तेषां त्यागरूपा प्रतिपत्तिरेवेति हृदयम् । ७ अध्वर्युप्रभृतिऋत्विजां, समे यजेत वसन्ते यजेतेति देशकालयोः, तैर्विनाऽनुष्ठानासिद्ध्या तेषां संबन्धस्य नित्यत्वात् । पू० सू० । ८ समे विषमे, वसते अन्यत्र, सोमेनान्येन वेत्यनियमान्न समादिविधानं

द्रव्ये गुणविधानस्य नियमार्थताधिकरणम् ॥ १० ॥

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ १० ॥

शुक्लानां चरुरित्यादावपि द्रव्यद्वारेण गुणस्य नियमविधिः ॥ १० ॥

अवघातादिसंस्कारविधेर्नियमार्थताधिकरणम् ॥ ११ ॥

संस्कारे च तत्प्रधानत्वात् ॥ ११ ॥

व्रीहीनवहन्तीत्यत्राप्यपूर्वसाधनोद्देशेनावघातनियमविधिः ॥ ११ ॥

याग-होमस्वरूपनिरूपणाधिकरणे ॥ १२ ॥ १३ ॥

यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ १२ ॥

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ १३ ॥

देवतोद्देशेन द्रव्यत्यागो यागः। तन्मात्रं यजतिशब्देनोच्यते। प्रक्षेपस्तु चतुरवत्तं जुहोतीति वचनादङ्गम्। स एव प्रक्षेपाधिको होमो जुहोतिनोच्यते अग्निहोत्रं जुहोतीत्यादाविति लक्षणसूत्रम् ॥ १२–१३ ॥

बर्हिष आतिथ्यादिसाधारण्याधिकरणम् ॥ १४ ॥

विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ १४ ॥

यदातिथ्यायां बर्हिस्तदुपसदामित्यातिथ्यातोऽपहृत्योपसदां विधिः आतिथ्यायां विधिसाफल्याय वा तदुपयुक्तस्यैवोपसत्सु विधिः शिष्टाचारविरोधाद्वा यादृशमातिथ्यायाम् आश्वबालादिकं तादृगेवोपसत्स्विति

---

स्यादित्यनियमव्यावृत्त्यर्थतया यत्र पक्षे न समादिप्राप्तिस्तत्र तेषां विधानम्। अतो नानुवादत्वं नापि समदेशविधाने विषमनिवृत्तिरूपा परिसंख्येति नियामकत्वमेवेति भावः।

१ श्वेतमालभेतेत्यादौ पशुषु श्वेतादिगुणविधिर्नियमार्थः, उत्पत्तिशिष्टपशुसंबन्धादित्यर्थः। अ०सू०। २ यजतिचोदना यजतिधात्वर्थः याग इति यावत्, द्रव्यदेवतयोः क्रियायाश्च संबन्धः समुदाये द्रव्यदेवतक्रियासमुदाये, कृतार्थत्वात् तत्र यागशब्दस्य शक्तेः सत्त्वात् यजतिधातुप्रतिपाद्ये कर्मण्यासेचनाधिकः द्रवद्रव्यप्रतियोगिकवह्निसंयोगः अधिकः यत्र स होमः। तथैव याज्ञिकव्यवहारादित्यर्थः। शास्त्रदीपिकादौ सूत्रभेदो न दृश्यते। कुत्रचित्–ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः–इत्यधिकं सूत्रं पठितम्। स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं ददात्यर्थ इति तदर्थः। ३ अश्वबालः प्रस्तर इत्यादिविधेः यावत्कर्मसमाप्ति सत्त्वात् कर्मान्तरे आश्वबालप्रस्तरः विधेरतिदेश इत्यर्थः। पू० सू०।

प्राप्ते,—बर्हिःशब्देन धर्मलक्षणापत्तेः सर्वसाधारण्येनैकं बर्हिरुपादेयमित्यर्थ इति सिद्धान्तः ॥ १४ ॥

इति श्रीन्यायबिन्दौ चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

## चतुर्थाध्यायस्य तृतीयः पादः ।

द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम् ॥ १ ॥

**द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ॥ १ ॥**

यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यपापश्लोकश्रवणफलार्थं पर्णताविधिरिति प्राप्ते,—जुहूद्वारा क्रत्वङ्गत्वेन कामपदाश्रवणेन च न फलविधिः । अतो न स पापमित्यादिरर्थवादः । एवमन्यत्राप्यङ्गे फलश्रुतिरर्थवाद इति सिद्धान्तः ॥ १ ॥

नैमित्तिकानां मृन्मयत्वादीनामनित्यताधिकरणम् ॥ २ ॥

**नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात् ॥ २ ॥**

अपः प्रणयतीति प्रकृत्य मृन्मयेन प्रतिष्ठाकामस्येति काम्यमेव मृन्मयं नित्यार्थेऽपीति प्राप्ते,—वारणो यज्ञावचर इति नित्यविधिबलात्तदेव नित्यार्थे मृन्मयं तु फलार्थे विशेषतो विहितं तत्रैवेति सिद्धान्तः ॥ २ ॥

---

१ यदातिथ्यार्थं बर्हिस्तन्न केवलमातिथ्यार्थमेव किन्तूपसदर्थमग्नीषोमीयार्थमपीत्येवं विध्यर्थोऽवसेयोऽन्यथा बर्हिःशब्दस्य धर्मलक्षकत्वं स्यादिति भावः । २ द्रव्यसंस्कारकर्मसु द्रव्यसंस्कारप्रधानकर्मसु अपापश्लोकश्रवणादिफलश्रवणमर्थवादः स्यात् पर्णमयीत्वादीनां क्रत्वर्थत्वेन परार्थत्वादित्यर्थः । सि० सू० । ३ अत्रैवं शास्त्रदीपिकादौ पर्णमयीत्वस्य क्रत्वर्थत्वपुरुषार्थत्वतदुभयार्थत्वपक्षेषु कतरो युक्त इति सन्देहे अपापश्लोकश्रवणरूपफलसद्भावात् पुरुषार्थत्वरूपमाद्यं पक्षमुद्भाव्य, जुहूद्देशेन क्रत्वर्थत्वं फलोद्देशेन पुरुषार्थत्वमपीति द्वितीयं चोद्यमुक्त्वा उभयविधाने वाक्यभेदादपापश्रवणस्यार्थवादत्वमेवेति सिद्धान्तितम् । ४ यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते, यत् प्रयाजा इज्यन्ते वर्मैवैतत् यज्ञस्य क्रियत इत्यादौ । ५ मृन्मयेन प्रतिष्ठाकामस्येति श्रुतं मृन्मयत्वादि प्रतिष्ठार्थे निमित्ते विधीयमानं विकारत्वात् क्रतुः प्रधानमङ्गी यस्येति व्युत्पत्त्या क्रत्वङ्गं नित्य मन्यत् चमसादि स्यादिर्थः । सि० सू० । ६ प्रणयनस्य साधनाकाङ्क्षायामश्रुतस्य साधनत्वाद्वरं काम्यस्य श्रुतस्य संबन्ध इत्यभिप्रायः । ७ सामान्यविहितेनार्थाक्षिप्तेन वा नित्यस्य साधनाकाङ्क्षानिवर्तेत इति नान्यत्रश्रुतस्य नित्याङ्गत्वम् ।

दध्यादेर्नित्यनैमित्तिकोभयार्थत्वं, संयोगपृथक्त्वाधिकरणम् ॥ ३ ॥

**ऐकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ३ ॥**

दध्नेन्द्रियकामस्येति काम्यमेव दधि नित्यमपि, दध्ना जुहोतीति पृथक् श्रवणादिति पूर्वापवादः ॥ ३ ॥

पयोव्रतादीनां क्रत्वर्थताधिकरणम् ॥ ४ ॥

**द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ४ ॥**

ज्योतिष्टोमे पयो व्रतं ब्राह्मणस्येति पुरुषार्थमेव दृष्टार्थत्वादिति प्राप्ते,— नियमस्य दृष्टासंभवात् क्रत्वपूर्वार्थतैव युक्तेति तदर्थमेव व्रतम् ॥ ४ ॥

विश्वजिदादीनां फलवत्त्वाधिकरणम् ॥ ५ ॥

**चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयते नह्यशब्दं प्रतीयेत ॥ ५ ॥**

विश्वजिता यजेतेत्यश्रुतफलेषु तदभाव एव निराकाङ्क्षत्वेनाध्याहारस्याप्ययोगात्। तस्मान्निष्फलमेवेदं कर्मेति प्राप्ते,—निष्फले विध्ययोगादवश्यं कल्पनीयं फलं सर्वजनेष्टतया स्वर्ग एव कल्प्यते, प्रत्यवायाभावस्य पापक्षयस्य वा विलम्बितोपस्थितित्वादिति सिद्धान्तः ॥ ५ ॥

रात्रिसत्रस्यार्थवादिकफलताधिकरणम् ॥ ६ ॥

**क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ ६ ॥**

प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीति रात्रिसत्रं पूर्ववत्कल्प्यस्वर्गफलं प्रतितिष्ठन्तीत्यस्यार्थवादत्वेन फलाबोधकत्वादिति प्राप्ते,—अनुप-

---

१ एकस्य द्रव्यस्योभयार्थत्वे तु संयोगस्य वाक्यस्य पृथक्त्वं भेदः स्यादित्यर्थः। सि० सू०। २ दध्नेन्द्रियकामस्येति श्रुतं दधि नित्यकाम्योभयार्थं कामार्थमेव वेति विचारे पूर्वाधिकरणवदत्रापि श्रुतं कामार्थमेव नित्यार्थमन्यत् स्यात्। यद्दध्नेन्द्रियं कुर्यात्तद्धोमाश्रितेन यच्च दध्ना जुहोति तदिन्द्रियार्थमित्येकवाक्यत्वादिति पूर्वपक्षे होमाश्रितत्वेन कामवाक्यस्य, लोकसिद्धत्वाद्दधिस्वरूपस्य, फलवद्धोमसंयुक्तत्वाद्दध्नश्च निराकाङ्क्षत्वान्नैकवाक्यतेति भवति दधि उभयार्थम्। ३ अग्निष्टोमादिसंबद्धद्रव्याणां संस्कारः क्रत्वर्थः क्रतुसन्निधेरित्यर्थः। सि० सू०। ४ विधौ फलस्याश्रवणात् कर्मैव विधेयं नहि अशब्दं शब्दशक्या अनुपस्थितं प्रतीयत इत्यर्थः। पू० सू०। ५ दुःखानुविद्धस्य अनतिशयप्रीतिरूपस्य स्वर्गस्य भवति सर्वजनप्रार्थनीयता, भूयांसो हि तत्राभिलाषिणः अल्पे एवाल्पसुख इति भावः। ६ प्रत्यवायपापसापेक्षत्वात्। अभावज्ञाने प्रतियोगिनः पूर्वमुपस्थितेः। ७ रात्रिसत्ररूपक्रतुविधौ फलबोधकं वाक्यमर्थवाद इति कार्ष्णाजिनेर्मतं पापश्लोकश्रवणाभावप्रतिपादकक्रत्वङ्गवाक्यवदित्यर्थः। पू० सू०।

स्थितस्वर्गाद्यध्याहारापेक्षयाऽर्थवादोपस्थितप्रतिष्ठाया एव फलत्वं युक्तं ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति विपरिणामे लाघवात् अन्यथा स्तुतेरप्यनालम्बनत्वापत्तेरिति सिद्धान्तः ॥ ६ ॥

काम्यानां यथोक्तकामफलकत्वाधिकरणम् ॥ ७ ॥

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ ७ ॥**

सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यादावपि सर्वेष्टत्वात्स्वर्गोऽपि फलमिति प्राप्ते,—ब्रह्मवर्चसादेरपि काम्यमानत्वेन फलत्वात्तेनैवाकाङ्क्षानिवृत्तेर्न स्वर्गकल्पनेति सिद्धान्तः ॥ ७ ॥

दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥ ८ ॥

**सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ ८ ॥**

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति गुणकामानुवादः स्तुत्यर्थ इति प्राप्ते,—अङ्गफलार्थत्वस्य दर्शपूर्णमासयोरसंभवात्तादर्थ्यचतुर्थ्या तद्विधीयते कर्तव्यपदाध्याहारेणेति सिद्धान्तः ॥ ८ ॥

दर्शपूर्णमासादेः प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥ ९ ॥

**तत्र सर्वेऽविशेषात् ॥ ९ ॥**

एकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति कामनाया अनङ्गत्वेन तत्कृतनियमासंभवात् युगपत्कामनायां नियमासंभवाच्चेति प्राप्ते,—कामानामुद्देश्यत्वेन साहित्यस्याविवक्षितत्वान्निरपेक्षसाधनाच्चैकस्यैव कार्यस्य दर्शनात्पर्यायेणैव कामा इति सिद्धान्तः ॥ ९ ॥

---

१ स्वर्गाध्याहारे तत्स्वरूपश्रुतकर्मसंबन्धफलत्वादिकल्पने गौरवं, प्रतिष्ठायास्तु स्वरूपैकवाक्यतयोः क्लृप्तत्वात् फलत्वसिद्ध्यर्थं विपरिणाममात्रं कल्प्यमिति लाघवम् । २ यस्मात् प्रतितिष्ठन्ति तस्मात्स्वर्गकामा उपेयुरिति किं केन संगतमित्यर्थः । ३ नित्यः मुख्यम्, क्रत्वर्थः पश्वादिः शेषं सुगमम् । पू० सू० । ४ न च श्रुतब्रह्मवर्चसफलानर्थक्यं तस्यानुषङ्गिकत्वात् । ५ किंच विधेः स्वर्गार्थत्वे निश्चिते आनुषङ्गिकत्वेनेतरान्वयः तथात्वे च फलान्तरापेक्षायां स्वर्गार्थत्वमित्यन्योन्याश्रयादप्ययुक्तोऽयमुभयफलत्वपक्षः । ६ दर्शपूर्णमासयोः सार्वकाम्यं सर्वार्थत्वम् अङ्गकामैः अङ्गफलैः संपादनीयं प्रकरणात् उपस्थितत्वादित्यर्थः । पू० सू० ७ गोदोहनादिगुणकामैः पश्वादिभिः दर्शपूर्णमासयोः संबन्धसद्भावात्तदपेक्षोऽयमनुवादो दर्शपूर्णमासस्तुत्यर्थः । ८ प्रधानानुग्रहलाभेनाङ्गानां प्रधानार्थत्वेऽपि प्रधानस्य तदर्थत्वासंभवादित्यर्थः । ९ यत् दर्शपूर्णमासौ कर्तव्यौ तत् सर्वार्थेनेति ह्यत्र वचनव्यक्तिः । १० तत्रैकस्मिन्नेव प्रयोगे सर्वे कामा अन्वियन्ति विशेषस्य अश्रवणादित्यर्थः । सि० सू० ।

फलानामैहिकामुष्मिकोभयार्थताधिकरणम् ॥ १० ॥

## योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात् ॥ १० ॥

पश्वादि चित्रादिफलमामुष्मिकम्, अदृष्टजन्यत्वादिति प्राप्ते,—प्रतिबन्धकाभावेऽस्मिन्नपि जन्मनि पश्वादि भवति दृष्टादृष्टोभयहेतुसंभवात् प्रतिबन्धे तु अमुत्रेत्येवमनियम एवेति सिद्धान्तः ॥ १० ॥

बृहस्पतिसवादेर्वाजपेयादिशेषताधिकरणम् ॥ ११ ॥

## समवाये चोदना संयोगस्यार्थवत्त्वात् ॥ ११ ॥

वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्र वाजपेयोत्तरकालत्वमात्रं बृहस्पतिसवे प्रसिद्धे विधीयत इति प्राप्ते,—वाजपेयोत्तरकालस्यानुपादेयत्वेन प्रसिद्धबृहस्पतिसवस्यानुवादायोगात्प्रकरणान्तरनयेन बृहस्पतिसवधर्मकं कर्मान्तरमेव वाजपेयाङ्गतया विधीयत इति सिद्धान्तः ॥ ११ ॥

वैमृधस्य पूर्णमासाङ्गताधिकरणम् ॥ १२ ॥

## उभयार्थमिति चेत् ॥ १२ ॥

संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीत्यत्र पौर्णमासीसमाप्त्यनन्तरं वैमृधविधानात्समाप्तस्य चाङ्गानपेक्षणान्न पौर्णमासीमात्राङ्गत्वं किंतु दर्शपूर्णमासप्रकरणादुभयार्थत्वमिति प्राप्ते,—पूर्णमासीसंयोगाद्वाक्येन तन्मात्रार्थत्वमेवेति सिद्धान्तः ॥ १२ ॥

---

१ योगस्यैहिकामुष्मिकफलस्य सिद्धिः उत्पत्तिवाक्येन सहार्थस्य असंबन्धादित्यर्थः । सि० सू० । २ विशिष्टफलोपभोगयोग्यशरीरारम्भकत्वमेव तद्धेतुत्वमिति भावः । ३ दैवपुरुषकारोभयहेतुत्वस्य संभवादित्यर्थः । ४ समवाये अङ्गाङ्गिभावसंबन्धविषयिणी चोदना अपूर्वकर्मविधिः वाजपेयसंबन्धस्यार्थवत्त्वादित्यर्थः । सि० सू० । ५ वाजपेयमात्रविधानेन कृतार्थत्वाभावात् पश्चादपि किंचिदङ्गं विधित्सितं तच्च क्त्वाप्रत्ययबलेन वाजपेयोत्तरभावि बृहस्पतिसवाख्यमिति कर्मान्तरत्वे स्थिते अङ्गाङ्गित्वं तयोः । न च लक्षणादोषः । मासाग्निहोत्रवदत्रापि तस्या दोषत्वाभावात् । एवं च वाजपेयशब्दोऽप्यनुगृहीतो भवतीत्यलम् । ६ वैमृधयागो दर्शपूर्णमासोभयाङ्गमिति चेदित्यर्थः । पू० सू० । ७ न च समाप्तस्य नाङ्गापेक्षेत्युक्तम् । सत्यमुक्तम्, तथाप्युभयार्थत्वे स दोषः कथं नेत्यपि वद । अतः द्वयोः साधारणमङ्गं समाप्य वैमृधोनुष्ठेय इति वाक्यार्थः । वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पौर्णमासः सेन्द्रो भवतीत्यर्थवादोऽप्यमुमर्थं बोधयतीति दिक् ।

अनुयाजादीनामाग्निमारुतोत्तरकरणताधिकरणम् ॥ १३ ॥

अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन संबन्धात् ॥ १३ ॥

आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्यत्र नाङ्गाङ्गिभावो निर्ज्ञातप्रयोजनत्वात् किंतु कालार्थः संयोग इति सिद्धान्तः ॥ १३ ॥

सोमादीनां दर्शपूर्णमासोत्तरकालताधिकरणम् ॥ १४ ॥

उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ १४ ॥

ज्योतिष्टोमे दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति श्रुतं तत्र दर्शोत्तरकालता विधीयते न त्वङ्गाङ्गिभाव इति सिद्धान्तः ॥ १४ ॥

वैश्वानरेष्टेः पुत्रगतफलकताधिकरणम् ॥ १५ ॥

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ १५ ॥

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति जातेष्टेः पूतत्वादिफलं पितुरेव कर्तृत्वादिति प्राप्ते,—यस्मिन् जाते निर्वपति स पूतो भवतीति स्पष्टं पुत्रगामित्वम् । पुत्रफलमपि पितुरिष्टमिति न विधेरात्मनेपदस्य च विरोधः । एवं वा इयमिष्टिर्जननानन्तरमेव कर्तव्येति प्राप्ते,—जातकर्मानन्तरं स्तनप्राशनविधानात् शेषिविरोधः, अतो जातकर्मानन्तरमेव कर्तव्या । एवं सति आशौचान्त एव भवति निमित्तानन्तर्यबाधस्याविशेषादिति षष्ठे वक्ष्यते । तत्रापि पर्वणि कर्तव्या तद्बाधे मानाभावादिति सिद्धान्तः ॥१५॥

सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताधिकरणम् ॥ १६ ॥

प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ १६ ॥

---

१ उत्पत्तिवाक्यान्तरसत्त्वे कालमात्रविधानं भवति ज्योतिष्टोमसंबद्धत्वेन फलाकाङ्क्षाराहित्यादित्यर्थः । सि० सू० । २ उत्पत्तिविधिः कालाङ्गत्वविधिर्वेति संदेहे कालविधिरेव वाक्यस्य कालप्राधान्यप्रतिपादकत्वादित्यर्थः सि० सू० । ३ अयं भावः, दर्शोपलक्षिते काले सोमविधानात्तस्य च फलार्थत्वात् न दर्शाङ्गत्वम् । नापि दर्शस्य तदङ्गत्वमविधानात् । विधायकाभावाद्दर्शपूर्णमासविधिरपि न । किंत्वकृतदर्शपूर्णमासस्य तत्रानधिकृतत्वादर्थापत्त्या दर्शपूर्णमासोत्तरभावित्वं तस्य । एवमपि संनिधेर्न कर्मान्तरत्वमपि तु सोमस्य कालविधिरयमिति । ४ पूतत्वादिफलसंबन्धः अविहिते पितरि न स्यात्, यस्मिन् जाते पूत एव स इति यत्तदोर्नित्यसंबन्धस्य पुत्रे सत्त्वेन पितुः फलं प्रत्यनङ्गत्वादित्यर्थः । सि० सू० । ५ यत्तदोर्नित्यसंबन्धेनोपक्रमोपसंहारयोरेकवाक्यत्वात् । ६ प्रधानकालेन यः प्रधानकालः सोऽङ्गानामित्युक्तत्वादङ्गानां संबद्धत्वात् मुख्यवाजपेयकालत्वमित्यर्थः । पू० सू० ।

वाजपेयाङ्गं बृहस्पतिसवः प्रधानकाले शरदि तेन सहैकप्रयोगः कार्यः कालस्य साङ्गप्रधानार्थत्वात् । अतः सोमातिदेशकालप्राप्तो वसन्तो बाध्यत इति प्राप्ते,—वाजपेयेनेष्ट्वेति क्त्वाशब्देन वाजपेयकरणकभावनानन्तर्यस्योक्तत्वान्न तदेकप्रयोगता, अतो न स्वकालवसन्तबाध इति सिद्धान्तः॥१६॥

इति श्रीन्यायबिन्दौ चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

## चतुर्थाध्यायस्य चतुर्थः पादः ।

राजसूयेज्यानां विदेवनाद्यङ्गकत्वाधिकरणम् ॥ १ ॥

### [1]प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥

राजसूये अनुमत्यादियागवदयागानामपि विदेवनादीनां प्राधान्यमप्रसिद्धार्थतया प्रकृतमात्रपरेण राजसूयनाम्ना स्वाराज्यफलसंबन्धात् नामवशेन यजेतेत्यस्योपलक्षणत्वादिति प्राप्ते,—भावार्थाधिकरणे धात्वर्थस्यैव फलभावनान्वयोक्तेर्नाम्नश्चाख्यातपरतन्त्रत्वाद्यागानामेव प्राधान्यमिति सिद्धान्तः ॥ १ ॥

विदेवनस्य कृत्स्नराजसूयाङ्गताधिकरणम् ॥ २ ॥

### [3]मध्यस्थं यस्य तन्मध्ये ॥ २ ॥

अभिषेचनीयाख्यसोमयागविध्यनन्तरमाम्नाता विदेवनादयस्तदीयमाहेन्द्रस्तोत्रकाले अपकृष्टा माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इति अभिषेकापकर्षेण तदन्तापकर्षादतः प्राकृताङ्गसंदंशेनावान्तरप्रकरणादभिषेचनीयाङ्गमेव न तु प्रकरणाद्राजसूयाङ्गमिति प्राप्ते,—विधानकाले प्रयोजनापेक्षायां संनिधानाद्बलवता प्रकरणेन सर्वराजसूयाङ्गत्वमेव अनुष्ठाने तु संदंशः न तु तदानीं प्रयोजनाकाङ्क्षेति नावान्तरप्रकरणविषयतेति सिद्धान्तः॥२॥

सौम्यादीनामुपसत्कालकत्वाधिकरणम् ॥ ३ ॥

### [4]प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ३ ॥

---

१ पूर्वकाले विहितेनेति पूर्वं शेषः । २ प्रकरणे शब्दानां समान्यात् इति विगृह्य राजसूयप्रकरणे यागतदभावबोधकशब्दानां समत्वात् चोदनाविषयाणां सर्वेषामर्थानामनङ्गत्वमित्यर्थः । पू० सू० । ३ मध्ये इत्यस्याग्रे, पठितत्वादिति पूरणीयम् । तथा च यत् यस्य मध्यस्थं संनिहितं तस्य तदङ्गं मध्ये पठितत्वादित्यर्थः । पू० सू० । ४ अत्र सूत्रे चोऽप्यर्थकः । उभयमित्यस्याग्रे अङ्गं श्रुत्येति शेषः । प्रकरणस्य इतिकर्तव्यताकाङ्क्षाया अवैलक्षण्ये विरुद्धमप्युपसदङ्गत्वतत्पूर्वकालविधिरूपमुभयं उपसदङ्गं श्रुत्येत्यर्थः । पू० सू० ।

राजसूये सौम्यं चरुं बभ्रुर्दक्षिणेति विधाय पुरस्तादुपसदां सौम्येन प्रचरन्तीति श्रुतम् । तत्र चरुरुपसदङ्गं प्रकरणाद्वाक्यस्य बलवत्त्वादिति प्राप्ते,—उपसदामिति षष्ठ्याः पुरस्ताच्छब्दयोगेन दिग्योगलक्षणत्वादवश्यं कालो विधेयः । तत्राङ्गत्वस्यापि विधौ वाक्यभेदः प्राप्तकर्मानुवादेनानेक विध्यसंभवादिति सिद्धान्तः ॥ ३ ॥

आमनहोमानां सांग्रहण्यङ्गताधिकरणम् ॥ ४ ॥

फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ४ ॥

वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति प्रकृत्यामनमस्यामनमस्या देवा इति तिस्र आहुतीर्जुहोतीत्यामनहोमा विहिताः । तेऽपि ग्रामफलार्थाः अनुषङ्गात् न तु सांग्रहण्यङ्गं तस्याः प्राकृताङ्गैरेव निराकाङ्क्षत्वादिति प्राप्ते,—अनुषङ्गगौरवात् संनिधानादङ्गत्वमेवेति सिद्धान्तः ॥ ४ ॥

दधिग्रहस्य नित्यत्वाधिकरणम् ॥ ५ ॥

दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ५ ॥

यां वै अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते प्राजापत्यं दधिग्रहं गृह्णीयादिति दधिग्रहो नैमित्तिकः देवतान्तराये निमित्ते विधानाज्ज्येष्ठो ह वा एष ग्रहाणामिति वचनान्नित्यश्चेति प्राप्ते,—यदि शब्दाद्यभावेन निमित्तत्वाप्रतीतेर्नित्य एवेति सिद्धान्तः ॥ ५ ॥

वैश्वानरस्य नैमित्तिकताधिकरणम् ॥ ६ ॥

वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ ६ ॥

---

१ तादर्थ्यषष्ठ्या असंभवाच्च । २ उपसत्काले सौम्येन प्रचरेत्, तच्चोपसदङ्गमित्येवं रूपः । ३ फलयुक्तं सांग्रहणी आमनहोमस्य प्रधानं राजसूयविदेवनयोरुक्तहेतुत्वादित्यर्थः । सि० सू० । ४ फलपदस्य सकृदाम्नातस्य पुनरनुसंधानात् । ५ प्रकरणाभावेऽपि संनिधानादङ्गत्वमिति भावः । ६ यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते प्रजापत्यं ग्रहं गृह्णीयादिति देवतान्तरायनिमित्ते विहितो दधिग्रहो नैमित्तिकः श्रुत्या देवतान्तरायनिमित्तेन संयोगादित्यर्थः । पू० सू० । ७ ज्येष्ठत्वं हि प्रशस्तत्वम्, तच्च नित्यस्य स्थिरस्य न तु चञ्चलस्य निमित्तवतः, अथवा ज्येष्ठः प्रथमः, ग्रहान्तरेभ्यः प्रथमं गृह्यमाणेऽस्मिन् तत्त्वमस्त्येव । ८ यच्छब्दस्य तत्प्रतिपादकत्वाभावाच्च । ९ नित्यैः लोकैः समाना तुल्या संख्या यस्य तत्त्वात्, त्रीण्येतानि हवींषि भवन्ति त्रयो लोकाः एषां त्रयाणां रोहायेत्यर्थवादेन नित्यतुल्यत्वप्रतिपादनात् । शेषं सुगमम् । पू० सू० ।

अग्नौ श्रुतं–यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामि गर्भो विपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेदिति। तत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते। यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयतीति नैमित्तिकतैव स्थिता॥ ६॥

पष्ठ्याश्रितेर्नैमित्तिकत्वाधिकरणम्॥ ७॥

## षैद्चितिः पूर्ववत्त्वात्स्यात्॥ ७॥

योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्रितयो भवन्ति। अथ षष्ठीं चिनुते। इति षष्ठी चितिर्नित्यैव षष्ठीति पूरणप्रत्ययादिति प्राप्ते,–यच्छब्देनाप्रतिष्ठाया निमितत्वश्रवणान्नैमित्तिक्येव। षट्संख्यापूरणं तु अभिधानक्रियापेक्षमिति सिद्धान्तः॥ ७॥

पिण्डपितृयागस्य दर्शानङ्गताधिकरणम्॥ ८॥

## पितृयज्ञः स्वकालत्वादनङ्गं स्यात्॥ ८॥

अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति पितृयज्ञोऽमावास्येष्ट्यङ्गं फलाश्रवणात् यस्त्वनाहिताग्निना कार्य इति विहितः स पुरुषार्थ इति प्राप्ते,–अमावास्याशब्दस्य कालवचनत्वात्कर्मणि लक्षणापत्तेस्तत्समभिव्याहाराभावादनङ्गमिति विश्वजिन्न्यायेन स्वर्गार्थ इति सिद्धान्तः॥ ८॥

रशनाया यूपाङ्गताधिकरणम्॥ ९॥

## पैश्वङ्गं रशनास्यात्तदागमे विधानात्॥ ९॥

आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति सवनीयाङ्गभूता द्वितीया रशना पश्वङ्गं यूपाङ्गत्वेऽदृष्टार्थत्वापत्तेः। तथा च पश्वर्था रशना तदर्थं परिव्याणं तदर्थो यूप इति प्राप्ते,–यूपार्थ-

---

१ षष्ठीचितिः षट्चितिः सा पञ्चचितिवत् नित्या स्यादित्यर्थः। पू० सू०। २ पूर्वं नित्याः पञ्चचितयो विहिताः इदानीमियं षष्ठी नैमित्तिक्यभिधीयतइत्यपेक्षा। ३ पितृयज्ञः दर्शयागाङ्गं न भवति अमावास्यायाः पितृयज्ञकालत्वादित्यर्थः। सि० सू०। ४ अपराह्णसामानाधिकरण्यात्। ५ रशना पश्वङ्गं भवति त्रिवृता यूपं परिवीयेति वाक्येन पशुप्रकरणे पाठादित्यर्थः। पू० सू०। ६ नहि रशना यूपस्य किंचिद्दृष्टं फलमुत्पादयति पशोस्तूपकरोति तदनतिक्रमणेनेति भावः।

त्वेऽपि दार्ढ्यरूपदृष्टसंभवात् द्वितीयाश्रुतेश्च यूपार्थमेव रशनापरि-
व्याणमिति सिद्धान्तः ॥ ९ ॥

स्वरोः पश्वङ्गताधिकरणम् ॥ १० ॥

स्वरुश्चाप्येकदेशत्वात् ॥ १० ॥

यूपस्य स्वरुं करोतीति षष्ठ्या यूपार्थः स्वरुस्तस्य पश्वञ्जनं प्रतिपत्ति-
रिति प्राप्ते,—स्वरुणा पशुमिति तृतीयाद्वितीयाभ्यां स्वरोः पश्वञ्जनाङ्गत्व-
मेव षष्ठी त्ववयवावयविभाव इति सिद्धान्तः ॥ १० ॥

आघारादीनामाग्नेयावङ्गताधिकरणम् ॥ ११ ॥

दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ ११ ॥

दर्शपूर्णमासाभ्यां स्वर्गकाम इत्यत्र सर्वयागप्राधान्यं, नाम्नो राजसूय-
वदाख्यातपरतन्त्रत्वात्तस्य च सर्वसाधारण्यादिति प्राप्ते,—दर्शपूर्णमासा-
भ्यामित्यस्य कालयोगिविद्वद्वाक्यसिद्धसमुदायद्वये प्रसिद्धत्वेनाख्यातवि-
शेषकत्वमेव राजसूयपदं त्वप्रसिद्धार्थत्वादाख्यातपरतन्त्रम्, अत आग्नेया-
दिषट्कस्यैव फलसंबन्धात्प्रयाजादीनां तदङ्गत्वमिति सिद्धान्तः ॥ ११ ॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥ १२ ॥

ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ १२ ॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र इष्टिपशुसोमयागानां सर्वेषां प्रा-
धान्यं ज्योतिष्टोमपदस्याप्रसिद्धार्थत्वेन राजसूयसमत्वादिति प्राप्ते,—तानि
वाव एतानि ज्योतींषि य एतस्य स्तोमा इति वाक्यशेषेण ज्योतीरूपत्रि-
वृदादिस्तोमकत्वेन सोमयागे प्रसिद्धेर्न राजसूयपदतुल्यत्वम् । अतः
सोमयागस्यैव प्राधान्यं नेतरेषामिति सिद्धान्तः ॥ १२ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ
चतुर्थाध्यायस्य चतुर्थः पादोऽध्यायश्च ॥ ४ ॥

---

१ त्रिवृतेति तृतीयाश्रुत्यापि परिव्याणार्था रशनेत्यपि द्रष्टव्यम् । २ चोऽप्यर्थे, स्वरुरपि यूपाङ्गं यूपस्य स्वरुं करोतीत्यत्र षष्ठ्या यूपस्य प्राधान्यावगमादित्यर्थः । पू० सू० । ३ दर्शपूर्णमाससंबन्धिनः यागाः सर्वे प्रधानाः अङ्गप्रधानबोधकविशेषादर्शनादित्यर्थः । पू० सू० । ४ यत्राख्यातं तत्र नाम इति व्याप्त्येत्यर्थः । ५ प्रकरणेन तदङ्गत्वमित्यर्थः । ६ ज्योतिष्टोमे यागरूपकर्माणि तुल्यानि समप्रधानानि यतस्तेषां फलसंबन्धस्वरूपप्राधान्यकारणमेकरूपमित्यर्थः । पू० सू० । ७ शिरो वा यज्ञस्य यद्दीक्षणीयेति वाक्यशेषेण तेषामङ्गत्वेनाप्राधान्यम् ।

## पञ्चमाध्यायस्य प्रथमः पादः ।

क्रमनियमाधिकरणम् । श्रुतिबलीयस्त्वाधिकरणं वा ॥ १ ॥

### श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

इदानीं विहितपदार्थानां क्रमश्चिन्त्यते । तत्र वेदं कृत्वा वेदिं करोति अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादौ क्रमो न विधेयः । संघातविशेषणत्वात्तस्य चाविधेयत्वादतो वेदिदीक्षादिकमेव विधीयते क्रमस्त्वनुवाद इति प्राप्ते,—वेदिदीक्षादिकरणस्य वचनातिदेशाभ्यां प्राप्तेः क्रम एवात्र विधेयः । एवमध्वर्युकर्तृकत्वस्यापि चोदकप्राप्तत्वादध्वर्युदीक्षायां च चित्पतिस्त्वा पुनात्विति मन्त्रलिङ्गविरोधादन्येषु च—न पूतः पावयेदिति निषेधादध्वर्योरसंभवे इतरमन्यस्तेषां यतो विशेषः स्यादिति न्यायेन प्रतिप्रस्थातुः प्राप्तेः, एवमेव तृतीयिषु पादिषु च नेष्टृन्नेत्रोः प्राप्तेः क्रम एवात्र विधीयते । अतः श्रुतिक्रमोऽयं प्रत्यक्षवचनविधेयत्वादिति सिद्धान्तः ॥ १ ॥

क्रमस्य क्वचिदार्थिकताधिकरणम् ॥ २ ॥

### अर्थाच्च ॥ २ ॥

यवाग्वाग्निहोत्रं जुहोति यवागूं पचतीति न क्रमविधिः अशाब्दत्वात् । अतोऽनियम इति प्राप्ते,—प्रयोजनवशात्पक्त्वा होम इति सिद्धान्तः ॥ २ ॥

---

१ श्रुतिः लक्षणं ज्ञापकं यस्येति व्युत्पत्त्या, आनुपूर्व्यं क्रमः श्रुतिज्ञाप्यः तत् क्रमबोधकक्त्वादिप्रमाणं यस्य तत्त्वात् क्रमबोधकक्त्वाप्रत्ययादिप्रमाणकत्वादित्यर्थः । सि० सू० । २ क्रमस्यैकैकपदार्थानाश्रयत्वेन समुदायविशेषणत्वम् । ३ शब्दावाच्यत्वेन । ४ वचनं च अतिदेशश्च, ताभ्याम् विधिचोदकाभ्याम् । ५ तृतीया दक्षिणा येषां ते तृतीयिनः पादः दक्षिणा येषां ते पादिनः तेषु । ६ अत्राभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इति शा० दी० । ७ अर्थात् प्रयोजनानुसारात् क्रमनियम इत्यर्थः । सि० सू० । ८ अग्निहोत्रं जुहोतीति विधिवाक्यम् । अन्यथा अधिकरणानुत्थानप्रसङ्गः । ९ यवागूवचनस्याग्निहोत्रहोमस्य च यथायथं फलद्रव्ययोः साकाङ्क्षत्वात् पाठक्रमत्यागेनार्थक्रमानुसरणम् । तदेवं वचनव्यक्तिः, यवागूं पचति तयाऽग्निहोत्रं जुहोतीति भावः ।

प्रयाजानुमन्त्रणे क्रमानियमाधिकरणम् ॥ ३ ॥

अनियमोऽन्यत्र ॥ ३ ॥

नियामकाभावे त्वनियमः यथा वसन्तमृतूनामित्यादीनामेको ममैका तस्येत्येवमादीनां च प्रयाजानुमन्त्रणमन्त्राणामिति सिद्धान्तः ॥ ३ ॥

पाठतः क्रमनियमाधिकरणम् ॥ ४ ॥

क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥

समिधो यजतीत्यादौ श्रुत्यर्थयोरभावात् क्रमानियम इति प्राप्ते,—पाठक्रमात् क्रमनियम इति सिद्धान्तः ॥ ४ ॥

प्रावर्तिकक्रमनियमाधिकरणम् ॥ ५ ॥

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ५ ॥

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते । तत्रोपाकरणादिषोडशपदार्थानां सर्वेषामुपाकरणं कृत्वा पश्चान्नियोजनमिति पदार्थानुक्रमः । तत्र नियोजनादीनामप्युपाकरणवच्चतः कुतश्चिदारभ्यानुष्ठानमित्यनियमे प्राप्ते पूर्वपदार्थप्रवृत्त्या नियमः । तथा सति षोडशभिः पदार्थैर्व्यवधानमुपाकरणादीनां भवति अनियमे त्वधिकैरपीति साहित्यबाधः स्यात् । अतो येन क्रमेणोपाकरणं तेनैव क्रमेण नियोजनादीति सिद्धान्तः ॥ ५ ॥

स्थानतः क्रमनियमाधिकरणम् ॥ ६ ॥

स्थानाच्चोत्पत्तिसंयोगात् ॥ ६ ॥

साद्यस्क्रे सहपशूनालभत इति साहित्यं सवनीयस्थान इति तृतीये स्थितम् । तत्रोपाकरणादिक्रमानियमः अग्नीषोमीयस्य वा प्रथमे प्रकृतौ दर्शनादिति प्राप्ते,-सवनीयस्य प्रथममुपाकरणादिः आश्विनग्रहणेनोपस्थितत्वात् अग्नीषोमीयस्य स्वस्थानाच्चलितत्वेनानुपस्थितेः । तदन्तरं तु अग्नीषोमीयस्य प्रथमं तत आनुबंध्यस्येति प्रकृतिदृष्ट एव क्रम इति सिद्धान्तः ॥६॥

---

१ अयं भावः प्रवृत्त्या क्रमनियमः कर्तव्यः । न चानेकशाखाधीतानुमन्त्रणमन्त्राणां मिथः सामीप्यमस्ति, यदनुरोधेन प्रवृत्तिर्नियम्येतेत्यनियम एवात्र । २ एकयागगतत्वे पाठतः अनुष्ठानक्रमनियमः क्रमस्य अनुष्ठानाङ्गत्वादित्यर्थः । सि॰ सू॰ । ३ स्वाध्यायविधिपरिगृहीतत्वेन यथार्थज्ञानं तथार्थस्मरणेनानुष्ठानं पाठक्रमे प्रसज्यतः । ४ एककालानामुपाकरणादिगुणानां प्रथमप्रवृत्तिक्रमेण द्वितीयादिपदार्थानुष्ठाननियमः तस्मादेव प्रथमारम्भादित्यर्थः । सि॰ सू॰ । ५ वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्यावगतस्य । ६ उत्पत्तिवाक्ये संयोगो यस्य तस्मात् स्थानात् अपि क्रमनियम इत्यर्थः । सि॰ सू॰ ।

अङ्गक्रमस्य मुख्यक्रमानुसारित्वाधिकरणम् ॥ ७ ॥

## मुख्यक्रमेण[1] चाङ्गानां तदर्थत्वात् ॥ ७ ॥

सारस्वतौ भवत इति सरस्वतीसरस्वद्दैवत्यं क्रमेण यागद्वयम्, तत्र निर्वापादिक्रमानियम इति प्राप्ते,—मुख्यक्रमेण क्रम इति सिद्धान्तः। अत्र स्त्रीदेवत्ययाज्यायाः पूर्वं प्रवृत्तेस्तयैव निर्वापादिक्रमनियमसंभवादन्यदुदाहर्तव्यम्। यथा दर्शपूर्णमासयोः प्रयाजशेषाभिघारणं मुख्यक्रमात्पूर्वमाग्नेयस्य। दधिधर्माणां पूर्वप्रवृत्त्या याज्यानुवाक्ययोश्च तद्विपरीतप्रवृत्त्या क्रमानिश्चयात्। मुख्यक्रमे चाङ्गप्रधानयोर्नियतव्यवधानम्। अन्यथा पश्चाद्भाविनः प्रधानस्य प्रथममङ्गं क्रियमाणमत्यन्तं व्यवहितं स्यात्। तेन प्रधानप्रत्यासत्तिरत्र बीजम्। प्रवृत्तिक्रमे तु अङ्गानां मिथः प्रत्यासत्तिरिति भेद इति ॥ ७ ॥

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलीयस्त्वाधिकरणम् ॥ ८ ॥

## प्रकृतौ[2] तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ ८ ॥

उपांशुयाजाग्नीषोमीयमुख्यक्रमात्पूर्वमाज्यनिर्वापः पश्चादौषधस्येति प्राप्ते,—निर्वापपाठक्रमादेव क्रमो बलवान् निरपेक्षत्वात्[3]। अतः प्रथमसौपधधर्मास्तत आज्यधर्मा इति सिद्धान्तः ॥ ८ ॥

ब्राह्मणपाठान्मन्त्रपाठस्य प्रबलत्वाधिकरणम् ॥ ९ ॥

## मन्त्रतस्तु[4] विरोधे स्यात् प्रयोगरूपसामर्थ्या-त्तस्मादुत्पत्तिदेशः सः ॥ ९ ॥

दर्शपूर्णमासयोः प्रथममग्नीषोमीयपाठः तत आग्नेयस्य। मन्त्रस्तु प्रथममाग्नेयस्य पश्चादग्नीषोमीयस्य। तत्र विधिक्रमो बलवान् प्रथमप्रतीतत्वादिति प्राप्ते,—अनुष्ठानकाले क्रमापेक्षणात्तदानीं च विधेर्व्यापाराभावान्म-

---

१ मुख्यक्रमेणाङ्गानामनुष्ठानं कर्तव्यमङ्गानां मुख्यार्थत्वादित्यर्थः। सि० सू०। २ प्रकृतौ दर्शपूर्णमासयोस्तु अङ्गानामनुष्ठानं पाठानुसारिज्ञेयं, कुतः अङ्गबोधकशब्दधर्मत्वात् पाठस्येत्यर्थः। सि० सू०। ३ अयं भावः, मुख्यक्रमो हि प्रमाणान्तरेण मुख्ययोः क्रममवगम्य साहित्याय पश्चादङ्गेषु कल्प्यत इति विलम्बेनोपतिष्ठते पाठक्रमस्त्वन्यानपेक्षोऽङ्गक्रमबोधक इति बलवान्। ४ विरोधे ब्राह्मणपाठक्रममन्त्रक्रमयोर्विरोधे मन्त्रतोऽनुष्ठानक्रमो निश्चेयः तस्य प्रयोगात्मकक्रियां प्रति जनकत्वात्, ब्राह्मणपाठस्य स्वरूपज्ञाने विप्रकृष्टत्वात् सि० सू०। ५ विधेयसमर्पणेन कृतार्थस्य पुनर्व्यापाराभावात्।

न्त्रक्रमेण पदार्थस्मरणात्तेनैव क्रमेण पदार्थानुष्ठानम् । अतो मन्त्रक्रमो बलीयानिति तदभावे विधिक्रम इति सिद्धान्तः ॥ ९ ॥

प्रयोगवचनात् चोदकस्य बलवत्त्वाधिकरणम् ॥ १० ॥

तद्वचनात्तु विकृतौ यथाप्रधानं स्यात् ॥ १० ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुरित्यत्र मुख्यक्रमात्प्रथममाज्यधर्मास्ततश्चरुधर्मा इति प्राप्ते,—प्रकृतितः प्राप्तानां पदार्थानां विकृतौ क्रमः कल्पनीयः । ते च प्राकृतक्रमयुक्ता एव प्राप्यन्त इति न क्रमाकाङ्क्षा । तेन क्रमान्तरस्याकल्पनात् प्राकृत एव क्रम इति औषधधर्मानन्तरमाज्यधर्मा इति सिद्धान्तः ॥ १० ॥

विकृतौ क्वचित् प्रकृतिधर्मानतिदेशाधिकरणम् ॥ ११ ॥

विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ ११ ॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व प्रातरग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपेत्, मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं, मरुद्भ्यो गृहमेधिभ्यः सायमोदनमिति श्रुतम् । तत्र प्रकृतिवत् व्यहकालता तेनाद्यतनेषु प्रातरादिषूपक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते,—साङ्गप्रधानस्य प्रातरादिषु विधानादेकस्मिन्नेव प्रातरादिके सर्वप्रयोगप्रतीतेरुपदेशात्सद्यस्कालतैवेति सिद्धान्तः ॥ ११ ॥

अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ॥ १२ ॥

अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ १२ ॥

अग्नीषोमीये पशौ हविरासादनोत्तरं प्राप्तानां प्रयाजानां तिष्ठन्तं पशुं प्रयजन्तीत्यपकर्षः श्रुतः । तथा सवनीये अनूयाजानामाग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्युत्कर्षः । स तावन्मात्रस्यैवेति प्राप्ते,—प्रयाजमात्रापकर्षे आघारानन्तर्यस्य प्रकृतिप्राप्तस्य बाधापत्तेः बद्धक्रमस्य प्रयाजान्तकाण्डस्याप-

---

१ आग्नावैष्णवादिविकृतियागे प्रधानक्रमादङ्गक्रमानुष्ठानं स्यात् प्रधानवाक्यपाठसामर्थ्यात् । पू० सू० । २ नच शरमयं बर्हिर्भवतीत्यत्र शरेण बर्हिर्बाधवदत्र प्राप्तक्रमबाधः । तत्र क्लृप्तत्वाच्छास्त्रस्य कुशबाधकत्वेऽप्यत्र क्रमस्य कल्प्यत्वात् कल्पनायाश्चाकाङ्क्षाधीनत्वादत्र त्वाकाङ्क्षाया निवृत्तत्वात् । ३ अनीकवत्यादयो विकृतेष्टयः प्रकृतिधर्मयुक्तत्वाद्यथोपदेशं प्रकृतिकालाः प्रकृतिवत् व्यहकालानुष्ठेया इत्यर्थः । पू० सू० । ४ प्रयाजानुयाजरूपाणामङ्गानां मुख्यकालसंबन्धित्वात् यावत् श्रुतं तावत एवोत्कर्षापकर्षौ स्याताम् । पू० सू० ।

कर्षः । एवमनुयाजमात्रोत्कर्षे तदुत्तरं सूक्तवाकादयः कार्या इत्यनुयाजादीनामुत्कर्ष इति सिद्धान्तः ॥ १२ ॥

प्रकृत्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणम् ॥ १३ ॥

## प्रकृत्या कृतकालानाम् ॥ १३ ॥

प्रातरनुवाकप्रैषं होत्रे दत्त्वा प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रैषं विधाय प्रचरणीहोमादयः सौमिकाः पठिताः । तत्र निर्वापः प्रतिप्रस्थातृकर्तृकत्वान्नाध्वर्यवान्प्रोक्षणादीनुपस्थापयति । सौमिकानामपि निर्वापव्यवहितानां नोपस्थितिः । तस्मान्निर्वापानन्तरं सौमिकाः प्रोक्षणादयो वेत्यनियम इति प्राप्ते,—निर्वापेऽप्यध्वर्योः प्रैषद्वारा कर्तृत्वान्निर्वापानन्तरं तदुपस्थिताः प्रोक्षणादयः पूर्वं ततः सौमिका इति सिद्धान्तः ॥ १३ ॥

वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ॥ १४ ॥

## असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ १४ ॥

अग्नीषोमप्रणयनोत्तरं यूपच्छेदनं विहितम् । दीक्षासु यूपं छिनत्तीत्यपकृष्यमाणमग्नीषोमप्रणयनादीनपकर्षति तदन्तापकर्षन्यायादिति प्राप्ते,—पाशुकस्य यूपच्छेदनस्य सौमिकाग्नीषोमप्रणयनस्य च भिन्नप्रयोगविधिविधेयत्वेन क्रमाभावात्तन्मात्रापकर्ष इति सिद्धान्तः ॥ १४ ॥

दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥

## प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ १५ ॥

सवनीयपशुतन्त्रं तत्पुरोडाशेषु प्रासङ्गिकं, पिष्टलेपफलीकरणहोमौ पुरोडाशार्थौ कर्तव्यौ । तावनुयाजोत्कर्षादुत्कृष्टव्यौ प्रकृतौ तदनन्तरत्वेन क्लृप्तत्वादिति प्राप्ते,—अनुयाजानां पाशुकत्वान्न तदानन्तर्यं पौरोडाशिक-

---

१ प्रकृत्या दर्शपूर्णमासानुष्ठानेन विज्ञातकालानां निर्वापोत्तरं पठितानां प्रोक्षणप्रभृत्यलङ्करणपर्यन्ताङ्गानामुत्कर्ष इत्यर्थः । सि० सू० । २ अयं भावः प्रातरनुवाकप्रचरणीहोमयोः सौमिकयोः पाठप्राप्तमनुक्रमं विच्छिद्य प्रैषबलात् प्रवृत्त ऐष्टिको निर्वापः स्वोत्तरभाविप्रोक्षणादिकमेव पूर्वमुपस्थापयति न सौमिकान् नतु प्रचरणीहोमान् सौमिकान् इति प्रोक्षणादयः पूर्व पश्चात् सौमिकाः । ३ वैकृतं यूपच्छेदनं तावन्मात्रं यावदुक्तं तावदेवापकृष्येत पाशुकस्य सौमिकैरङ्गैरसंयोगादित्यर्थः । सि० सू० । ४ प्रयाजाघारादीनां प्रधानं प्रत्यङ्गत्वादेकप्रयोगान्तर्गतत्वात् क्रम आवश्यक इति । तत्र तदन्तापकर्षेऽपि इह द्वयोर्भिन्नाङ्गकत्वान्न तदन्तापकर्षः । ५ प्रसङ्गप्राप्तं पिष्टलेपफलीकरणहोमादिकं प्रासंगिकानुयाजोत्कर्षे नोत्कृष्येत प्रासङ्गिकाप्रासङ्गिकत्वेन तयोरसंयो गादित्यर्थः । सि० सू० ।

होमयोरङ्गं भिन्नप्रयोगविधिविहितत्वात्तस्मान्नोत्कर्षः । पौरोडाशिकास्त्वनुयाजा नात्र क्रियन्ते पाशुकैरेव प्रसङ्गसिद्धेरिति सिद्धान्तः ॥ १५ ॥

पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् ॥ १६ ॥

**तथाऽपूर्वम् ॥ १६ ॥**

दर्शपूर्णमासयोर्हविरभिमर्शनोत्तरं वेदिरुक्ता—पूर्वेद्युरमावास्यायां वेदिमित्यपकर्षेऽभिमर्शनादीनामप्यपकर्षिका पाठक्रमादिति प्राप्ते,—अमावास्यायां विशेषविहितश्रुतिक्रमात्पाठक्रमबाधान्नापकर्ष इति सिद्धान्तः ॥ १६ ॥

सान्तपनीयाया अग्निहोत्राद्युत्कर्षकत्वाधिकरणम् ॥ १७ ॥

**सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ १७ ॥**

मरुद्भ्यः सान्तपनेभ्यो मध्यंदिने चरुमिति सान्तपनीयेष्टिर्दैवात्सायंकालं यावन्न जाता तदानन्तरं तां कृत्वा पश्चादग्निहोत्रम् । अन्यथा तदानीमग्निहोत्रकरणे तदङ्गप्रणयनलोपापत्तेः । कालस्तु साङ्गप्रयोगावगमोत्तरं विधीयत इति दुर्बलत्वाद्बाध्यत इति प्राप्ते,—कालस्यानुपादेयत्वेन निमित्तत्वात्तदनुग्रहेणाङ्गान्तरबाधः । तस्मादग्निहोत्रं हुत्वा सान्तपनीयेष्टिरिति सिद्धान्तः ॥ १७ ॥

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ॥ १८ ॥

**षोडशीचोक्थसंयोगात् ॥ १८ ॥**

तं पराञ्चमुक्थ्येभ्यो गृह्णातीति उक्थ्योत्तरं षोडशी श्रुतः । तत्र दैवादुक्थ्योत्कर्षे षोडशी नोत्कृष्यते तदङ्गस्तोत्रस्याप्युत्कर्षापत्तौ समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोतीति विहितकालबाधापत्तेः । उक्थ्यपरभावस्तु पदार्थविशेषणत्वात्कालात् दुर्बल इति प्राप्ते,—प्रधानाङ्गत्वेन क्रमो बलवान् स्तोत्राङ्गत्वेन कालो दुर्बलस्तस्मादुत्कर्ष इति सिद्धान्तः ॥ १८ ॥

इति श्रीन्यायबिन्दौ पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

१ यथा प्रासङ्गिकं पिष्टलेपहोमस्य नोत्कर्षकं तथा अपूर्वमपीत्यर्थः । सि० सू० । २ उत्कृष्यमाणा सान्तपनीया अग्निहोत्रमुत्कर्षेत् स्वस्थानाच्चालयेत् सवनवत् प्रातःसवन इव माध्यन्दिनं वैगुण्याच्चेत्यर्थः । पू०सू० । ३ किंचिदङ्गरहितमप्यग्निहोत्रं कर्तव्यमित्यभिप्रायः । ४ अयं भावः, सान्तपनीयाया स्वकालभ्रंशस्य दुर्वारत्वात्तदनुरोधेन स्वकालप्राप्तस्याग्निहोत्रहोमस्य मुख्यकालबाधोऽनुचित इति तदङ्गजातमपि स्वकाले एवानुष्ठेयम् । ५ उक्थ्योत्कर्षे षोडशीप्युत्कृष्येत षोडश्या उक्थ्योत्तरकालभावित्वेन पूर्वोत्तरसंयोगादित्यर्थः । सि० सू० । ६ अस्ते । ७ उक्थ्योत्तरत्वम् । ८ अनुत्कर्षे हि उक्थ्योत्तरत्वं प्रधानाङ्गं सद्बाध्येत । नचैवमुत्तमत उत्कर्षः ।

## पञ्चमाध्यायस्य द्वितीयः पादः।

वाजपेयपशूनां सर्वेषामेकदैवोपाकरणादिधर्मानुष्ठानाधिकरणम् ॥ १ ॥

**सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥**

वाजपेये सप्तदशानां प्राजापत्यपशूनामुपाकरणनियोजनादयः काण्डानुसमयेन कार्याः एकैकस्य पशोः स्वाङ्गाव्यवधानस्य प्रकृतिप्राप्तत्वात्। तस्मादेकस्योपाकरणादिसर्वं कृत्वा ततोऽपरस्य कर्तव्यमिति प्राप्ते,—प्राजापत्यैश्चरन्तीत्येकपदोपादानात्सर्वपशूनां साहित्यावगतेरेकस्योपाकरणं कृत्वाऽपरस्योपाकरणमित्येवं पदार्थानुसमय एव, काण्डानुसमये साहित्यबाधापत्तेः। एवमन्यत्राप्यनेकप्रधानसाहित्ये पदार्थानुसमय एवेति सिद्धान्तः। अश्वप्रतिग्रहेष्टौ तु निमित्तवशात्पुरोडाशबाहुल्ये श्रपणाद्युद्वासनान्तकाण्डानुसमय एव, पदार्थानुसमये पुरोडाशदाहापत्त्या प्रधानविरोधादिति ज्ञेयम् ॥ १ ॥

मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ॥ २ ॥

**मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ २ ॥**

आग्नेयाग्नीषोमीयनिर्वापक्रम एकैकेन मुष्टिनेति प्राप्ते,—चतुरश्चतुरो मुष्टीन्निर्वपतीति चतुर्मुष्टिनिर्वापस्य विहितत्वेनाङ्गत्वाच्चतुर्भिर्मुष्टिभिः क्रमो न तदवयवैः। एवमाग्नेयकपालान्यष्टावुपधायाग्नीषोमीयोपधानं तथा द्व्यवदानेनैवानुसमयो नैकैकेनेत्यादि ज्ञेयम् ॥ २ ॥

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ॥ ३ ॥

**संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥ ३ ॥**

---

१ बहूनां संस्कार्यत्वेन प्रधानानामेकत्र संनिपाते एकैकस्य गुणस्य सर्वकर्म यावदनुष्ठानं स्यादित्यर्थः। पू० सू०। २ वाक्यावगतसाहित्यं तु आरादुपकारकाणामिति न तद्विरोधो भविष्यति। ३ साहित्यस्य प्रयोगवचनपरिगृहीतत्वेन प्रत्यक्षतयानुमानिकेनातिदेशेन बाधासंभवात्। ४ काण्डानुसमये एकस्य पशोरुपाकरणादियावत्पदार्थानुष्ठिते सति पश्वन्तरे तदनुष्ठाने द्वात्रिंशद्भिः क्षणैर्व्यवधानं भवेदिति साहित्यबाधः स्यात्। मम तु षोडशैरेवेति लाघवमिति भावः। ५ शते सहस्रे वा पुरोडाशेषु सर्वेषां श्रपणं कृत्वा पुनरुद्वासने पूर्वमधिश्रितानां दाहो दुर्निवारः। ६ एकैकेन मुष्टिकपालादिनानुसमयः। शेषं सुगमम्। पू० सू०। ७ द्विर्हविषोऽवद्यतीत्यनेन द्वयोरेकपदार्थत्वात्। ८ संयुक्ते चतुरवत्तं जुहोतीत्यादिचतुष्ट्वादिसंयुक्तहोमे चतुरवत्तेनोपक्रमात् इतरस्य व्यवदानादेस्तदर्थत्वात् तदन्तमेकः पदार्थ इत्यर्थः। सि० सू०।

व्यवदानमात्रेणानुसमयप्राप्तौ,—व्यवदानस्य चतुरवत्तहोमोपायतयां वि-धानादवदानादिप्रदानान्तेनानुसमय इति सिद्धान्तः ॥ ३ ॥

अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ॥ ४ ॥

वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ४ ॥

अञ्जनादियूपधर्माणां यूपगणे पूर्ववत्पदार्थानुसमयः अञ्जनादिपरि-व्याणान्तं यजमानो यूपं नावसृजेदित्यनुत्सर्गस्तु प्रकृतावार्थिको न विवक्षित इति प्राप्ते,—नियमेनाप्राप्तत्वादनुत्सर्गो विधेय एवेति न पदार्था-नुसमयः किंतु काण्डानुसमय एवेति सिद्धान्तः ॥ ४ ॥

दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥ ५ ॥

पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात् ॥ ५ ॥

अग्नीषोमीये पशौ दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृता-न्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवद्यतीति श्रुतम् । तत्रैकदेवतेषु पशुगणेष्वेकैकस्य पशोरवदानत्रयं कृत्वा तथैवापर-स्येति काण्डानुसमयः प्रकृतिवदिति प्राप्ते,—प्रकृतौ पश्वैक्याद्दैवतादीनामार्थः क्रमः । इह तु साहित्यार्थे दैवतैर्दैवतानां क्रम इति पदार्थानुसमय एवेति सिद्धान्तः ॥ ५ ॥

नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम् ॥ ६ ॥

नानाबीजेष्वेकमुलूखलं विभवात् ॥ ६ ॥

राजसूये नानाबीजेष्टिः अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमित्यादि । तत्र कृष्णाजिनास्तरणादिफली-करणान्तानां पदार्थानामनुसमय इत्युलूखलभेद इति प्राप्ते,—तेषां तण्डुली-

---

१ द्विरवदानस्यावदाने विशेषमात्राधायकत्वात् चतुरवत्तस्यैव होमशेषत्वम् । अव-दानं विना होमस्यासंभवादर्थाक्षिप्तेऽवदाने द्वित्वमात्रं द्विरित्यनेन यद्यपि विधीयते तथापि चतुरवत्तपारतन्त्र्येणैव विधीयते । तथा सति दृष्टार्थता द्विरवदानस्यान्यथा-दृष्टकल्पना स्यादिति तस्य तदुपायतेति तत्त्वम् । २ आदिपदेनाभ्यञ्जनाष्टस्रीकरणा-दीनां ग्रहणम् । अञ्जनादि परिव्याणान्तमनुसमयः स्यात् यजमानस्य तावत्पर्यन्तम-न्वारम्भस्य वचनात् तदङ्गत्वादित्यर्थः । सि० सू० । ३ पशुगणे तस्य तस्य पशोः सर्वं समापयेत् पश्वेकत्वस्य प्रकृताविवात्रापि सत्त्वादित्यर्थः । पू० सू० । ४ प्रकृता-वनुष्ठेयपदार्थानां पश्वेकत्वात्संश्लिष्टत्वमिति दैवतसौविष्टकृतान्तर्यमार्थिकम् । ५ समा-नजातीयैः समानकालीनानामित्यपि बोध्यम् ।

करणांशत्वेन पृथक्पदार्थत्वाभावात्[1] अन्यथाऽदृष्टार्थत्वापत्तेः फलीकरणान्तेन काण्डेनानुसमय इत्येकमेवोलूखलमिति सिद्धान्तः ॥ ६ ॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ॥ ७ ॥

## विकारे[2] त्वनूयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ ७ ॥

पशौ पृषदाज्येनानूयाजान्यजतीति श्रुतं, पृषदाज्यं दधिमिश्रमाज्यम्, अष्टावुपभृतीति प्रयाजानुयाजाज्ययोः प्रकृतिवदेकस्यामुपभृति ग्रहणे संकर इति कालभेदेन ग्राह्यम्, उपभृतीत्येकत्वश्रवणात् क्रमस्य तु पाठकल्प्यत्वादिति प्राप्ते,—प्रकृतौ तथात्वेऽपि विकृतावानुमानिकत्वेन[3] तुल्यत्वात्प्रयाजाज्ये गृहीते तदुपस्थितस्यानूयाजाज्यग्रहणस्य बाधायोगात्पात्रान्तरमुपादेयमिति सिद्धान्तः ॥ ७ ॥

नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ॥ ८ ॥

## [4]प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नह्यचोदितस्य शेषाम्नानम् ॥ ८ ॥

अग्नये कृत्तिकाभ्यः पुरोडाशमिति नक्षत्रेष्टिं विधायोपहोमा विहिताः। सोऽत्र जुहोत्यग्नये स्वाहा कृतिकाभ्यः स्वाहेति। तत्र प्रकृतौ यद्यपि प्रधानानन्तरं नारिष्टहोमास्तथापीह प्रत्यक्षपाठेन प्रथममुपहोमास्ततो नारिष्टहोमा इति प्राप्ते,—विकृतेः क्लृप्तोपकारसाकाङ्क्षत्वात्प्रथमं प्राकृताङ्गसंबन्धः पश्चात् संनिधिपठिताङ्गस्य। तेन नारिष्टान् कृत्वा पश्चादुपहोमा[5] इति सिद्धान्तः ॥ ८ ॥

विदेवनादीनामभिषेकपूर्वताधिकरणम् ॥ ९ ॥

## [6]कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥ ९ ॥

---

१ भावनैक्यमिति शेषः। न च कृष्णाजिनमधस्तादवस्तृणाति शूर्पेण विविनक्तीत्यादितस्तरणादिभावनाप्रतीतेः कथं तदेकत्वमिति वाच्यम्। स्तरणादीनां तण्डुलभावनानिवर्तकत्वेन ततो भेदाभावात्। २ अनूयाजानां श्रुतद्रव्यान्यद्रव्यकत्वे पात्रान्तरं स्यात् द्रव्यभेदादित्यर्थः। सि० सू०। ३ अतिदेशतः प्राप्तत्वेन। ४ प्राकृतधर्माणामुत्पत्तिवाक्यपठितत्वात् वैकृतमङ्गमन्ते स्यात्। नहि अचोदितस्यानुत्पन्नस्याङ्गपाठो युक्त इत्यर्थः। सि० सू०। ५ अयं भावः, विकृतिभावनायाः प्रकारविशेषे साकाङ्क्षत्वात् संनिहितं कल्प्योपकारं प्रकारमुपेक्ष्यासंनिहितमपि प्राकृतं प्रकारं स्वीकरोति क्लृप्तोपकारत्वात्, ततः संनिधिपठिताङ्गप्रयोजनापेक्षातो वैकृतमिति। ६ कृतदेशात् नाम माहेन्द्रस्तोत्रदेशात् अभिषेकपूर्ववर्तिविदेवनादीनां स एव देशः स्यादभिषेकेण सह प्रत्यक्षसंयोगात्, अभिषेचनीयाङ्गोत्तरत्वं तु कल्पनामात्रमित्यर्थः। सि० सू०

राजसूये अभिषेचनीयानन्तरं विदेवनादयोऽभिषेकान्ता विहिताः । तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टः 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इति तदपकर्षेऽपि न तत्पूर्वपदार्थापकर्षः वेदिंवदपूर्वत्वेनाक्लृप्तक्रमत्वात् । एवं च तेषामन्ते तु बादरायण इति न्यायात्सर्वप्राकृताङ्गोत्तरमनुष्ठानमिति प्राप्ते,—अपकर्षावस्थायां क्रमासिद्धावपि अभिषेकपूर्वत्वस्य विदेवनादीनां प्रत्यक्षपाठेन प्राकृताङ्गोत्तरता त्वनुमानेनेति प्रत्यक्षप्राबल्यादभिषेकात्पूर्वमेवानुष्ठानात्तदन्तापकर्ष इति सिद्धान्तः ॥ ९ ॥

सावित्रहोमादीनां दीक्षणीयापूर्वताधिकरणम् ॥ १० ॥

**प्राकृताच्च[3] पुरस्ताद्यत् ॥ १० ॥**

अग्नौ सावित्रहोमाद्यपूर्वपदार्थान्विधाय पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः । तत्र प्राकृताङ्गस्य पूर्वमन्वयात्प्रत्यक्षपाठस्य गुणार्थत्वात्तदनन्तरं सावित्रहोमादिवैकृतानुष्ठानमिति प्राप्ते,—गुणार्थप्रत्यक्षपाठस्यापि गुण्युपस्थापकतया[4] कर्मप्रयोजकत्वाद्वैकृतानन्तरमेव दीक्षणीयादीति सिद्धान्तः ॥ १० ॥

याजमानसंस्काराणां रुक्मप्रतिमोकपूर्वभाविताधिकरणम् ॥ ११ ॥

**[5]संनिपातश्चेद् यथोक्तमन्ते स्यात् ॥ ११ ॥**

अग्नौ दीक्षणीयानन्तरं रुक्मप्रतिमोचनाद्याम्नातम् । प्रकृतौ तु दीक्षणीयानन्तरं दीक्षितसंस्काराः । तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनादिकमिति प्राप्ते,—प्रकृतिक्लृप्तक्रमवशेन दीक्षणीयानन्तरं दीक्षितसंस्कारास्ततो रुक्मप्रतिमोचनादि । दीक्षणीयानन्तरपाठस्तु रुक्मादेनान्तरीयकः पश्चादनुष्ठानेऽपि न विरुध्यते । सावित्रहोमादेस्तु पश्चादनुष्ठाने पूर्वपाठविरोध इति विशेष इति सिद्धान्तः ॥ ११ ॥

इति श्रीन्यायबिन्दौ पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

१ यथा पूर्वेद्युरमावास्यायां वेदिं करोतीति वेदिमात्रापकर्षो न पूर्वेषामक्लृप्तक्रमत्वात् । तथात्राभिषेकमात्रस्यापकर्ष इति भावः । २ आगन्तूनामन्ते निवेश इति बादरायणमतमित्यर्थः । ३ यद्वैकृतमङ्गं प्राकृतात् पुरस्तात् अग्रे पठितं तस्यापि स एव देशः । सि० सू० । ४ गुणगुणिनोः समानदेशत्वात् । ५ प्राकृतवैकृतसंनिपाते यथोक्तं प्रत्यक्षश्रुतं रुक्मधारणमन्ते स्यादित्यर्थः । सि० सू० ।

## पञ्चमाध्यायस्य तृतीयः पादः।

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यताधिकरणम् ॥ १ ॥

**विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥**

एकादश प्रयाजान्यजति षडुपसद इत्यादिसंख्याविवृद्धिः प्रतिप्रयाजं प्रत्युपसदं च कार्या उद्देश्यसाहित्यस्याविवक्षितत्वादिति प्राप्ते,—प्रयाजादिस्वरूपे प्रत्येकं समुदाये वा संख्यान्वयायोगात्प्रयाजप्रयोगे सर्वप्रयाजलक्षिते सा विधीयत इति सर्वसंपाद्या सेति सिद्धान्तः ॥ १ ॥

प्रथमादीनां तिसृणामुपसदां स्वस्थानावृत्त्यधिकरणम् ॥ २ ॥

**स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् ॥ २ ॥**

तिसृणामुपसदामनुष्ठानोत्तरं पुनरादितः करणमिति दण्डाकलितवदावृत्त्या षट्संख्यासंपत्तिरिति प्राप्ते,—तृतीयोत्तरं प्रथमायां प्राकृतक्रमबाधापत्तेरेकैकस्या द्विरावृत्तिरिति स्वस्थानविवृद्धिरेवेति सिद्धान्तः ॥ २ ॥

सामिधेनीष्वागन्तूनामन्ते निवेशाधिकरणम् ॥ ३ ॥

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ३ ॥**

एकविंशतिमनुब्रूयादिति सामिधेनीवृद्धावागन्तूनामृचामन्ते निवेशः इयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या इति वचनात्समिध्यमान[illegible]त्योर्मध्ये धीयमानानां धाय्यापदार्थत्त्वादिति प्राप्ते,—धाय्यापदेन पृथुपाजवत्यौ धाय्या इत्याद्युक्ता एव न त्वागन्तुमात्रं तेन धाय्याभिन्नानामन्ते निवेश इति सिद्धान्तः ॥ ३ ॥

बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ४ ॥**

बहिष्पवमाने स्तोत्रीयोऽनुरूपः पर्यासश्चेति त्रयस्तृचा विवृद्धस्तोमकेषु क्रतुषु अतिदेशप्राप्तास्तत्रागंतूनामृचां पर्यासात्प्राक् निवेशः। द्वादशाहे वृषण्वतीनां पर्यासात्प्राक् पाठदर्शनात् तत्रापि तथाऽनुमानात् पर्यासशब्दस्य चान्तवचनत्वप्रसिद्धेरिति प्राप्ते,—अनुमानस्याप्रमाणत्वादन्ते निवेश एव न्यायादिति सिद्धान्तः ॥ ४ ॥

बहिष्पवमाने आगन्तूनां साम्नामन्ते निवेशाधिकरणम् ॥ ५ ॥

अन्ते तूत्तरयोर्दध्यात् ॥ ५ ॥

विवृद्धस्तोमकेष्वेव बहिष्पवमानोत्तरयोर्माध्यंदिनार्भवपवमानयोः सामागमो वक्ष्यमाणोऽन्ते तृच इति प्राप्ते,–त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवावपन्ति अत एवोद्वपन्तीति वचनात् पवमानगतगायत्र्यादिष्वेव निवेश इति सिद्धान्तः ॥ ५ ॥

ग्रहेष्टकादीनां ऋत्वग्निशेषताधिकरणम् ॥ ६ ॥

ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ ६ ॥

अंशुं गृह्णाति चित्रिणीरुपदधातीति च ग्रहेष्टकमनारभ्याधीतं सवनचितिशेषस्तदारम्भकत्वात् अतः प्रतिसवनं प्रतिचिति चावर्तनीयमिति प्राप्ते,–सवनचितीनां निष्फलत्वात्फलवत्सोमयागाग्न्यङ्गत्वमेवेति सकृदेवानुष्ठेयमिति सिद्धान्तः ॥ ६ ॥

चित्रिण्यादीनां मध्यचितावुपधानाधिकरणम् ॥ ७ ॥

अन्ते स्युरव्यवायात् ॥ ७ ॥

चित्रिण्यादीनामन्ते निवेश इति प्राप्ते,–यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिताविति वचनात् मध्यमायामिति सिद्धान्तः ॥ ७ ॥

लोकंपृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् ॥ ८ ॥

प्राग्लोकंपृणायास्तस्याः संपूरणार्थत्वात् ॥ ८ ॥

चित्रिण्यादीनामन्ते निवेशेऽपि लोकंपृणाया[illegible]गेव निवेशः यदेवास्योनं यच्छिद्रं तदेतया पूरयतीति वचनाल्लोकंपृणायाः संपूर्णार्थत्वादिति सिद्धान्तः ॥ ८ ॥

पवमानेष्टिसंस्कृतेऽग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ९ ॥

संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ ९ ॥

अग्निहोत्रादीन्याधानानन्तरमेव कार्याणि तेनैवाहवनीयनिष्पत्तेः पवमानेष्ट्यादिना तु तत्रैवापूर्वान्तरं क्रियत इति प्राप्ते,–पवमानेष्टीनामप्याहवनीयोत्पादकत्वमेव आधानोत्तरं विधानाच्च न तेन विकल्पः । अतः पवमानेष्ट्यनन्तरमग्निहोत्रादीति सिद्धान्तः ॥ ९ ॥

अग्निचिद्व्रतानां ऋत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

संचिते त्वग्निचिद्युक्तं प्रापणाच्च निमित्तस्य ॥ १० ॥

वर्षति न धावेदित्यादीन्यग्निचिद्व्रतानि चयनानन्तरमेव कार्याणि आहिताग्निव्रतवदिति प्राप्ते,—चयनक्रियायाः फलपर्यन्तत्वात्तान्निमित्तकं तदनन्तरमेव कार्यं फलं चयनक्रियाया अग्न्युपकारो होमसाधनाग्नेर्धारणमिति तत्समाप्त्यनन्तरं नैमित्तकम्, आधानफलं तु अग्निगतमदृष्टमनन्तरमेव भवतीति विशेष इति सिद्धान्तः ॥ १० ॥

दीक्षाया इष्टिसिद्धताधिकरणम् ॥ ११ ॥

परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसंबन्धात् ॥ ११ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति दीक्षणीयेष्टिः दण्डेन दीक्षयतीत्यादि च समुच्चयेन दीक्षाजनकमिति प्राप्ते,—इष्ट्यैव दीक्षासंस्कारः दण्डादि स्वक्रियारूपं तद्व्यञ्जकं तस्मादिष्ट्यन्त एव दीक्षितधर्मा इति सिद्धान्तः ॥ ११ ॥

काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ॥ १२ ॥

अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ १२ ॥

क्रमपठितानां काम्यानां नैमित्तिकानां च पाठतः क्रम इति प्राप्ते,—एकप्रयोगविध्यविषयत्वेनापेक्षाभावेन च न पाठक्रम इति सिद्धान्तः ॥१२॥

यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १३ ॥

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ १३ ॥

एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्मादेतेनेष्ट्वाऽन्येन यजेतेत्यत्रैतच्छब्देन सर्वसंस्थज्योतिष्टोमानन्तर्यमविशेषादिति प्राप्ते,—अग्निष्टोमसंस्थाया नित्यत्वात्तत्संस्थस्यैव परामर्श इति सिद्धान्तः ॥ १३ ॥

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १४ ॥

अथान्येनेति संस्थानां संनिधानात् ॥ १४ ॥

अन्यशब्देन संस्था एव प्रकृतत्वादुच्यते सर्वनामत्वादिति प्राप्ते,—संस्थानामप्रकृतत्वाद्वाक्यशेषस्थसर्वयज्ञानां ज्योतिष्टोमभिन्नानां यज्ञशब्देन ग्रहणमिति सिद्धान्तः ॥ १४ ॥

एकानेकस्तोमवतां सर्वेषामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १५ ॥

एकस्तोमे वा क्रतुसंयोगात् ॥ १५ ॥

न सर्वयज्ञग्रहणं किं तु त्रिवृदाद्येकैकस्तोमकानामेव यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यत इत्यादि वाक्यशेषादिति प्राप्ते,—यो वै त्रिवृदित्यादेरनेकस्तोमेऽप्वपि संभवात्सर्ववाद एवेति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायबिन्दौ पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## पञ्चमाध्यायस्य चतुर्थः पादः ।

पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ॥ १ ॥

### क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

आश्विनो दशमो गृह्यत इति श्रौतक्रमस्तृतीयस्थानपाठक्रमात्प्रबलः तथार्थक्रमबलादग्निहोत्रं जुहोति यवागूं पचतीति पाठक्रमो बाध्यत इति सिद्धान्तः ॥ १ ॥

मुख्यक्रमेणाग्नेयस्य प्रथममवदानाद्यनुष्ठानाधिकरणम् ॥ २ ॥

### अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥

दर्शपूर्णमासयोः स्विष्टकृदवदानं मुख्यक्रमात्प्रथममाग्नेयस्य न तु सान्नाय्यस्य प्रथमप्रवृत्तत्वात् प्रवृत्तिक्रमाश्रयणे हि बहूनामङ्गानां प्रयाजशेषाभिघारणवेद्यासादनादीनां स्वप्रधानविप्रकर्षः स्यात् । मुख्यक्रमात्तु क्रमे बहूनां स्वप्रधानसंनिकर्षः अतः प्रवृत्तिक्रमस्य मुख्यक्रमेण बाधः ॥ २ ॥

इष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ॥ ३ ॥

### वचनादिष्टिपूर्वत्वम् ॥ ३ ॥

सोमस्येष्टिपूर्वत्वं यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वचनात् तथा सोमस्याधानानन्तर्यश्रवणादर्थादिष्टेः सोमपूर्वत्वमपि । आधानानन्तर्यं च सोमेन यक्ष्यमाणोऽग्निमादधीतेत्यनेन लभ्यते । सर्वोऽपि सोमेन यक्ष्यमाण इत्यनर्थकं सदनन्तरं यक्ष्यमाण इत्यर्थे पर्यवस्यति अतः सोमपूर्वत्वमपीति ॥ ३ ॥

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ॥ ४ ॥

### उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ ४ ॥

आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवतीति वाक्यादग्नीषोमीयोत्कर्षे एकदेशात्फलायोगेन समस्तेष्ट्युत्कर्षणाद्ब्राह्मणस्य सोमपूर्वत्वमेवेति पूर्वपक्षे मध्ये चिन्तान्तरं—सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं प्रतीक्षेत्न नक्षत्रमिति ऋतुनक्षत्रातिक्रम आधानस्य प्रकरणादिति प्राप्ते,—यदहरेवैनं श्रद्धोपनमेदथादधीतेत्याधाने कालानादरस्योक्तत्वात्सोमकालबाध एवायमिति सिद्धान्तः ।

अथ पूर्वस्योत्तरम् । अदःशब्दोक्ताग्नीषोमीयमात्रोत्कर्ष एव ब्राह्मणस्य

तेन तन्मात्ररहितेष्टिस्तस्यापि पूर्वं भवत्येव वचनाच्चैकदेशात्फलम्, अतो ब्राह्मणस्यापि कल्पद्वयमिति सिद्धान्तः ॥ ४ ॥

आज्यस्य सोमादप्युत्कर्षाधिकरणम् ॥ ५ ॥

## पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ ५ ॥

अग्नीषोमीयस्य पुरोडाशस्येवोपांशुयाजाज्यस्याप्युत्कर्ष इत्ययुक्तं विष्णुप्रजापतिभ्यां सोमात्प्रागपि तदनुष्ठानसंभवादिति सिद्धान्तः ॥ ५ ॥

विकृतानामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ॥ ६ ॥

## विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ ६ ॥

विकृतिष्वपि व्यहकालत्वं य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यां पौर्णमास्यां वा यजेतेत्यस्य प्रयोगैकदेशविषयत्वस्य प्रकृतिवदेव संभवेनाविरोधात् । वचनं तु विकृतौ कालाव्यवस्थार्थमिति प्राप्ते,—आतिदेशिकस्य व्यहकालत्वस्य विकृतौ प्रत्यक्षवचनेन बाधात्सद्यस्कालत्वमेव । प्रकृतौ तु व्यहकालत्वमप्यौपदेशिकमिति पूर्णमासीकालस्य प्रयोगैकदेशविषयत्वमिति भेद इति सिद्धान्तः ॥ ६ ॥

सोमात्सान्नाय्यादीनामुत्कर्षाधिकरणम् ॥ ७ ॥

## सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ ७ ॥

सान्नाय्याग्नीषोमीययोर्विकृतीनामप्यतिदेशात्सोमोत्तरत्वं नासोमयाजी सन्नयेदित्यादिवचनादिति स्पष्टम् ॥ ७ ॥

सोमविकाराणां दर्शपूर्णमासात्प्राक् कर्तव्यताधिकरणम् ॥ ८ ॥

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ ८ ॥

सोमवत्तद्विकृतीनामपीष्टेः प्रागूर्ध्वं च संभवशङ्कायामाधानानन्तर्योक्त्या सोमस्येष्टेः प्राक्संभवेऽपि तद्विकाराणामाधानानन्तर्याभावान्न तथात्वमिति सिद्धान्तः ॥ ८ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ पञ्चमाध्यायस्य चतुर्थः पादः । अध्यायश्च समाप्तः ॥ ५ ॥

---

## षष्ठाध्यायस्य प्रथमः पादः ।

यागादिक्रियाणां स्वर्गफलसाधनताधिकरणम् ॥ १ ॥

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥**

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ यागादेरेव पदश्रुत्या भावनाभाव्यत्वं न तु स्वर्गस्य वाक्येन, तस्य दुर्बलत्वात् । किंच स्वर्गशब्दस्य सुखसाधनचन्दनादिद्रव्यवाचित्वाद्द्रव्यस्य च भूतभव्यसमुच्चारणे भूतं भव्यायोपकल्पत इति न्यायेन कर्मार्थत्वमेव युक्तम् । स्वर्गकाम इति तदर्जनकामनानुवादस्तेन स्वर्गेण यागं कुर्यादिति वाक्यार्थः । एवं च फलाभावात्तद्भोक्तृत्वरूपोऽधिकारो नास्तीति प्राप्ते,—पदश्रुतेर्बलीयस्या एकाभिधानश्रुत्या विध्यन्वितायाः भावनाया इष्टभाव्यकत्वनियमात्स्वर्गादेश्च कामनाविषयसुखविशेषवाचित्वाद्भाव्यत्वं न तु यागादेः किंतु तस्य साधनत्वमेव । तेन यागेन स्वर्गं कुर्यादित्यर्थात्सिद्धोऽधिकार इति सिद्धान्तः ॥ १ ॥

यागादिषु समर्थमनुष्यस्यैवाधिकाराधिकरणम् ॥ २ ॥

**फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ २ ॥**

फलवाक्येन तत्कामानां सर्वेषामधिकारावगमात्तदनुरोधेनाङ्गवाक्यसंकोचाच्चक्षुष्मन्तं प्रत्येवाज्यावेक्षणविधिः । अन्धस्य तु तद्रहित एव प्रयोगः । एवं बधिरमूकादेरपीति प्राप्ते,—अङ्गानां क्रत्वन्वयात्तद्विशिष्टक्रतुः सामर्थ्यात्समर्थैरेव पुरुषैः संबध्यते । फलवाक्यं च समर्थविषयत्वेऽप्यविरुद्धम् । यत्र तु यावज्जीवमित्यादौ विरोधस्तत्र यथाशक्तिप्रयोगादपि फलमिति वक्ष्यते । तिरश्चां तु प्रधानमात्रेऽप्यसामर्थ्यान्नाधिकारः । देवतानां च स्वोद्देशेन त्यागासंभवादनधिकारः । ऋषीणां तु पूर्वपूर्वभृग्वादिवरणस्य उत्तरोत्तरभृग्वादीनां संभवादस्त्येवाधिकार इति ऋष्युदाहरणमनादेयमिति सिद्धान्तः ॥ २ ॥

यागादिषु मिलितयोः स्त्रीपुंसोरधिकाराधिकरणम् ॥ ३ ॥

**लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ ३ ॥**

स्वर्गकाम इत्यत्र पुंस्त्वस्य प्रकृत्यर्थत्वाद्विवक्षितत्वमिति स्त्रिया नाधिकारः 'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः' इति स्मरणाच्चेति प्राप्ते,—प्रकृत्यर्थत्वेऽपि उद्देश्यविशेषणत्वादविवक्षितमेव पुंस्त्वम् । ङीबाद्यर्थ-

त्वात्तु संख्यातुल्यत्वमेव । न चाधनत्वं पित्रादिदत्तसंभवात् धर्मे चार्थे चेत्यादिवचनाच्च पत्नीशब्दस्य यज्ञसंयोगे निष्पत्तेः भार्या । पुत्रश्चेति वचनं तु अस्वातन्त्र्यपरं तस्मात्स्त्रिया अप्यधिकार इति सिद्धान्तः ॥ ३ ॥

यागे दम्पत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

## स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ ४ ॥

स्त्री पृथगेव यजेत न तु पत्या सह यजेतेत्येकत्वस्य कर्तरि विवक्षितत्वादिति प्राप्ते,—यजमानप्रयोगे पत्न्याज्यावेक्षणस्य पत्नीप्रयोगे च यजमानावेक्षणादेर्लोपप्रसङ्गात् ऋत्विग्न्यायेन पत्न्युपादाने स्वामिवचनपत्नीयजमानशब्दानुपपत्तेः संसृष्टद्रव्ययोर्विभागनिषेधाच्च न पृथग्यष्टृत्वं किंतु सहैव दंपत्योरेकं कर्तृत्वम् । तदैक्याच्च यजेतेत्येकवचनम् अग्नीषोमौ देवतेतिवदिति सिद्धान्तः ॥ ४ ॥

एकस्य पुंस एवाधानेऽधिकाराधिकरणम् ॥ ५ ॥

## द्व्याधानं च द्वियज्ञवत् ॥ ५ ॥

क्षौमे वसानावग्निमादधीयातामिति द्विवचनं कर्तृत्वद्वित्ववाचीति द्वौ पुमांसौ सस्त्रीकौ सहाधानं कुर्यातां वसानाविति च पुंद्वयप्रतीतेः स्त्रीसद्वितीयत्वे च मिथुनादिशब्दरूपप्रमाणाभावात्तद्विध्यर्थमेवेदं वचनम् । उत्पत्तिवाक्ये त्वेकवचनमुपलक्षणं क्षौमेति टुक्षुशब्द इति शब्दवत्त्वानुवाद इति प्राप्ते,—वसानक्षौमशब्दयोरानर्थक्यापत्तेः तद्विधाने च वाक्यभेदेन द्वित्वविध्यसंभवात्कर्तृत्वैक्येऽपि तदाश्रयभेदादग्नीषोमौ देवते इतिवत् द्विवचनोपपत्तेः वसनानुवादेन क्षौममात्रविधिः । अनुवादश्च स्त्रीसहितस्य पुंस एकस्यैव प्राप्तिवशादिति सिद्धान्तः ॥ ५ ॥

पत्न्या यावदुक्तब्रह्मचर्यादावेवाधिकाराधिकरणम् ॥ ६ ॥

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ ६ ॥

स्त्रिया अधिकारेऽपि याजमानं पुंसैव कार्यं स्त्रीणामध्ययनप्रतिषेधात् । आज्यावेक्षणादिकं फलिसंस्काराश्च स्त्रिया अपि भवन्ति वचनात्फलभागित्वाच्चेति सिद्धान्तः ॥ ६ ॥

यागे शूद्रस्यानधिकाराधिकरणम् ॥ ७ ॥

## चातुर्वर्ण्यमविशेषात् ॥ ७ ॥

अग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः । अध्ययनं तु ज्ञानद्वारा यदि क्रत्वङ्गं तर्हि शूद्रस्य क्रतुविधिभिः प्रयाजवत्प्रयुज्येत यदि नाङ्गं

तदा तेन विना क्रतूनामवैगुण्यादविरुद्धः शूद्राधिकार इति प्राप्ते,—अध्ययनस्यानङ्गत्वेऽपि तज्जन्यार्थज्ञानस्य क्रत्वङ्गत्वात्तद्वतां त्रैवर्णिकानामेवाधिकारेण क्रतुविध्युपपत्तौ शूद्रस्यापि विध्याक्षेपकल्पनानुपपत्तेः। तेनाध्ययनविधिसिद्धमर्थज्ञानमेव क्रत्वङ्गमिति तच्छून्यस्य शूद्रस्य स्वेच्छया प्राप्तविद्यस्यापि नाधिकारः। एवमग्न्यभावादपीति सिद्धान्तः ॥ ७ ॥

यागे निर्धनस्याप्यधिकाराधिकरणम् ॥ ८ ॥

त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥

एवमेव सिद्धद्रव्याणामेवाधिकारः। क्रतुभिर्द्रव्यार्जनाक्षेपे गौरवादिति प्राप्ते,—द्रव्यस्य प्रयोजनवशेनार्जनाद्भोजनादिवत्क्रतूनामपि तदाक्षेपकत्वमविरुद्धम्। विद्या तु न रागप्राप्ता किं तु प्रत्यक्षविधिसिद्धैव गृह्यत इति भेद इति सिद्धान्तः ॥ ८ ॥

अङ्गहीनस्यापि यागेऽधिकाराधिकरणम् ॥ ९ ॥

अङ्गहीनश्च तद्धर्मा ॥ ९ ॥

अङ्गहीनोऽपि तत्प्रतिसमाधानेनाद्रव्यवदधिक्रियते ॥ ९ ॥

अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् ॥ १० ॥

उत्पत्तौ नित्यसंयोगात् ॥ १० ॥

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं सोऽसमर्थत्वान्न काम्येष्वधिक्रियते नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ॥ १० ॥

दर्शपूर्णमासयोः त्र्यार्षेयस्यैवाधिकाराधिकरणम् ॥ ११ ॥

अत्र्यार्षेयस्य हानं स्यात् ॥ ११ ॥

दर्शपूर्णमासयोरार्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीत इति श्रुतं तत्रार्षेयमिति वरणमात्रे विहिते चतुणषडादीनां च प्रतिषेधेऽर्थादेकद्वित्रिपञ्चानां प्राप्तं वरणमनूद्यते। अथ वार्षेयमिति सामान्यस्यैकमित्यादिना विशेषणादेकादिवरणेनाधिकार इति प्राप्ते,—असंख्याकविधौ प्रतिषेधद्वयकल्पनं त्रीनिति च पाक्षिकं स्यात्। एकादिविधाने च वाक्यत्रयं विकल्पश्चेति दोषः तस्मात्त्रीनित्येव विधिः। अन्यत्सर्वमनुवाद इति त्रिसंख्यवरणवतामधिकार इति सिद्धान्तः ॥ ११ ॥

रथकारस्याधानाधिकाराधिकरणम् ॥ १२ ॥

वचनाद्रथकारस्याधानस्य सर्वशेषत्वात् ॥ १२ ॥

वर्षासु रथकार आदधीतेत्यत्र ब्राह्मणादीनामेव रथकर्तृत्वनिमित्तवर्ष-

र्तुविधिः न तु हीनवर्णस्यैतत्संज्ञकस्य विशिष्टाधानविधिः गौरवात् आनर्थक्याच्चेति प्राप्ते,—रूढ्या योगबाधाद् विदुषोऽप्याधानविधिरर्थकर्मरूपः रूढिश्च ऋभुसौधन्वनापरपर्याये ऋभूणां त्वेति मन्त्रवर्णात् । स च 'व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च । भारूषश्च द्विजन्मा च मैत्रः सात्वत एव च ' इत्युक्तो ज्ञेय इति सिद्धान्तः ।। १२ ।।

त्रैवर्णिकभिन्नस्य रौद्रयागेऽधिकाराधिकरणम् ॥ १३ ॥

स्थपतिर्निषादं स्याच्छब्दसामर्थ्यात् ।। १३ ।।

एतया निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिः स्वामी त्रैवर्णिक एव ग्राह्यः कर्मधारयेऽग्निविद्याक्षेपकल्पनागौरवादिति प्राप्ते,—शक्त्या निषादस्यैव स्थपतेर्विधिप्रतीतेः तत्पुरुषे च लक्षणाप्रसङ्गान्निषादस्यैवाधिकारः । अग्निविद्याक्षेपगौरवं तु फलमुखत्वाददोषः ।। १३ ।।

इति श्रीन्यायबिन्दौ षष्ठाध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

## षष्ठाध्यायस्य द्वितीयः पादः ।

सत्रे प्रत्येकस्य सत्रिणः फलसंबन्धाधिकरणम् ॥ १ ॥

पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ।। १ ।।

ऋद्धिकामाः सत्रमासीरन्नित्यादिषु बहुकर्तृकेषु समुदायगतं फलं प्रत्येकं च फलैकदेश इति प्राप्ते,—कर्तृत्वस्य व्यासक्तत्वेऽपि अधिकारस्य प्रत्येकं सत्त्वात्प्रत्येकमेव समग्रफलम् अधिकारिण उद्देश्यत्वेन तत्साहित्यस्याविवक्षितत्वात् । वस्तुबहुत्वस्य कर्तृकारकान्वितत्वात्प्रत्येकमेव कर्तृत्वं तस्य व्यासक्तत्वे बहुत्वानुपपत्तेः । कर्तृत्वोपलक्षितद्रव्यान्वयस्य क्लिष्टत्वादिति सिद्धान्तः ।। १ ।।

दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ।। २ ।।

स्वर्गकामो यजेतेति स्वर्गकामस्योद्देश्यत्वेन तद्गतैकत्वस्याविवक्षितत्वादेको द्वौ बहवो वा यजेरन् न चाख्यातोपात्तसंख्या क्रियाक्षिप्तकर्तृविशेषणं फलवदेव फलभावनाया रागप्राप्तत्वादिति प्राप्ते,—फलेच्छायाः प्राप्तत्वेऽपि भावनाया अप्राप्तत्वात्तदाक्षिप्ते कर्तरि विवक्षितमेवैकत्वम् । न हि प्रवृत्तस्यैव फलमिति लोकतो निर्णीयते तस्मादेक एव कर्तेति सिद्धान्तः ।।२।।

आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम् ॥ ३ ॥

प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ ३ ॥

आरब्धं काम्यं फलप्राप्तौ तदिच्छाविगमे वा न कार्यं प्रयोजनाभावादिति प्राप्ते,–देवताभ्यो वा एष आवृश्चते यो यक्ष्य इत्युक्त्वा न यजेतेति तैत्तरीयश्रुतेः शिष्टाचाराच्चारब्धं समापनीयमेवेति सिद्धान्तः ॥ ३ ॥

आरब्धलौकिककर्मणः समाप्त्यनियमाधिकरणम् ॥ ४ ॥

लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ ४ ॥

लौकिकं गृहकर्मादि प्रक्रान्तमपि न नियमेन समापनीयं रागप्राप्तत्वेनाशास्त्रीयत्वादिति सिद्धान्तः ॥ ४ ॥

प्रतिषिद्धकर्मानुष्ठानेऽनिष्टप्राप्त्यधिकरणम् ॥ ५ ॥

प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ ५ ॥

न कलञ्जं भक्षयेदित्यादौ नञर्थान्वितभक्षणस्य पदश्रुत्या विधिः । स चाभावस्याननुष्ठेयत्वात्तत्संकल्पविषयः । तत्र च फलाकाङ्क्षायां विश्वजिन्न्यायात्स्वर्ग इति प्राप्ते,–संकल्पलक्षणायां गौरवात्परिपूर्णं पदं पदान्तरेणान्वेतीति न्यायाच्च यद्भक्षयेत्तन्नेति भक्षणप्रवर्तनान्वितनञर्थस्यैव विधिः । स च निवर्तनारूपः भक्षणप्रवृत्तिर्निवर्तनाविषय इति नञ्सत्त्वे प्रवर्तनाविपरीतनिवर्तनाप्रतीतेः । सा च स्वविषयस्यानिष्टसाधनतां बोधयतीति तत्परिहाराय सर्वैर्निषिद्धं वर्जनीयमिति सिद्धान्तः ॥ ५ ॥

गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥ ६ ॥

तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्त्तरेन् ॥ ६ ॥

प्राङ्मुखो भुञ्जीतेत्यादयः स्मार्ता धर्माः प्रागप्युपनयनात्प्रवर्तन्ते अनध्ययनासाध्यत्वादिति प्राप्ते,–उपनयनादिर्नियम इति प्रागुपनयनात्कामचार इति च स्मृतेरुपनयनानन्तरमेवेति सिद्धान्तः ॥ ६ ॥

अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यताधिकरणम् ॥ ७ ॥

अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ ७ ॥

यावज्जीवमग्निहोत्रं जुहोतीत्यादिजीवननिमित्तकं सायंप्रातर्दर्शपूर्णमासादिकालं विनापि कार्यं, नैमित्तिकेऽशक्याङ्गत्यागेऽवैगुण्यादतः संततानुष्ठानमिति प्राप्ते,–अङ्गकालस्य कृत्यसाध्यत्वेन यथाशक्तिन्यायाविषयत्वात्तत्कालमेव जीवनं निमित्तं भवतीति न संततानुष्ठानमिति सिद्धान्तः ॥ ७ ॥

अग्निहोत्रादीनां स्वकालावृत्त्याऽऽवृत्त्यधिकरणम् ॥ ८ ॥

**तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ ८ ॥**

तर्हिं सकृदनुष्ठानेन कृतार्थत्वान्नावृत्तिरिति प्राप्ते,—कालान्तरव्यावृत्तावपि तत्कालिकजीवनरूपनिमित्तावृत्तिवशान्नैयमिकावृत्तिरिति सिद्धान्तः ॥ ८ ॥

दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणम् ॥ ९ ॥

**तथान्तः क्रतुसंयुक्तानि ॥ ९ ॥**

पुरुषार्थेषु प्रत्यावृत्तिफलभेदादस्त्वावृत्तिः क्रत्वङ्गभेदनहोमादिषु तु क्रतूपकारस्य सकृदनुष्ठानेनैव सिद्धेरेकस्मिन्नेव प्रयोगे भेदनावृत्तावपि न होमावृत्तिरिति प्राप्ते,—निमित्तावृत्तावावृत्तेनैव होमेन क्रतूपकारस्य शास्त्रार्थत्वादावृत्तिरेवेति सिद्धान्तः ॥ ९ ॥

गुर्वनुगमादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

**आचारात् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ १० ॥**

गुरुगमननिमित्तकतदनुगमनाद्याचाराणां गुरुप्रीत्यर्थत्वेन नावृत्तिनियम इति प्राप्ते,—दृष्टार्थत्वेऽपि नियमादृष्टार्थमावृतिरिति सिद्धान्तः ॥ १० ॥

द्विजानाम् ऋणत्रयापाकरणस्य नित्यताधिकरणम् ॥ ११ ॥

**ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ११ ॥**

सोमवेदाध्ययनप्रजोत्पादनानि काम्यान्येव, वसन्ते वसन्त इत्यस्यकालविधिपरत्वादिति प्राप्ते,—वीप्सायुक्तवसन्तपदस्य निमित्तपरत्वात्सोमस्य नित्यत्वम् अध्ययनस्याप्यावश्यकार्थज्ञानफलत्वात्। एवं प्रजोत्पादनस्याप्यकरणप्रत्यवायस्मरणान्नित्यत्वमिति। एवं जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्य इत्यादि ऋणश्रुतिरपि नित्यत्वे मानम्। ब्राह्मणग्रहणं च त्रयाणामुपलक्षणमिति सिद्धान्तः ॥११॥

इति श्रीन्यायविन्दौ षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## षष्ठाध्यायस्य तृतीयः पादः।

---

नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम् ॥ १ ॥

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥**

नित्यनैमित्तिकेष्वपि सर्वाङ्गोपसंहारशक्तस्यैवाधिकारः इतिकर्तव्यताका-

ङ्गायामविशेषेण सर्वान्वयादिति प्राप्ते,—आवश्यकस्य प्रधानस्य सर्वाङ्गसाहित्यस्य सर्वदाऽसंभवात् यथाशक्तिप्रयोगेणैवाधिकार इति सिद्धान्तः॥१॥

अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ॥ २ ॥

**काम्येषु चैवमर्थित्वात् ॥ २ ॥**

काम्ये तु शास्त्रतोऽवश्यकर्तव्यत्वानवगमात्सर्वाङ्गसमर्थस्यैवाधिकार इति विशेषः ॥ २ ॥

द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

**क्रियाणामाश्रयत्वात् द्रव्यान्तरे विभागः स्यात् ॥ ३ ॥**

द्रव्यभेदे क्रियाभेदान्न प्रतिनिधिसंभव इति प्राप्ते,—गुडपाकस्तण्डुलपाक इति द्रव्यभेदेऽपि क्रियैकावगमाद्भवति प्रतिनिधिरिति सिद्धान्तः ॥ ३ ॥

नित्यकर्मणोऽनित्यप्रारब्धकर्मणश्च श्रुतद्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ॥ ४ ॥

**श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् ॥ ४ ॥**

विहितव्रीह्याद्यलाभे तत्प्रतिनिधित्वेन द्रव्यान्तरग्रहणे मानाभावः शास्त्रेण तस्याङ्गत्वानवगमादिति प्राप्ते,—यागादेर्द्रव्यं विनाऽनुपपत्तेस्तद्विधिना द्रव्याक्षेपे व्रीह्यादिशास्त्रं नियममात्रपरं तदसंभवे तु नित्यविधिबलाद्व्रीहिसदृशनीवारादिनापि भवति याग इति सिद्धान्तः ॥ ४ ॥

देवताग्निमन्त्रक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

**न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ ५ ॥**

देवताग्निमन्त्रक्रियाणामपि प्रतिनिधिरिति प्राप्ते,—मुख्यकार्याशक्तेर्न प्रतिनिधिः देवताया विधिगम्यत्वात् आहवनीयादेरदृष्टार्थत्वात् मन्त्रस्य दृष्टार्थत्वेऽपि ध्यानादिनापि तत्कार्यार्थप्रकाशनसिद्धेः । एवं प्रयाजादिक्रियाया अपि अदृष्टार्थाया नान्यतः कार्यसिद्धिरिति सिद्धान्तः ॥ ५ ॥

निषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम् ॥ ६ ॥

**प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ ६ ॥**

अयज्ञिया वै माषा इत्यनेन माषादीनां यज्ञाङ्गतानिषेधेऽपि प्रतिनिधित्वेनोपादाने न दोषः मु(ख्या? द्गा)वयवानां तद्गतानां (अ)निषिद्धत्वादिति प्राप्ते,—संसृष्टावयवानां विवेकस्याशक्यत्वान्न निषिद्धानामुपादानमिति सिद्धान्तः ॥ ६ ॥

स्वामिनः प्रतिनिधित्वाभावाधिकरणम् ॥ ७ ॥

## तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ ७ ॥

यजमानाभावे तदीयपदार्थकरणाय पुरुषान्तरं प्रतिनिधेयमिति प्राप्ते: मृते यजमाने तदसंभवात् । प्रोषितादावाज्यावेक्षणादेः समाख्ययाऽध्वर्य-वादिभिरनुष्ठानसंभवान्न प्रतिनिधिः । फलिसंस्कारास्तु अन्येन क्रियमाणा न यजमानयोग्यतां जनयन्तीति व्यर्थः प्रतिनिधिरिति सिद्धान्तः ॥ ७ ॥

सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिधिस्वीकाराधिकरणम् ॥ ८ ॥

## बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ ८ ॥

सत्रे सप्तदशसु प्रवृत्तेषु यदैकस्यापायस्तदा पूर्वन्यायेन न प्रतिनिधि-रिति प्राप्ते,—स्वामिनः प्रतिनिध्यभावेऽपि कर्तृसाप्तदश्यसंपादनाय तदंशे प्रतिनिधिः ॥ ८ ॥

सत्रे प्रतिनिधेरस्वामितताधिकरणम् ॥ ९ ॥

## स स्वामी स्यात्तत्संयोगात् ॥ ९ ॥

आनीतस्यान्यस्य स्वामिस्थानापत्त्या तत्त्वमिति प्राप्ते,—आदित आर-भ्य सर्वप्रयोगाकर्तृत्वान्न स्वामित्वं किन्तु संख्यासंपत्त्यर्थं गुणभूत एवेति सिद्धान्तः ॥ ९ ॥

सत्रे प्रतिनिधेर्यजमानधर्मग्राहिताधिकरणम् ॥ १० ॥

## स तद्धर्मा स्यात्तत्कर्मसंयोगात् ॥ १० ॥

आनीतस्य फलाभावान्न फलिसंस्कारा इति प्राप्ते,—फलाभावेऽपि इतरेषां सप्तदशकर्तृकसंस्कारैर्योग्यताजननार्थं तस्यापि कर्तव्या इति सिद्धान्तः ॥ १० ॥

श्रुतद्रव्याभावे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ ११ ॥

## सामान्यं तच्चिकीर्षा हि ॥ ११ ॥

प्रतिनिधौ न सदृशनियमः यागेन द्रव्यमात्राक्षेपात् व्रीह्यादिबाधस्यो-भयथापि समत्वादिति प्राप्ते, व्रीहित्वादिपरिच्छिन्नानामवयवानां साधन-त्वावगमात्सदृशे च कतिपयतत्सत्त्वात्तस्यैवोपादानमिति सिद्धान्तः ॥११॥

श्रुतद्रव्यापचारे वैकल्पिकानुपादानाधिकरणम् ॥ १२ ॥

## निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ १२ ॥

व्रीह्यारब्धप्रयोगे तदपचारे यवोपादानं मुख्यसंभवे प्रतिनिध्ययोगादि-ति प्राप्ते,—येनोपक्रान्तं तदेव तत्प्रयोगाङ्गम् । अतोऽनङ्गत्वान्न यवोपादानम् । एवं संकल्पमिथ्यात्वप्रसंगादपि तस्मात्प्रतिनिधिरेवेति सिद्धान्तः ॥१२॥

पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ॥ १३ ॥

वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिर-
भावादितरस्य ॥ १३ ॥

यदि सोमं न विन्देत पूतीकानभिषुणुयादित्यत्र सोमाभावे पूतीकानां विधिरिति प्राप्ते,—अपूर्वविधौ गौरवान्नियमोऽयमयमेव प्रतिनिधिरिति एतत्प्रयोजनं वक्ष्यते ॥ १३ ॥

प्रतिनिधिनाशे उपात्तसदृशस्याप्रतिनिधित्वाधिकरणम् ॥ १४ ॥

न प्रतिनिधौ समत्वात् ॥ १४ ॥

प्रतिनिध्यपचारे तत्सदृशं ग्राह्यं न मुख्यसदृशं तस्मिन्प्रयोगे प्रतिनिधेरङ्गत्वादिति प्राप्ते,—मुख्यावयवबुद्ध्या प्रतिनिध्युपादानात्प्रतिनिधेरङ्गत्वे मानाभावान्मुख्यसदृशमेवोपादेयमिति सिद्धान्तः ॥ १४ ॥

श्रुतप्रतिनिधिनाशे मुख्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ १५ ॥

स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ १५ ॥

पूतीकादेः श्रुत्याङ्गत्वात्तदपचारे तत्सदृशमेव ग्राह्यमिति प्राप्ते,—पूतीकगतसोमावयवानामेव श्रुत्या नियमान्न पूतीकानामङ्गत्वम्। अतस्तदपचारेऽपि सोमसदृशस्यैवोपादानमिति सिद्धम्। इदमेव च प्रतिनिधिनियमोऽयं नाभावे विधिरिति पूर्वोक्तस्य प्रयोजनम् ॥ १५ ॥

मुख्यनाशे पुनस्तत्प्राप्तौ तस्यैव स्वीकाराधिकरणम् ॥ १६ ॥

मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ १६ ॥

प्रतिनिध्यर्थं प्रवृत्तो यदि दैवान्मुख्यं लभते तथापि प्रतिनिधिरेव ग्राह्यः तस्य संकल्पितत्वात् अन्यथा मिथ्यासंकल्पापत्तेरिति प्राप्ते,—यथाशक्ति शास्त्रार्थ एव संकल्पयितव्यो न प्रतिनिधिस्वरूपम्। न च मुख्ये सति प्रतिनिधिः शास्त्रार्थो येन संकल्पबाधः, अतो मुख्यमेवोपादेयमिति सिद्धान्तः ॥ १६ ॥

प्रतिनिधिना प्रारब्धे कर्मणि पुनर्मुख्यलाभेऽपि प्रतिनिधिनैव
कर्मसमापनाधिकरणम् ॥ १७ ॥

प्रवृत्तेऽपीति चेत् ॥ १७ ॥

खदिरालाभे तत्प्रतिनिधौ तक्षणादिसंस्कारेषु कृतेषु पश्चात् खदिरलाभेऽप्युपात्ते प्रतिनिधावेव पशुबन्धनमनुष्ठानोत्तरं शास्त्रव्यापाराभावादिति प्राप्ते,—प्रधानार्थत्वाच्छास्त्रस्य प्रधानस्य च मुख्ये सति अन्येन करणे वैगुण्यान्मुख्य एव पशुबन्धनमिति सिद्धान्तः ॥ १७ ॥

यूपप्रतिनिधौ पशुनियोजने खदिरलाभेऽपि प्रतिनिधावेव
नियोजनाधिकरणम् ॥ १८ ॥

नानर्थकत्वात् ॥ १८ ॥

प्रतिनिधिना नियोजनोत्तरं मुख्यलाभे पुनस्तत्र ताद्गुण्याय नियोजनं कार्यमिति शङ्कायां कार्यसिद्धौ अङ्गप्रयोजकाभावान्न पुनरनुष्ठानमिति सिद्धान्तः ॥ १८ ॥

संस्कारयोग्येऽप्यमुख्ये मुख्यस्यैवोपादानाधिकरणम् ॥ १९ ॥

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ १९ ॥

तक्षणादिसंस्कारायोग्ये खदिरे पशुबन्धनमात्रयोग्ये संस्कारयोग्यप्रतिनिधेरेवोपादानं बहूनामनुग्रहादिति प्राप्ते,—बहुत्वेऽपि तेषां द्रव्यगुणत्वादप्रधानवशेन तद्बाध इति खदिर एव बन्धनमिति सिद्धान्तः ॥ १९ ॥

प्रयोजनायोग्यमुख्यसत्त्वेऽपि प्रतिनिध्यादानाधिकरणम् ॥ २० ॥

अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात् ॥ २० ॥

सूक्ष्मत्वाद्बन्धनायोग्ये खदिरे तु प्रयोजनवशात्प्रतिनिधिरेवेति सिद्धान्तः ॥ २० ॥

अङ्गानिर्वाहकप्रधाननिर्वाहकमुख्योपादानाधिकरणम् ॥ २१ ॥

विधिरप्येकदेशे स्यात् ॥ २१ ॥

अल्पव्रीहिलाभे नीवारा एव ग्राह्याः अन्यथाऽश्वशफपरिमाणशेषकार्यादेर्बाधापत्तेः अत एकस्यैव व्रीहिशास्त्रस्य किञ्चिद्बाधो युक्त इति प्राप्ते,—व्रीहीणां व्रीहिभिर्यजेतेति प्रधानयागाङ्गत्वात्प्राबल्यम् । अश्वशफशेषकार्यादि तु यागाङ्गद्रव्याङ्गमिति दुर्बलमतस्तद्बाध एव न्याय्यः । तस्मादल्पव्रीहीणामेव ग्रहणमिति सिद्धान्तः ॥ २१ ॥

इति श्रीन्यायबिन्दौ षष्ठाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## षष्ठाध्यायस्य चतुर्थः पादः ।

---

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ॥ १ ॥

शेषाद्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥

दर्शपूर्णमासयोर्व्यवदाननाशे मध्यपूर्वार्द्धसंभवात्तत एव पुनरवदेयम् । यस्य सर्वाणि हवींषि नश्येयुरिति वचनस्य निःशेषहविर्नाश एव अपेक्षिताज्यविधायकत्वादिति प्राप्ते,—कृत्स्नपुरोडाशमध्यस्यावदेयत्वेन हविष्ट्वात्तन्नाशे

पुरोडाशान्तरप्राप्तौ वचनादाज्यं विधीयत इति तदेव ग्राह्यमिति सिद्धान्तः ॥ १ ॥

स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावाधिकरणम् ॥ २ ॥

अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ २ ॥

स्विष्टकृदवदाननाशे पुनः शेषादवदेयं प्रतिपत्त्यर्थत्वादिति प्राप्ते,—शेषान्तरस्य प्रतिपत्यन्तरसत्त्वान्नावदानम्, न वा पुनर्द्रव्योत्पादनं प्रतिपत्तित्वेनाप्रयोजकत्वात् । अतो वाचनिकेनाज्येनैव समापनम् । इडाद्यर्थगृहीतस्य तु हविष्ठाभावाल्लोप एवेति सिद्धान्तः ॥ २ ॥

ऋत्विजामेव शेषभक्षाधिकरणम् ॥ ३ ॥

निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ३ ॥

यजमानपञ्चमा इडां भक्षयन्तीति प्राप्तानामेव ऋत्विजां पुनः श्रवणं भक्षान्तरपरिसंख्यार्थं तस्मात्तेष्वन्ये भक्षयितार इति शङ्कायां वचनस्याप्राप्तयजमानप्रापकत्वात्सर्वभक्षे ऋत्विज एवेति सिद्धान्तः ॥ ३ ॥

कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ ४ ॥

भिन्ने जुहोतीत्यत्र कृत्स्नकपालभेद एव निमित्तमेकदेशभेदस्य संघर्षणादिना नित्यत्वेन निमित्तत्वायोगादिति प्राप्ते,—संघर्षे भिन्नमित्यप्रतीतेरेकदेशभेदोऽपि निमित्तमेव । न च होमस्य भिन्नसंस्कारकत्वात् सर्वभेदने च कार्याक्षमत्वेनासंस्कार्यत्वादेकदेशभेद एव होम इति वाच्यम् । तथा सति होमस्य नित्यकत्वङ्गत्वं स्यात् संस्कार्यं च द्वारमनित्यमिति नित्यानित्यसंयोगविरोधः तस्मादेकदेशभेदे कृत्स्नभेदे च निमित्तवशाद्धोम इति सिद्धान्तः ॥ ४ ॥

क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ५ ॥

क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ ५ ॥

यस्य पुरोडाशः क्षामति तं यज्ञं निर्ऋतिर्गृह्णाति अथ तदेव हविर्निर्वपेदिति पुरोडाशदाहनिमित्तः पुनः प्रयोगः कृत्स्नैकदेशदाहयोरविशेषेणेति प्राप्ते,—एकदेशदाहस्यावर्जनीयत्वात्कृत्स्नदाह एव निमित्तमिति तत्रैव पुनः प्रयोग इति सिद्धान्तः ॥ ५ ॥

एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम् ॥ ६ ॥

यथाश्रुतीति चेत् ॥ ६ ॥

दोहौ प्रकृत्य यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति पञ्चशराव उभयार्तावेव उभयशब्दाम्नानादिति प्राप्ते,—हविष आर्तेर्वानिमित्वायोगाद्धविरार्त्तिर्निमित्तमित्यावश्यकं, तावतैव पर्यवसाने उभयमिति न विवक्षितं निमित्तविशेषणत्वादिति सिद्धान्तः ॥ ६ ॥

होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥ ७ ॥

## होमाभिषवभक्षणं च तद्वत् ॥ ७ ॥

ज्योतिष्टोमे अभिषुत्य हुत्वा भक्षयन्तीति होमाभिषवौ प्रत्येकमेव निमित्तं न सहितौ साहित्यविधाने वाक्यभेदादिति प्राप्ते,—होमाभिषवकर्तुर्भक्षाङ्गत्वेन विधानाद्धोमाभिषवयोरर्थान्निमित्तत्वं न शब्दात्। होमाभिषवसमानकर्तृकत्वं मिलितं भक्षणाङ्गमित्युभयकर्तैव भक्षयेदिति सिद्धान्तः ॥ ७ ॥

पुनराधानं प्रति वह्निद्वयानुगतस्य निमित्तताधिकरणम् ॥ ८ ॥

## पुनराधेयमोदनवत् ॥ ८ ॥

यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिरित्यत्र पञ्चशरावद्वदन्यतरानुगमे प्रायश्चित्तमिति प्राप्ते,—पुनराधेयस्योभयाग्न्युत्पादकत्वेनावगमान्नैमित्तिकानुरोधेनोभयाग्न्यनुगम एव निमित्तमिति सिद्धान्तः ॥ ८ ॥

पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ॥ ९ ॥

## पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ ९ ॥

पञ्चशराव आर्तौ दाहे प्रतिनिधित्वेन विधीयते नतु कर्मान्तरम्। नच परिमाणद्रव्यदेवतारूपवह्वर्थविधाने वाक्यभेदः। पञ्चशरावशब्दार्थस्यैकस्यैव विधानात् सान्नाय्यस्थानापत्त्या देवताप्राप्तेश्चैन्द्रमिति नित्यानुवाद इति प्राप्ते,—स्थानापत्त्यामहेन्द्रस्यापि प्राप्तेरिन्द्रो विधेयः पञ्चशरावश्चेति वाक्यभेदाद्विशिष्टकर्मविधिरेवेति सिद्धान्तः ॥ ९ ॥

पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताधिकरणम् ॥ १० ॥

## स प्रत्यामनेत्स्थानात् ॥ १० ॥

पञ्चशरावः प्रयोजनाकाङ्क्षायां दर्शेष्टिकार्ये तत्प्रत्याम्नायत्वेन विधीयत इति प्राप्ते,—सान्नाय्यान्तरेण दर्शेष्टितत्कार्ययोः संभवान्न तत्प्रत्याम्नायापेक्षा, अतो द्रव्यनाशकृतवैगुण्यसमाधानार्थ एव पञ्चशराव इति सिद्धान्तः ॥ १० ॥

सत्रायागूर्याप्रवृत्तस्य विश्वजिदावश्यकत्वाधिकरणम् ॥ ११ ॥

## विश्वजित्वप्रवृत्तेर्भावः कर्मणि स्यात् ॥ ११ ॥

यः सत्रायागुरते स विश्वजिता यजेतेति । आगूरणं संकल्पः अत्र सत्रं संकल्प्य तत्र प्रवृत्तोऽप्रवृत्तश्च विश्वजितं कुर्यात् प्रवृत्त एव वा कुर्यात् तथा सति सत्राङ्गत्वसंभवेन फलाकल्पनादिति प्राप्ते,—संकल्प्य कुतश्चिद्धेतोस्तत्राप्रवृत्तस्य सत्रफलाप्तये प्रारब्धाकरणदोषहानाय वा विश्वजिद्विधानमपेक्षितत्वाद्युक्तमिति सिद्धान्तः ॥ ११ ॥

बर्हिषेत्यादिश्रुतेः व्रतकालविधानार्थताधिकरणम् ॥ १२ ॥

वत्ससंयोगे व्रतचोदना स्यात् ॥ १२ ॥

वत्सैरमावास्यायां व्रतमुपैतीत्यत्र वत्सस्य भोजनसाधनत्वायोगाद्भोज्यत्त्वायोगाच्च वत्सापाकरणं व्रतकालोपलक्षणम् । पुरा वत्सानामपाकर्तोर्दम्पती अश्नीयातामिति विध्यन्तराच्चेति सिद्धान्तः ॥ १२ ॥

बर्हिषेत्याद्युक्तकालस्य सन्नयदसन्नयदुभयसाधारण्याधिकरणम् ॥ १३ ॥

कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ १३ ॥

अयं कालः सन्नयत एव असन्नयतो वत्सापाकरणाभावादिति प्राप्ते,—उपलक्षणापायेऽपि तदुपलक्षितकालस्यानपायादसन्नयतोऽपि स एव काल इति सिद्धान्तः ॥ १३ ॥

सहशाखयेत्यस्य कालविधानार्थताधिकरणम् ॥ ४ ॥

प्रस्तरे शाखाश्रयणवत् ॥ १४ ॥

सह शाखया प्रस्तरं प्रहरतीत्यत्र शाखायाः प्रहरणाङ्गत्त्वादसन्नयतापि शाखा आहर्तव्येति प्राप्ते,—प्रहरणेन प्रस्तरप्रतिपादने शाखासाहित्यश्रुतेः शाखापि प्रतिपाद्यैव अतः सन्नयत एव शाखाप्रहरणमितिसिद्धान्तः ॥ १४ ॥

इति श्रीन्यायबिन्दौ षष्ठाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

## षष्ठाध्यायस्य पञ्चमः पादः ।

---

दर्शेऽभ्युदयेष्टौ नैमित्तिकदेवतापनयाधिकरणम् ॥ १ ॥

अभ्युदये कालापराधादिज्याचोदना स्याद्यथापञ्चशरावे ॥ १ ॥

चतुर्दश्याममाभ्रान्त्या दर्शारंभे श्रुतं—यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । इदं च कर्मान्तरं

पूर्वकर्माणि अग्न्यादिदेवता तद्गुणदातृत्वादि दधिशृतयोश्चाधिकरणत्वं स्थविष्ठादीनां च चरुत्वमिति बह्वर्थविधाने वाक्यभेदात् अतः कर्मान्तरमेव प्रायश्चित्तत्वेन विधीयते इति प्राप्ते,—विभजेदित्यनेन मध्यमादिविभागो न विधीयते ये मध्यमा इत्यादिवाक्यैरर्थसिद्धत्वात्, किञ्च तण्डुलशब्देन प्रकृतहविस्त्रयमुपलक्ष्य तस्य पूर्वदेवताभ्योऽपनयो विधीयते, न तु कर्मान्तरं गौरवात् । मध्यमादिवाक्यैर्देवातान्तरविधिः दातृत्वादिगुणानां सामानाधिकरण्येनैकदेवताकारकान्वयात्तस्य च विशिष्टस्यैकेन विधौ न वाक्यभेदः एतत्प्रकरणे सह श्रपयतीति वचनाद्दधिस्थविष्ठयोः शृताणिष्ठयोश्च देवतैक्येन सह पाकादर्थप्राप्तं चरुत्वं दधिशृतयोश्चाधिकरणत्वमनूद्यते, अतो न कर्मान्तरत्वमिति सिद्धान्तः ॥ १ ॥

उपांशुयागेऽपि देवतापनयाधिकरणम् ॥ २ ॥

उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ २ ॥

अत्राज्यस्य देवतान्तरासंयोगान्न पूर्वदेवतापनय इति प्राप्ते,—तण्डुलपदेन प्रकृतहविर्मात्रस्य पूर्वदेवतापनयादाज्यस्यापि सः । देवतान्तरावचनाच्चोपांशुयाजलोप इति सिद्धान्तः । यद्यप्युपांशु पौर्णमास्यामित्युपांशुयागे पूर्णमासीविधानान्न दर्शे सोऽस्ति तथापि कृत्वाचिन्तेयम् । उपवर्षवृत्तिकारस्तु बह्वृचब्राह्मणेऽमावास्यायामप्युपांशुयाजविधिरस्तीत्याह ॥२॥

अनिरुप्तेऽप्यभ्युदयेष्ट्यधिकरणम् ॥ ३ ॥

निरुप्ते स्यात्तत्संयोगात् ॥ ३ ॥

हविषि निरुप्त एव चन्द्राभ्युदयेष्टिरिति प्राप्ते,—अप्रवृत्तस्य हविषोऽभ्युदयोपलक्षणत्वायोगात्प्रवृत्तं हविरर्थान्निमित्तं न तु निर्वापस्वरूपं विवक्षितं वाक्यभेदापत्तेरिति सिद्धान्तः ॥ ३ ॥

अनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम् ॥ ४ ॥

अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ ४ ॥

अस्तु निर्वापात्प्रागभ्युदयेऽपीष्टिः, निर्वापस्तु पूर्वदेवताभ्य एव तण्डुलावस्थायामेवापनयविधेरिति प्राप्ते,—तण्डुलग्रहणस्य हविरुपलक्षणत्वान्निर्वापात्प्रागभ्युदये वैकृतीभ्य एव निर्वाप इति सिद्धान्तः ॥ ४ ॥

किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम् ॥ ५ ॥

विनिरुप्ते न चतुर्मुष्टीनामपनयस्तद्गुणत्वात् ॥ ५ ॥

पूर्वदेवताभ्य एकद्विमुष्टिनिर्वापोत्तरं चन्द्रोदये शेषमपि प्राकृतीभ्य एव निर्वपणीयम् । अथवा निमित्तवशाद्वैकृतीभ्य इति प्राप्ते,—नैमित्तिकस्य संयोगस्य पदार्थसंबन्धित्वात्तस्य चात्रासंभवादपनीतो निर्वापोऽवशिष्टस्य तूर्ष्णीं कर्तव्य इति सिद्धान्तः ॥ ५ ॥

सन्नयदसन्नयदुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणम् ॥ ६ ॥

## सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ ६ ॥

अभ्युदयेष्टिः सन्नयत एव श्रुते चरुमित्यादिश्रवणादसन्नयतस्तदयोगादिति प्राप्ते,—तण्डुलशृतादेरुद्देश्यत्वेन साहित्यस्याविवक्षितत्वादसन्नयतापि तण्डुलानां देवतान्तरसंयोगः कार्य इति सिद्धान्तः ॥ ६ ॥

सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणम् ॥ ७ ॥

## साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् ॥ ७ ॥

यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममथ विभज्य विश्वजिता यजेतेति सत्रमध्यात्कस्यचिदुत्थाने विश्वजित् क्रीतसोमकस्यैव अन्यस्य तद्विभागासंभवादिति प्राप्ते,—सोमविभागस्यार्थप्राप्तत्वेनाविधानादनुवादमात्रं सोमग्रहणमुपलक्षणम् अतोऽक्रीतसोमस्यापि भवतीति सिद्धान्तः ॥७॥

दीक्षापरिमाणस्य द्वादशाहत्वनियमाधिकरणम् ॥ ८ ॥

## दीक्षापरिमाणे यथाकाम्यमविशेषात् ॥ ८ ॥

ज्योतिष्टोमे श्रुतानां एका दीक्षा तिस्रो दीक्षेत्यादिपरिमाणानामविशेषाद्विकल्प इति प्राप्ते,—द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेत्यस्य पक्षान्तरेष्वसंभवात् द्वादशपरिमाणमेव अन्येषां तु विकृतावुत्कर्ष इति भाष्यकाराः । वार्तिककारस्तु द्वादशपक्षे भृतिवननं द्वादशग्रहणमुपलक्षणं वा । अतो विकल्प एव नोत्कर्ष इत्याह ॥ ८ ॥

द्वादशाहस्य द्वादशदीक्षाधिकरणम् ॥ ९ ॥

## द्वादशाहस्तु लिङ्गात्स्यात् ॥ ९ ॥

द्वादशाहेऽपि प्रकृतिवद्विकल्पे प्राप्ते,—षट्त्रिंशदहो वा एष यद्द्वादशाह इति लिङ्गात् द्वादशपरिमाणमेव उपसत्सुत्यादीक्षाणां प्रत्येकं द्वादशत्वाद्धि षट्त्रिंशदहःसाध्यतेति सिद्धान्तः ॥ ९ ॥

गवामयने माघपौर्णमास्याः पुरस्तात् दीक्षाधिकरणम् ॥ १० ॥

## पौर्णमास्यामनियमोऽविशेषात् ॥ १० ॥

गवामयने चित्रापौर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रा

पौर्णमास इत्यनन्तरं चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् तेषामेकाष्टकायां क्रयः संपद्यत इत्यत्र चतुरहवाक्ये पूर्णमासी या काचित् चैत्रीस्तुतिस्तु चित्रापौर्णमासे दीक्षेरन्नित्यस्य शेषो न त्वस्य, न चैकाष्टकाश्रुतिवशान्माघीविषयत्वम्, सर्वकृष्णाष्टमीनां तद्वाच्यत्वात् द्वादशैकाष्टका इति वचनात्। यद्वा चैत्रीस्तुतिसन्निधानाच्चैत्र्येव स्यादिति प्राप्ते,—उपक्रमे एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नीति माघाष्टकायामेव एकाष्टकापदप्रयोगात्तन्मन्त्र एव संवत्सरस्य या पत्नीति मन्त्राम्नानात् तत्र च दीक्षायामार्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्त इति दोषमुक्त्वा दीक्षातो रहितामेकाष्टकां क्रमेणानुगृह्णाति तेषामेकाष्टकायां क्रयः संपद्यते नैकाष्टकां छंवट्कुर्वन्ति न व्यर्थमित्यर्थः । अतो माघ्याः पुरस्ताच्चतुरहे गवामयनदीक्षेति सिद्धान्तः ॥ १० ॥

दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधिकरणम् ॥ ११ ॥

## दीक्षाकालस्य शिष्टत्वादतिक्रमे नियमानामनुत्कर्षः प्राप्तकालत्वात् ॥ ११ ॥

दीक्षितनिषिद्धाः अग्निहोत्रादयोऽवभृथोत्तरं दीक्षामुक्तौ कार्याः कदाचिदवभृथोत्कर्षे तु शास्त्रतो दीक्षानुवृत्तेरभावादग्निहोत्रादयः कार्या इति शङ्कायां,—काललक्षणायां मानाभावात्कारणान्तरेणापि दीक्षानुवृत्तौ निषेधवशेन न कार्यमग्निहोत्रादीति सिद्धान्तः ॥ ११ ॥

ज्योतिष्टोमोत्कर्षे प्रतिहोमानामननुष्ठानाधिकरणम् ॥ १२ ॥

## तत्र प्रतिहोमो न विद्यते यथापूर्वेषाम् ॥ १२ ॥

अवभृथोत्कर्षे दीक्षानुवृत्तेः पुरुषापराधकृतत्वात्तत्कृताग्निहोत्रलोपे प्रतिहोम एव स्वकालातिक्रान्तः कालान्तरे प्रतिहोमः कार्य इति प्राप्ते, कथञ्चिदपि दीक्षावत अग्निहोत्रस्याकर्तव्यत्वात् कर्तव्याकरणनिमित्तः प्रतिहोमो नेति सिद्धान्तः ॥ १२ ॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमानामननुष्ठानाधिकरणम् ॥ १३ ॥

## प्रतिहोमश्चोर्ध्वमवभृथादिष्टेः ॥ १३ ॥

अवभृथे जाते दैवादुदवसानीयोत्कर्षे दीक्षानिवृत्तावपि एतया पुनराधेयसंमितयेष्ट्येष्ट्वा अग्निहोत्रं जुहोतीति वचनात्ततः पूर्वमनधिकारात् तत्रापि न प्रतिहोम इति सिद्धान्तः ॥ १३ ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १४ ॥

## प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ १४ ॥

षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १५ ॥

प्रातस्तु षोडशिनि ॥ १५ ॥

कृत्वाचिन्तया प्रतिहोमपक्षे क्रमः कथ्यते । येन क्रमेण लुप्ता होमास्तेनैव प्रतिहोमास्तेनाग्निष्टोमादिषु सायंहोमप्रभृति, षोडशिनि प्रातःप्रभृतीति ॥ १४–१५ ॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गत्वाधिकरणम् ॥ १६ ॥

प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ १६ ॥

भिन्ने जुहोतीति क्रतुमध्ये भेदन एव, अन्यथा फलकल्पनागौरवादिति क्रत्वङ्गत्वमेव ॥ १६ ॥

व्यापन्नशब्दार्थनिर्णयाधिकरणम् ॥ १७ ॥

व्यापन्नस्याप्सुगतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ १७ ॥

व्यापन्नमप्सु प्रहरतीत्यत्र व्यापन्नशब्देन केशकीटादिदुष्टमुच्यते ॥ १७ ॥

अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणम् ॥ १८ ॥

विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ १८ ॥

ज्योतिष्टोमे परस्परं संबध्य स्तोत्राय गच्छत्सु ऋत्विक्षु यदि प्रतिहर्तापच्छिद्यात्सर्ववेदसं दद्यात् यद्युद्गाताऽदक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादिति श्रुतं ( तदुद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे तस्यैकेन व्यपदेष्टुमशक्यत्वात् ) न कर्तव्यमिति प्राप्ते,—यौगपद्येऽपि तन्निमित्तसत्त्वात्कर्तव्यमिति सिद्धान्तः ॥ १८ ॥

युगपदपच्छेदेऽदक्षिणत्वसर्वस्वदक्षिणत्वयोर्विकल्पाधिकरणम् ॥ १९ ॥

तत्र प्रतिषेधाद्विकल्पः स्यात् ॥ १९ ॥

यौगपद्ये पूर्वप्रयोगेऽदाक्षिण्यमुत्तरस्मिन्सर्ववेदसमिति समुच्चयप्राप्तौ एकस्मिन्प्रयोगे द्वयासंभवादन्यत्र कृतस्यान्यत्रानङ्गत्वाद्विकल्प एवेति सिद्धान्तः ॥ १९ ॥

क्रमेणापच्छेदे उत्तरावच्छेदनिमित्तकप्रायश्चित्तानुष्ठानाधिकरणम् ॥ २० ॥

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ २० ॥

क्रमेणापच्छेदे पूर्वनिमित्तमसंजातविरोधित्वात्प्रबलमिति प्राप्ते,—पूर्वेणोत्तरज्ञानस्य प्रत्यक्षवाक्यजन्यस्य विरोधासंभवादुत्तरज्ञानस्य च पूर्वबाधं विनाऽसंभवादुत्तरमेव प्रबलं पूर्वं तूत्तरबाधं विनाऽपि भवतीति दुर्बलमिति सिद्धान्तः ॥ २० ॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम् ॥ २१ ॥

यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥२१॥

उद्गातुः पश्चादपच्छेदे पूर्वस्मिन्प्रयोगे दास्यमानं द्वादशशतं तदेव पुनः प्रयोगे देयम्। यद्वा पूर्वस्मिन्प्रयोगे यथा द्वादशशतं दास्यन्नासीत्तथा प्रतिहर्तुरपच्छेदे सर्ववेदसमपि अतो द्वयमपि पुनः प्रयोगे देयमिति विकल्प इति प्राप्ते,—द्वादशशतस्य सर्वस्वेन बाधितत्वान्न तत्पूर्वस्मिन्दास्यन्भवति किन्तु सर्वस्वमेव तस्मात्तदेव पुनः प्रयोगे देयम्। न च तस्याप्यदाक्षिण्येन बाधः किन्तूत्तरप्रयोगे तत उत्कृष्य निक्षेप इति सिद्धान्तः ॥ २१ ॥

अहर्गणेऽपच्छेदेन सर्वेषामावर्तनाधिकरणम् ॥ २२ ॥

अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥ २२ ॥

द्वादशाहादौ कस्मिंश्चिदहनि उद्गात्रपच्छेदे कृत्स्नस्याहर्गणस्यावृत्तिः तस्यैव फलसाधनतया धर्मान्वयादिति प्राप्ते, गणस्याशाब्दत्वेन यागानामेव फलसाधनत्वात् यस्यैवाह्नो निमित्तयोगस्तस्यैवावृत्तिरिति सिद्धान्तः॥२२॥

इति श्रीन्यायबिन्दौ षष्ठाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## षष्ठाध्यायस्य षष्ठः पादः ।

सत्रे समानकल्पानां सहाधिकाराधिकरणम् ॥ १ ॥

सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

दर्शपूर्णमासयो राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामिति श्रुतम्। तद्दीक्षणीयादिद्वारा सत्रेषु प्राप्नोति तत्र वसिष्ठावसिष्ठैः कृतो नाराशंसो वसिष्ठकर्तृकः संपन्न इति, एवं तनूनपादप्यन्यैरिति कश्चित्कल्पमाश्रित्य भिन्नकल्पा अपि सत्रं कुर्युरिति प्राप्ते,—वासिष्ठाद्यर्थत्वेन नाराशंसादिविधिः क्रतूपकारद्वारेण तादर्थ्यमिति न फलान्तरकल्पना धात्वर्थस्य विधेयत्वं च युक्तं सन्निकृष्टत्वात्। एवं चैककल्पाश्रयणेऽन्येषां क्रतुवैगुण्यात्समानकल्पानामेव सत्रमिति सिद्धान्तः ॥ १ ॥

भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञे सहाधिकाराधिकरणम् ॥ २ ॥

वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् ॥ २ ॥

एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामित्यहीनविशेषे श्रुतम्।

तत्र तत्पुरुषे लक्षणादोषात् एकस्य च राज्ञः पुरोहितद्वयाभावात्कर्मधारयस्य चासंभवाद्द्वन्द्व एवायम् । अतो राज्ञः पुरोहितस्य च भिन्नकल्पयोर्वचनादधिकार इति सिद्धान्तः ॥ २ ॥

सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ॥ ३ ॥

## सत्राणि सर्ववर्णानामविशेषात् ॥ ३ ॥

सत्रे त्रयाणामप्यधिकारः ये यजमानास्त ऋत्विज इति यजमाने संस्कारत्वेनार्त्विज्यविधिः गुणभूतकर्तृपरिच्छेदकतया ब्राह्मण्यमार्त्विज्याङ्गम्, अत्र तु कर्तृप्राधान्यात् द्वारलोपाद्बाध्यत इति प्राप्ते,—संस्कारत्वेनार्त्विज्यविधौ अप्राकृतकार्यत्वापत्तेस्तदुद्देशेनैव यजमानविधिः तेनान्यकर्तृकत्वबाधः ब्राह्मणकर्तृकस्य तु न बाधकमस्ति । अतो ब्राह्मणानामेव सत्रमिति सिद्धान्तः ॥ ३ ॥

सत्रे विश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् ॥ ४ ॥

## वासिष्ठानां वा ब्रह्मत्वस्य नियमात् ॥ ४ ॥

तत्रापि वासिष्ठो ब्रह्मेति प्रकृतौ वचनाद्ब्रह्मत्वस्यावैगुण्याय वासिष्ठे सति तत्कल्पानामधिकार इति प्राप्ते,—य एव स्तोमभागानधीयीत स एव वासिष्ठ इति वचनान्नावश्यं वासिष्ठः किंतु वैश्वामित्रो होतेति वचनाद्वैश्वामित्रतुल्यकल्पानामधिकार इति सिद्धान्तः ॥ ४ ॥

सत्रे आहिताग्नेरेवाधिकाराधिकरणम् ॥ ५ ॥

## विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ ५ ॥

अनाहिताग्नेरपि कस्यचिदग्निभिः कार्यसिद्धेस्तेन सह सत्रेऽधिक्रियत इति प्राप्ते,—सोमविकाराणामिष्टिपूर्वकत्वादनाहिताग्नेश्चेष्ट्यभावान्नाधिकारः आदधीतेत्यात्मनेपदादाधातुरेवाग्नयः कर्मसाधनमतोऽपि नानग्नीनामधिकार इति सिद्धान्तः ॥ ५ ॥

जुह्वादीनां साधारणताधिकरणम् ॥ ६ ॥

## जुह्वादीनामप्रयुक्तत्वाद्यथाकामी प्रतीयेत ॥ ६ ॥

यस्य कस्यचिज्जुह्वादिपात्रैः सत्रं कार्यमविरोधादिति प्राप्ते,—आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणहस्ते जुहूमासादयतीत्यादिवचनैः पात्राणां दाहे गुणत्वस्य सादनप्रतिपाद्यत्वस्य च विधानात्पात्रस्वामिनः प्रयोगमध्ये मरणे तल्लोपापत्तेरन्यथा च प्रयोगवैगुण्यात् सर्वसाधारणानि पात्राणि कार्याणीति सिद्धान्तः ॥ ६ ॥

विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणम् ॥ ७ ॥

**पुरुषकल्पेन विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वा-त्तदभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात् ॥ ७ ॥**

सप्तदश वैश्यस्येति दर्शप्रकरणगतवाक्येन सामिधेनीसाप्तदश्याङ्गत्वेन वैश्यः कर्ता विधीयते तेन यत्राध्वरकल्पादौ साप्तदश्यं तत्र वैश्यस्यैवाधिकार इति प्राप्ते,–प्रकरण एव वैश्यानुवादेन साप्तदश्यविध्युपपत्तौ उत्कर्षायोगा-त्प्रकृतौ वैश्यनिमित्तकं साप्तदश्यमध्वरकल्पादौ तु स्वाभाविकमिति त्रया-णामप्यधिकार इति सिद्धान्तः ॥ ७ ॥

इति श्रीन्यायविन्दौ षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

## षष्ठाध्यायस्य सप्तमः पादः ।

विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

**स्वदाने सर्वमविशेषात् ॥ १ ॥**

सर्वस्वं ददातीति विश्वजिति श्रुतम् । तत्र स्वशब्दवाच्यस्य पित्रादेरपि दानमिति प्राप्ते,–पितृत्वादिरूपस्वत्वस्य त्यागाशक्तेर्दानयोग्यधनवाच्येवात्र स्वशब्दस्तेन धनस्यैव दानमिति सिद्धान्तः ॥ १ ॥

विश्वजिति महाभूमेरदेयत्वाधिकरणम् ॥ २ ॥

**न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ २ ॥**

सार्वभौमस्य न महापृथ्वीस्वामित्वं किन्तु देशपालनं करादानं शासनं चेति राज्यतया संबन्धः अतोऽसौ महापृथिवीं माण्डलिकश्च मण्डलं न दद्यात् ॥ २ ॥

विश्वजिति अश्वादीनामदेयताधिकरणम् ॥ ३ ॥

**अकार्यत्वाच्च ततः पुनर्विशेषात् ॥ ३ ॥**

विश्वजित्येव न केसरिणो ददातीति विहितप्रतिषिद्धत्वात्पक्षेऽश्वदान-मिति प्राप्ते, केसरिभिन्नं सर्वस्वमिति पर्युदासान्नेति सिद्धान्तः ॥ ३ ॥

विश्वजिति विद्यमानानामेव सर्वस्वानां दानाधिकरणम् ॥ ४ ॥

**नित्यत्वाच्चानित्यैर्नास्ति संबन्धः ॥ ४ ॥**

विद्यमानं सर्वं देयं न तदर्थमविद्यमानार्जनमिति सिद्धान्तः ॥ ४ ॥

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणम् ॥ ५ ॥

## शूद्रश्च धर्मशास्त्रत्वात् ॥ ५ ॥

धर्मतः सेवां कुर्वाणः शूद्रोऽस्वत्वान्न देयः किन्तु दास एवेति सिद्धान्तः ॥ ५ ॥

विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयताधिकरणम् ॥ ६ ॥

## दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ६ ॥

दक्षिणाकालात्पूर्वं विद्यमानं चोपयोज्यं भावित्वेन निश्चितं च देयमिति प्राप्ते,—दक्षिणाकालीनमेव सर्वशब्दार्थ इति न देयमिति सिद्धान्तः ॥ ६ ॥

विश्वजिति दक्षिणादानोत्तराङ्गानामप्यनुष्ठानाधिकरणम् ॥ ७ ॥

## अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ७ ॥

प्रत्यक्षवचनेन सर्वदानविधानादतिदेशप्राप्तकर्मशेषलोप इति प्राप्ते,—प्रधानबाधायोगाद्दक्षिणार्थस्यैव सर्वस्य दानं प्रकृतौ हि इदं मे भक्षार्थम् इदं क्रत्वर्थमिदं दक्षिणार्थमिति त्रेधा वाचनिकधनविभागादतो दक्षिणार्थस्यैव दानमिति सिद्धान्तः ॥ ७ ॥

अहर्गणेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

## अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात् ॥ ८ ॥

अष्टरात्रगते विश्वजिन्नामके प्रथमेऽहनि द्वादशशतं दक्षिणा गणेषु द्वादशाहस्यातिदेशादिति प्राप्ते,—नामातिदेशप्राबल्यात्सर्वस्वमेव दक्षिणेति प्राप्तं, तथापि भूयसां सप्तानामह्नामनुग्रहाय द्वादशशतमेव देयम्। एकैव च तन्त्रेण सर्वेषां दक्षिणेति सिद्धान्तः ॥ ८ ॥

विश्वजिति द्वादशशतन्यूनधनस्यानधिकारिताधिकरणम् ॥ ९ ॥

## विकारः सन्नुभयतोऽविशेषात् ॥ ९ ॥

सर्वस्वं द्वादशशतादूनमपि देयमिति प्राप्ते,—प्रकृतौ पक्षे विहितसर्वस्वस्येह नियममात्रविधानात्तत्र च यद्येतावता न तृप्येयुरपि सर्वस्वेनेति द्वादशशतादधिकस्यैवोक्तेस्तद्दानमेवेति सिद्धान्तः ॥ ९ ॥

आधाने अपरिमितशब्देन संख्यान्तरविधानाधिकरणम् ॥ १० ॥

## अपरिमाणे शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ १० ॥

आधाने एकादिसहस्रान्तं देयमुक्त्वा अपरिमितं देयमिति रुद्ध्वा च हुदानमुच्यते तदनन्तरोक्तसहस्रापेक्षयाबह्वर्थमिति सिद्धान्तः ॥ १० ॥

इति ह स्माहेत्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम् ॥ ११ ॥

**परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ ११ ॥**

दर्शे इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचतेत्यस्य विधित्वे वार्ष्णिकर्तृकत्वसंस्तवात्तद्गोत्राणामेवेति प्राप्ते,—वार्ष्णिकर्तृकत्वस्य स्तुत्युपायत्वात्स्तुत्यस्य माषपाकमात्रस्य विधानात्सर्वेषामधिकार इति सिद्धान्तः । वस्तुतस्त्वयं न विधिः किंतु तद्‌ु तथा न कुर्यादारण्यमेवाश्नीयादिति विधेरर्थवादः ॥ ११ ॥

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वाधिकरणम् ॥ १२ ॥

**सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ १२ ॥**

पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसंवत्सरमिति । अत्र सहस्रायुषां गन्धर्वादीनामधिकारस्याग्न्याद्यभावेनासंभवान्मनुष्याणां सहस्रायुष्ट्वस्य रसायनेनाप्यसंभवात्कुलकल्पे कस्यापि समग्रानुष्ठानाभावेन फलायोगादेतत्सत्रारम्भादेवैतावदायुःकल्पने मानाभावात्पञ्चपञ्चाशत इति यजमानसंख्या तेन चतुःसंवत्सरमिदं सत्रं सार्धशतद्वयैः क्रियमाणं सहस्रसंवत्सरमिति । इदमपि चतुर्विंशतिपरमाः सत्रमासीरन्निति वचनविरुद्धम् । अतः संवत्सरशब्द एवाहःपरो मासपरत्वेऽपि आधानादूर्ध्वं तावज्जीवनासंभवादिति सिद्धान्तः ॥ १२ ॥

इति श्रीन्यायबिन्दौ षष्ठाध्यायस्य सप्तमः पादः ॥ ७ ॥

---

## षष्ठाध्यायस्य अष्टमः पादः ।

---

अनाहिताग्नेरेव चतुर्होतृहोमाधिकाराधिकरणम् ॥ १ ॥

**इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥**

चतुर्होतारं प्रयुञ्जीत चतुर्होत्रामजाकामो जुहुयादिति चतुर्होतृसंज्ञकमन्त्रैर्जपहोमाः श्रुताः । तत्र होमा आहिताग्नेरेव, एषा ह वा अनाहिताग्नेरिष्टिरिति तु जपविषयं जप एव स्तुत्यर्थमिष्टिशब्द इति प्राप्ते, वचनसाफल्यायानाहिताग्नेरत्राधिकारो वचनार्थ इति सिद्धान्तः ॥ १ ॥

अनाहितेष्वग्निषूपनयनहोमाधिकरणम् ॥ २ ॥

उपनयन्नादधीत होमसंयोगात् ॥ २ ॥

उपनयनाङ्गहोमा माणवकाग्नौ कार्या इति प्रागुपनयनादादधीत तदर्थं भार्यां चोद्वहेत् । स्नानोत्तरं दारक्रिया तु अपत्यार्थेति प्राप्ते,–अविदुष आधानासंभवाद्विद्यायाश्चोपनयनाधीनत्वाल्लौकिक एवाग्नौ उपनयनहोम इति सिद्धान्तः ॥ २ ॥

अनाहितेऽग्नौ स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ ३ ॥

निषादस्थपतीष्टिराहवनीय एव, तस्याधानविध्यभावेऽपीष्टिरेव तत्प्रयोजिकेतिप्राप्ते,–यथाशास्त्रमाधानेनाहवनीयोत्पत्तिः, शास्त्रं च ब्राह्मणादिकर्तृकमेवाधानं तदुत्पादकमिति ब्रवीति, नान्यकर्तृकमपीत्याहवनीयासंभवाल्लौकिकाग्नावेव स्थपतीष्टिरिति सिद्धान्तः ॥ ३ ॥

अनाहितेऽग्नाववकीर्णिपशोरनुष्ठानाधिकरणम् ॥ ४ ॥

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ ४ ॥

यो ब्रह्मचार्यवकिरेत्स नैर्ऋतं गर्दभं पशुमालभेतेति यागोऽपि लौकिक एवाग्नौ एतद्यागेन ब्रह्मचर्यभ्रंशसमाधानं विना विवाहासंभवात् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदिति वचनादिति सिद्धान्तः ॥ ४ ॥

दैवकर्मणामुदगयनकालताधिकरणम् ॥ ५ ॥

उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥५॥

चौलोपनयनादीनि दैवानि स्मृतिवशादुदगयनादिष्वेव ॥ ५ ॥

पित्र्यकर्मणामपरपक्षकालताधिकरणम् ॥ ६ ॥

इतरेषु तु पित्र्याणि ॥ ६ ॥

पित्र्याणि तु श्राद्धादीन्यपरपक्षादिष्विति स्पष्टम् ॥ ६ ॥

ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणम् ॥ ७ ॥

याच्ञाक्रयणमविद्यमानेऽलोकवत् ॥ ७ ॥

ज्योतिष्टोमे द्वादशरात्रैर्दीक्षितो भृतिं वन्वीतेति द्रव्ययाचनम् अरुणया क्रीणातीति सोमक्रयश्चाविद्यमानद्रव्यसोमकस्यैव तद्वतस्तदानर्थक्यादिति प्राप्ते,–अपूर्वस्य तदभावेऽनुत्पत्तेर्नित्यं याच्ञाक्रयणविधिरिति सिद्धान्तः ॥ ७ ॥

ज्योतिष्टोमादौ पयोव्रतादीनां नित्यताधिकरणम् ॥ ८ ॥

तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ ८ ॥

पयो व्रतमिति भक्षः, अग्नीदग्नीन्विहरेति प्रैषः, अहतं वासः परिधत्त इत्याच्छादनः, यत्पशुर्मायुमकृतेति संज्ञप्तहोमः, योऽस्मान्द्वेष्टीति मन्त्रश्च, भक्षान्तराभावादिनिमित्त एवानुष्ठेय इति प्राप्ते,—पूर्ववदपूर्वार्थत्वान्निमित्ताश्रवणाच्च नित्यानीति सिद्धान्तः ॥ ८ ॥

अपररात्रे व्रतस्यानियमाधिकरणम् ॥ ९ ॥

अनर्थकं त्वनित्यं स्यात् ॥ ९ ॥

पयोभक्षणेऽनिष्टशङ्कायां तु शेषिविरोधान्न कार्यमिति सिद्धान्तः ॥९॥

छागस्यैवाग्नीषोमीयपशुत्वाधिकरणम् ॥ १० ॥

पशुचोदनायामनियमोऽविशेषात् ॥ १० ॥

अग्नीषोमीयं पशुमित्यविशेषश्रुतेर्यः कश्चिदेव पशुः छागस्य वपाया मेदस इति मन्त्रस्तु छागसत्त्वे अनुवादत्वादिति प्राप्ते,—छागानियमेऽपि पशुविधेरविरोधात्तन्नियम एवेति सिद्धान्तः ॥ १० ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायविन्दौ षष्ठाध्यायस्य अष्टमः पादोऽध्यायश्च समाप्तः ॥ ६ ॥

---

## सप्तमाध्यायस्य प्रथमः पादः।

---

प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥

दर्शपूर्णमासादिप्रकरणाम्नाताः प्रयाजादयः सर्वयागार्थाः प्रकरणानुमितवाक्येनावगतस्योद्देश्ययागस्य दर्शादिभिर्विशेषणे वाक्यभेदादिति प्राप्ते,—कथंभावयेदितीतिकर्तव्यताकाङ्क्षारूपप्रकरणादङ्गवाक्यैकवाक्यतापन्नप्रधानविधिना तद्विशिष्टापूर्वभावनाविधानोत्तरमङ्गप्रधानयोः पार्ष्ठिकान्वयान्नाङ्गानामुपदेशतः कर्मान्तरसंबन्धः किंत्वतिदेशादेवेति सिद्धान्तः। अतिदेशश्च कचिदुपदिष्टानामङ्गानां कर्मान्तरे सादृश्यात्तद्वत्कर्तव्यमिति विधिः। स च कचित्प्रत्यक्षवचनात् तथा नामधेयात् आनुमानिकवचनाद्वेति त्रिविधः॥ १ ॥

समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ॥ २ ॥

समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ २ ॥

इषुसंज्ञक एकाहे समानमितरच्छ्येनेनेति श्रुतम् । तत्र ज्योतिष्टोमधर्माणामतिदेशाच्छ्येन इवेहापि प्राप्तेरनुवादोऽयमिति प्राप्ते,—इतरशब्दस्य सन्निहितसदृशपरत्वाज्ज्यौतिष्टोमिकानां सन्निहितत्वेऽपि पूर्वोक्ताप्राकृतासादृश्यात्तत्सदृशस्य च लोहितोष्णीषादेः श्येनवैशेषिकस्यासन्निहितत्वेऽपि वचनार्थवत्त्वाय सादृश्यमात्रपरिग्रहेण श्येनवैशेषिकविधिः । यद्वा इतरशब्देनातिदेशप्राप्तमुद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते । सोऽयं प्रत्यक्षवचनातिदेश इति सिद्धान्तः ॥ २ ॥

एतद्ब्राह्मणानीत्यादिना पञ्चसु हविःषु सार्थवादविध्यतिदेशाधिकरणम् ॥ ३ ॥

## पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ ३ ॥

चातुर्मास्येषु एतद्ब्राह्मणान्येव पञ्च हवींषीति वैश्वदेविकपर्वगतानामाद्यानां पञ्चानां हविषां यद्ब्राह्मणं तद्वारुणप्रघासिकेषु पञ्चस्वतिदिष्टम् । तत्र ब्राह्मणशब्देन विधायकं वाक्यमुच्यते । तत्र प्रधानवाक्यस्यातिदेशानुपयोगादङ्गविधीनां च प्रधानविधायकत्वाभावात्प्रधानविध्यर्थवाद एवातिदिश्यत इति प्राप्ते,—अङ्गविधीनामपि प्रधानसंबन्ध्यङ्गविधायकत्वेन ग्रहणसंभवात्तेषामप्यतिदेश इति सिद्धान्तः ॥ ३ ॥

एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् ॥ ४ ॥

## एककपालैन्द्राग्नौ च तद्वत् ॥ ४ ॥

वैश्वदेवे द्यावापृथिव्य एककपालो वरुणप्रघासेषु काय एककपालः ऐन्द्राग्नो द्वादशकपालश्च । तेषामङ्गातिदेशस्तत्सदृशेषु एककपालादिषु पूर्ववत् ॥ ४ ॥

साकमेधे वारुणप्रघासिकैककपालातिदेशाधिकरणम् ॥ ५ ॥

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ ५ ॥

साकमेधेषु वैश्वकर्मण एककपालः ऐन्द्राग्न एकादशकपालः । तत्र एतद्ब्राह्मण एककपाल इत्यतिदेशो वैश्वदेविकयोरेव, तत्राङ्गबाहुल्यादिति प्राप्ते,—अव्यवधानाद्वचनार्थवत्त्वाच्च वारुणप्रघासिकयोरेवेति सिद्धान्तः ॥ ५ ॥

इति श्रीन्यायबिन्दौ सप्तमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## सप्तमाध्यायस्य द्वितीयः पादः ।

रथन्तरादिशब्दस्य गानविशेषार्थताधिकरणम् ॥ १ ॥

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥**

रथन्तरादिशब्दो गीतविशिष्टायामृचि प्रयोगात्तद्वाचीति प्राप्ते,–लाघवाद्विशेषणगीतिमात्रवाची । अतस्तस्या एव च कवतीषु रथन्तरं गायतीत्यतिदेश इति सिद्धान्तः ॥ १ ॥

इति श्रीन्यायबिंदौ सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

## सप्तमाध्यायस्य तृतीयः पादः ।

अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम् ॥ १ ॥

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥**

मासमग्निहोत्रं जुहोतीत्यग्निहोत्रशब्दस्य नित्यमासाग्निहोत्रसाधारण्यात् गौणत्वाभावेन नातिदेशकत्वमिति प्राप्ते,–नित्याग्निहोत्र एवाग्निदैवत्यत्वेन शक्तत्वादन्यत्र तदनवगमाद्गौण्येव । सा च सादृश्यनिमित्तेत्यतिदेशः कल्प्यत इति सिद्धान्तः ॥ १ ॥

प्रायणीयेतिनाम्ना धर्मानतिदेशाधिकरणम् ॥ २ ॥

**अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ २ ॥**

द्वादशाहिकप्रथमाहर्वाचकः प्रायणीयशब्दो गवामयनप्रथमेऽहनि गौण इत्यतिदेशे प्राप्ते,–प्राथम्येन निमित्तेन प्रायणीयपदस्य तत्रापि शक्तत्वेन गौण्यभावान्नातिदेश इति सिद्धान्तः ॥ २ ॥

सर्वपृष्ठशब्देन षण्णां पृष्ठानामतिदेशाधिकरणम् ॥ ३ ॥

**विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ३ ॥**

विश्वजित्सर्वपृष्ठ इति ज्योतिष्टोमातिदेशप्राप्तमाहेन्द्रादिस्तोत्रचतुष्टयानुवादः । तेषु सप्तदशानि पृष्ठानीति पृष्ठशब्दप्रयोगात् । अथ वा बृहद्रथन्तरस्तोत्रयोरेव पृष्ठशब्दोऽन्यत्र गौणस्तेन विकल्पेन प्राप्तयोः सर्वत्वं समुच्चयो विधीयत इति प्राप्ते,–बह्वर्थसर्वशब्दस्य द्वयोरसंभवात्षाडहिकानां षण्णां पृष्ठानां वचनादतिदेश इति सिद्धान्तः ॥ ३ ॥

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

**तथावभृथः सोमात् ॥ ४ ॥**

वरुणप्रघासे वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीत्यवभृथशब्देनापां व्युत्सेकं दर्शपूर्णमासातिदेशप्राप्तमनूद्य तत्र तुषनिष्कासविधिरिति प्राप्ते,—अवभृथशब्दस्य तत्परत्वे मानाभावाद्यन्तीतिविहितकर्मान्तरेऽवभृथशब्दो गौण इति मुख्यावभृथधर्मातिदेश इति सिद्धान्तः ॥ ४ ॥

वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ ५ ॥

एतच्च कर्मान्तरमतिदेशात् पुरोडाशद्रव्यकमिति प्राप्ते,—अपूर्वकर्मविधावनेकविधिसंभवात्तुषनिष्कासाभ्यां पुरोडाशबाधो वचनादिति सिद्धान्तः ॥ ५ ॥

वैष्णवशब्दादातिथ्यायां धर्मानतिदेशाधिकरणम् ॥ ६ ॥

गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ ६ ॥

राजसूये वैष्णवस्त्रिकपालस्तत्र वैष्णवशब्द आतिथ्यागतवैष्णवनवकपालधर्माणामतिदेशक इति प्राप्ते,—विष्णुदेवताकत्वेन मुख्यत्वाद्गौण्याभावान्नातिदेशकत्वमिति सिद्धान्तः ॥ ६ ॥

निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणम् ॥ ७ ॥

निर्मन्थ्यादिषु चैवम् ॥ ७ ॥

निर्मन्थ्येनेष्टकाः पचन्ति, बर्हिषा यूपावटमवस्तृणाति, आज्येन यूपमनक्तीत्यादौ बर्हिराज्यनिर्मन्थ्यशब्दाः पाशुकनिर्मन्थ्य—दार्शिकबर्हिराज्य—धर्मातिदेशकाः। अन्यथा धर्मालाभादिति शङ्कायां लोकतोऽपि मन्थनादिप्रकारलाभान्न गौणत्वमिति सिद्धान्तः ॥ ७ ॥

द्वयोः प्रणयन्तीत्यनेन सौमिकधर्मानतिदेशाधिकरणम् ॥ ८ ॥

सौमिकं तु प्रणयनमवाच्यं हीतरत् ॥ ८ ॥

चातुर्मास्येषु द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेतीति । इदं प्रणयनं सौमिकधर्मकमुच्यते, प्राकृतपरत्वे आनर्थक्यादिति प्राप्ते,—लक्षणायां मानाभावात्प्राकृतानुवाद एव । स च द्वाभ्यामेतीत्यर्थवादार्थः । द्वयोरेव न चतुर्ष्विति परिसंख्यायां दोषत्रयापत्तेरिति सिद्धान्तः ॥ ८ ॥

द्वयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम् ॥ ९ ॥

प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ ९ ॥

द्वयोरित्यनियमः, अथवा प्रथमोत्तमयोः न वैश्वदेवे उत्तरवेदिमुपव-

पन्ति न शुनासीरीये इत्युत्तरवेदिनिषेधस्य प्रसक्तिपूर्वकत्वेन तस्याश्च प्रणयनाङ्गतया प्रथमोत्तमयोः प्रणयनज्ञापकत्वादिति प्राप्ते,—गत्यर्थवादान्मध्यमयोरेव तत्रैवोरुसंस्तवात्—ऊरू वा एतद्यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चेति। एतदेवार्थवादप्रयोजनम् । प्रणयनानुवादश्च तत्रोत्तरवेद्यामग्निं निदधातीति गुणार्थः । मध्यमयोः प्रणयनमिति तत्रैवोत्तरवेदिः । न वैश्वदेव इति तु उपात्र वपन्तीति वचनान्तरेण विहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधार्थमिति भाष्यकारः । वार्तिककृत्तु नैतन्मन्यते विध्यभावे अर्थवादासंभवाद्वाक्यान्तरेण विहितोत्तरवेदेः सर्वत्र प्रसङ्गे तदुपसंहारायोगान्न वैश्वदेव इति प्रथमोत्तमपर्युदासेन मध्यमयोरेव तद्व्यवस्थितौ द्वयोः प्रणयन्तीत्यस्य वैयर्थ्यात् । तस्मादेकमेवाधिकरणमेवं वर्णनीयम् । प्राप्तप्रणयनानुवादे आनर्थक्याल्लक्षणया सौमिकं प्रणयनमुच्यते । एवं चोत्तरवेदिप्रतिषेधसंगतिः न वैश्वदेव इति । उपात्रेति त्ववान्तरप्रकरणेन वरुणप्रघासमात्रविषयमिति न प्रथमोत्तमयोस्तत्प्रसक्तिः । एवं च प्रथमोत्तमयोः सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयत इति प्राप्ते,—प्रणयन्तीत्यस्य सौमिकानभिधायकत्वादाहवनीयात् द्वावग्नी प्रणयत इति वचनैकार्थ्यात्प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरस्य प्रणयनमपूर्वं पशुबन्धवद्विधीयते । तच्च गत्यर्थवादवशान्मध्यमयोः । उत्तरवेदिनिषेधस्तु उपात्र वपन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थ इति सिद्धान्तः ॥ ९ ॥

स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम् ॥ १० ॥

**स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ १० ॥**

पृष्ठ्यः षडहो द्वौ स्वरसामानाविति स्वरसामशब्दो गुणविधित्वाद्वैष्णवशब्दवन्न गावामयनिकस्वरसामातिदेशकः, एवमेककपालामिक्षाशब्दावपीति प्राप्ते,—लिङ्गदर्शनादतिदेशकत्वमिति सिद्धान्तः ॥ १० ॥

वासआदिशब्दानां जातिनिमित्तकत्वाधिकरणम् ॥ ११ ॥

**कर्मजे कर्मयूपवत् ॥ ११ ॥**

वासो ददाति, अनो ददातीति वासःशब्दस्य वानक्रियानिमित्तत्वात्सैव दानाङ्गतया विधीयते, एवं तक्षणक्रियापि, तस्मात्साऽनुष्ठेया दानं कुर्वतेति प्राप्ते, जातिवाचित्वान्न क्रियातिदेशकत्वमिति सिद्धान्तः ॥११॥

गर्गत्रिरात्रे लौकिकाग्नेरुपनिधानाधिकरणम् ॥ १२ ॥

**विशये लौकिकं स्यात्सर्वार्थत्वान्न वैदिकमर्थनिर्देशात् ॥ १२ ॥**

अग्निमुपनिधाय स्तुवीतेत्यत्र अग्निराहवनीय इति प्राप्ते,—अग्निमात्राभिधानान्न संस्कृतोपादानमिति सिद्धान्तः ॥ १२ ॥

उपशयो यूप इत्यादौ यूपशब्दस्य संस्काराप्रयोज्यत्वाधिकरणम् ॥ १३ ॥

संस्कृतं स्यात्तच्छब्दत्वात् ॥ १३ ॥

उपशयो यूपो भवतीत्यर्थवादः छेदनादिनिमित्तो न त्वातिदेशिक इति सिद्धान्तः ॥ १३ ॥

पृष्ठैरुपतिष्ठत इत्यादौ पृष्ठशब्दस्य ऋगुद्रव्यवाचित्ताधिकरणम् ॥ १४ ॥

कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ १४ ॥

अग्नौ पृष्ठैरुपतिष्ठत इत्यत्राग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यादित्यपूर्वकर्मविधानमिति प्राप्ते,—पृष्ठसाधनैः रथन्तरादिभिरग्निसमीपे स्थित्वा तमभिदध्यादित्यभिधानविधानम् ' उपान्मन्त्रकरणे ' इति स्मृतेरिति सिद्धान्तः ॥ १४ ॥

इति श्रीन्यायबिन्दौ सप्तमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

सौर्ये चरौ इतिकर्तव्यतावत्त्वाधिकरणम् ॥ १ ॥

इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

सौर्यं चरुमित्यादावितिकर्तव्यताकाङ्क्षायां लौकिकस्थालीपाकादीतिकर्तव्यता ग्राह्या । दर्शादिगताया वैदिक्या अन्यसंबन्धित्वेनासंभवादिति प्राप्ते,—वैदिकत्वेनौषधद्रव्यकत्वादिसादृश्येन चोपस्थिता दर्शादीतिकर्तव्यतैव प्रकृतिवच्छब्देन कल्पितेनादिदिश्यते प्रकृतिवत्सौर्येण कुर्यादिति नतु लौकिकीति सिद्धान्तः ॥ १ ॥

गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ २ ॥

द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ २ ॥

गवामयने ज्योतिर्गौरित्यादिसंज्ञकयागेषु गणेषु द्वादशाहस्येति द्वादशाहेतिकर्तव्यता, नाम्ना च ज्योतिराद्येकाहगता चाविरोधे क्रियते विरोधे त्वानुमानिकातिदेशो बलवान् प्रयोगवाक्यगत्वात् तत्रैव हि फलसंबन्धादितिकर्तव्यताकाङ्क्षा न च तत्र नाम श्रूयत इति प्राप्ते,—नाम्नः प्रत्य-

क्षत्वान्न तद्विरोधेऽनुमानम् । प्रयोगवाक्यं चोत्पत्तिवाक्यालोचनेनैव प्रवर्तत इति तद्गतनाम्नोपस्थितेतिकर्तव्यतैव बलवतीति सिद्धान्तः ॥ २ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ सप्तमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ४ ॥

---

## अष्टमाध्यायस्य प्रथमः पादः

---

विशेषातिदेशप्रतिज्ञाधिकरणम् ॥ १ ॥

### अथ विशेषलक्षणम् ॥ १ ॥

एकस्मिन् कर्मण्यग्निहोत्राद्यनेकातिदेशात्तत्तदितिकर्त्तव्यताया विकल्पे प्राप्ते,–नियमेनैकस्यैवैकत्रेतिकर्तव्यता अन्यथाऽव्यवस्थापत्तेरिति सिद्धान्तः ॥ १ ॥

विशेषकर्मणो धर्मातिदेशाधिकरणम् ॥ २ ॥

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

नियमे कारणमुच्यते । यस्य कर्मणो लिङ्गं चिह्नं शब्दगतमर्थगतं वा यत्र विकृतौ दृश्यते तस्य तत्रातिदेशः । यथौषधद्रव्यकत्वात्तद्धितेन देवतोक्तेराग्नेयस्य सौर्ये, तथाऽनेकदेवतेष्वग्नीषोमीयैन्द्राग्नयोः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यादिषु दैक्षपशौ च सान्नाय्यस्य, पश्वन्तरेषु दैक्षस्य, ऐकादशिनेषु सुत्याकालत्वात्सवनीयस्य, पशुगणान्तरेष्वैकादशिनस्य, अव्यक्तदेवतेषु सोमस्य, अहर्गणेषु सत्रेषु अहीनेषु च द्वादशाहस्य, संवत्सरादिषु गवामयनस्येत्यादि बोध्यमिति ॥ २ ॥

सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

### प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥

सोमे इष्टिपशुषु दर्शेतिकर्तव्यताया उपस्थितेः सोमेऽपि तदन्वयशङ्कायामभिषवादिसन्निपत्योपकारकाङ्गनिराकाङ्क्षत्वान्न सोमे तदन्वयः । तस्यैकशतं प्रयाजानुयाजा इति तु दीक्षाद्यङ्गद्वारकसंबन्धानुवाद इति सिद्धान्तः ॥ ३ ॥

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

### इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ४ ॥

अग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम् ॥ ५ ॥

### पशौ च लिङ्गदर्शनात् ॥ ५ ॥

पश्वन्तरेषु अग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥

दैक्षस्य चेतरेषु ॥ ६ ॥

ऐकादशिनपशौ सवनंधर्मातिदेशाधिकरणम् ॥ ७ ॥

ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ ७ ॥

पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ ८ ॥

अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

अव्यक्तासु तु सोमस्य ॥ ९ ॥

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

गणेषु द्वादशाहस्य ॥ १० ॥

संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

गव्यस्य च तदादिषु ॥ ११ ॥

एतानि सूत्राण्युक्तार्थानि । गव्यस्य गवामयनस्य । सिद्धान्तः ॥४–११॥

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

निकायिनां पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १२ ॥

साहस्राः साद्यस्का इत्येकनाम्ना युगपदुपक्रम्य पश्चात्क्रमेण विहिता यागा निकायिनः। तेष्वेकसमूहवर्तित्वमेकनामत्वं चावान्तरसादृश्यमस्तीति पूर्वस्योत्तरेषु विध्यन्तो न तु सोमस्येति ॥ १२ ॥

फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्या-
नन्वयस्तद्बन्धनत्वात् ॥ १३ ॥

स्वर्गयावज्जीवनियमस्वर्गकामाग्न्येयादिसमुदायानां प्रधानत्वेन कर्मानङ्गत्वान्न विकृतावतिदेश इति सिद्धान्तः ॥ १३ ॥

गुणकामतो गोदोहनादीनामनतिदेशाधिकरणम् ॥ १४ ॥

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ १४ ॥

गोदोहनेन पशुकामस्येत्यादिफलार्थगुणानां गोदोहनादीनां प्रणयनद्वारा विकृतौ प्रवृत्तिः तथा तत्फलस्यापीति प्राप्ते,—फलार्थानां त्वेष प्रकृत्यनङ्गत्वान्नातिदेशः। प्रणयनं तु चमसेनैव भवति स्वेच्छया गोदोहनेन तद्वायायोगाद्दर्शपूर्णमासापूर्वसाधनप्रणयनस्यैवाश्रयत्वेन विकृतौ तदभावाच्च न गुणफलप्रवृत्तिरिति सिद्धान्तः ॥ १४ ॥

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ॥ १५ ॥

एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ १५ ॥

आग्नेयविकारे सौर्ये चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रा अमावास्यायामिति प्रकृतिवद्व्यवस्थेति प्राप्ते,—हविरन्तरानुरोधेन प्रकृतावार्थिकी व्यवस्था न तु शास्त्रार्थः । समुदायद्वयेऽप्याग्नेयसत्त्वेन समुदायकृतव्यवस्थायाः शास्त्रीयाया असंभवात्तस्माद्विकृतावव्यवस्थैवेति सिद्धान्तः ॥ १५ ॥

सौर्ये आग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ १६ ॥

इष्टिषु षण्णामाग्नेयादीनामनियमेनातिदेश इति प्राप्ते,—एकदैवत्यासु आग्नेयस्यानेकदैवत्यास्वग्नीषोमीयैन्द्राग्नयोः आज्यादिद्रव्यकेषूपांशुयाजादेरिति नियमः सादृश्यविशेषादिति सिद्धान्तः ॥ १६ ॥

हविर्देवतयोर्विप्रतिपत्तौ हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ १७ ॥

ऐन्द्रपुरोडाशे आग्नेये च पयसि मुख्यत्वप्राधान्याभ्यां देवतासादृश्यात्सान्नाय्यस्यौषधस्य चातिदेश इति प्राप्ते,—त्यज्यमानत्वेन हविषः कर्मप्रत्यासत्तेस्तत्सादृश्यादेवातिदेशः, देवता तु प्रातिपदिकार्थतया मुख्याऽपि बहिरङ्गं प्राधान्यं तु नास्त्येव यागगुणत्वात्, औषधे सान्नाय्यधर्माणां सान्नाय्ये चौषधधर्माणामसंभवाच्च । अतो हविःसाम्यं बलवदिति सिद्धान्तः ॥ १७ ॥

शतकृष्णलहिरण्ये औषधधर्मातिदेशाधिकरणम् ॥ १८ ॥

हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ १८ ॥

कृष्णलचरौ दीप्तिमत्त्वसाम्यादाज्यातिदेशे प्राप्ते,—विविक्तावयवत्वाच्चरुशब्दाच्चौषधातिदेश इति सिद्धान्तः ॥ १८ ॥

मधूदके उपांशुयाजीयाज्यधर्मातिदेशाधिकरणम् ॥ १९ ॥

मधूदके द्रवत्वसामान्यात्पयोविकारः स्यात् ॥ १९ ॥

चित्रेष्टौ मधूदकयोः स्वाभाविकद्रवत्वात्पयोविध्यन्तप्राप्तौ वर्णसाम्याधिक्यादाज्यविध्यन्त इति सिद्धान्तः ॥ १९ ॥

इति श्रीन्यायविन्दौ अष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अष्टमाध्यायस्य द्वितीयः पादः ।

वाजिनसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥

**वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥**

वाजिने सौत्रामणिग्रहेषु च सोमातिदेशः । सोमो वै वाजिनं सुरा सोम इति गौणप्रयोगादिति प्राप्ते,—अर्थवादस्याविधायकत्वाद्वाजिने पयोविध्यन्तः सुराग्रहेषु चौषधविध्यन्त इति सिद्धान्तः ॥ १ ॥

पशौ सान्नाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

**पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ २ ॥**

अग्नीषोमीयपशौ देवतासाम्यादग्नीषोमीयपुरोडाशविध्यन्तप्राप्तौ पशुप्रभवत्वसाम्याधिक्यात्सान्नाय्यविध्यन्त इति सिद्धान्तः ॥ २ ॥

पशौ पयोधर्मातिदेशाधिकरणम् ॥ ३ ॥

**दध्नः स्यान्मूर्तिसामान्यात् ॥ ३ ॥**

घनत्वाद्दध्न इति प्राप्ते, साक्षात्पशुप्रभवत्वात्पयस एवेति सिद्धान्तः ॥३॥

आमिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ ४ ॥**

आमिक्षोभयजन्यत्वादुभयविकारः घनत्वाद्वा दधिविकार इति प्राप्ते,—तप्ते पयसीति वाक्ये पयस एव प्राधान्यात्तद्देवामिक्षा अतः पयोविकारत्वमेवेति सिद्धान्तः ॥ ४ ॥

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ५ ॥**

सत्राख्येष्वहर्गणेषु सत्ररूपद्वादशाहातिदेशः अहीनेषु तु अहीनस्येति सिद्धान्तः ॥ ५ ॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥

**अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वदर्शनात् ॥ ६ ॥**

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चासनोपायचोदनात्सत्रकाण्डाम्नातत्वाच्च सत्रत्वमेव न त्वन्तेऽतिरात्रत्वमात्रेणाहीनत्वम् । अतः सत्रविध्यन्त एवेति सिद्धान्तः ॥ ६ ॥

इति श्रीन्यायबिन्दौ अष्टमाध्यायस्य द्वितीयः पादः ॥ २ ॥

## अष्टमाध्यायस्य तृतीयः पादः ।

ऐंद्राग्निदैवते आग्नावैष्णवदैवते च क्रमेणाग्नेयाग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ १ ॥

### हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा बार्हस्पत्यं चरुमित्यत्र प्रथमे प्रथमस्याग्नेयस्य तृतीयेऽग्नीषोमीयस्य स्थानसाम्यादतिदेशप्राप्तौ एकानेकदेवतत्वाभ्यां प्रथमतृतीययोस्तृतीयप्रथमविध्यन्त इति सिद्धान्तः स्थानैक्यस्य बहिरङ्गत्वेन दुर्बलत्वात् ॥ १ ॥

जनकसप्तरात्रीयत्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

### गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ २ ॥

जनकसप्तरात्रे चत्वारि त्रिवृत्यहान्यग्निष्टोममुखानीति श्रुतं तत्र पार्ष्ठिकाद्याहस्त्रिवृत्वसाम्येन प्रवृत्तिरिति प्राप्ते,—चतुर्णामपि पृष्ठ्यानामाद्यानां चतुर्षु संघातसाम्यात्प्रवृत्तिः अत एवाग्निष्टोममुखानीति युक्तम् । अन्यथा सर्वेषामग्निष्टोमत्वं स्यात् पार्ष्ठिकस्यान्वयस्य तथात्वादिति सिद्धान्तः ॥ २ ॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

### कालाभ्यासे च बादरिः कर्मभेदात् ॥ ३ ॥

षट्त्रिंशद्रात्रे षडहा भवन्ति चत्वारो भवन्तीति चतुर्विंशतिरहानि विधीयन्ते । तत्र च गणत्वसाम्याद्द्वादशाहगतदशरात्रविध्यन्तप्राप्तौ चतुर्विंशतिगणस्याशाब्दत्वात्षडहानां च प्रत्यक्षश्रुतेस्तद्विध्यन्त एवेति सिद्धान्तः ॥ ३ ॥

संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

### संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ४ ॥

शतोक्थ्यं भवतीत्यादावुक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वात्तदनुवादेन शतावृत्तिविधिरिति प्राप्ते,—संस्थावाचकत्वान्न क्रत्वनुवादः किंतु संख्यासंस्थोभयविशिष्टापूर्वकर्मविधिः प्रकरणान्तरात् । अतो गणरूपत्वाद्द्वादशाहविध्यन्त इति सिद्धान्तः ॥ ४ ॥

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ॥ ५ ॥

### गणादुपचयस्तत्प्रकृतित्वात् ॥ ५ ॥

शतोक्थ्ये द्वादशाहिकदशरात्रावृत्तिः । तस्मिंश्च प्रथमदशमयोरग्नि-

ष्टोमसंस्था । इह तूक्थ्यसंस्थाया औपदेशिकत्वादग्निष्टोमस्तोत्रोत्तरमुक्थ्यविवृद्धिः । तत्रागम्यमानेषूक्थ्यस्तोत्रेषु द्वादशाहिकोक्थ्यविध्यन्त इति प्राप्ते,—ज्योतिष्टोम एवोक्थ्यधर्मोपदेशात्तद्विकारत्वमेव न तु द्वादशाहिकविकारत्वम् 'न हि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायादिति सिद्धान्तः ॥ ५ ॥

गायत्रमेतदहरित्यत्रोत्पत्तिगायत्रीणामागमाधिकरणम् ॥ ६ ॥

गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ॥ ६ ॥

बृहस्पतिसवे गायत्रमेतदहरिति छन्दान्तरव्युदासेन गायत्री नियता। तत्र प्राकृतीष्वेवातिदेशप्राप्तास्वक्षरलोपेन गायत्रीछन्दः संपादनमिति प्राप्ते,—गायत्रीशब्दस्य संख्यान्वितत्रिपादृग्वाचित्वादुत्पत्तिगायत्र्येवानेया इति सिद्धान्तः ॥ ६ ॥

इति श्रीन्यायबिन्दौ अष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अष्टमाध्यायस्य चतुर्थः पादः ।

दर्विहोमशब्दस्य कर्मनामधेयताधिकरणम् ॥ १ ॥

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

यदेकया जुहुयाद्दर्विहोमं कुर्यादिति दर्विहोमशब्दो जुहोतिचोदनाचोदितानां कर्मणां नामधेयं न तु दर्वीरूपगुणविधिः शास्त्रान्तरप्राप्तत्वादिति सिद्धान्तः ॥ १ ॥

दर्विहोमशब्दस्यापूर्वताधिकरणम् ॥ २ ॥

तस्मिन्सोमः प्रवर्तेताव्यक्तत्वात् ॥ २ ॥

दर्विहोमेष्वव्यक्तत्वेन सोमस्य, होमत्वविशेषादग्निहोत्रादेर्वा विध्यन्तप्राप्तौ,—सन्निपत्योपकारकाङ्क्षसाकल्यान्निराकाङ्क्षतयाऽपूर्वत्वमेवेति सिद्धान्तः ॥ २ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ अष्टमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ४ ॥

## नवमाध्यायस्य प्रथमः पादः ।

अग्निहोत्रादिपूक्तधर्माणामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

**यज्ञकर्मप्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कार-स्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

अवघातादीनां व्रीह्यादिद्वाराऽपूर्वार्थत्वात् द्वाराभावेन नीवारादिषु नोह इति प्राप्ते,—अपूर्वसाधनत्वेनैव व्रीह्यादीनां द्वारत्वादपूर्वसाधनत्वस्य च विकृतौ नीवारादिष्वपि सत्त्वात्तद्वारा प्रकृतिवदपूर्वोपकारकत्वस्याति-देशावगतत्वादूहसिद्धिः । एवं प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति प्रोक्षणस्य नखनिर्भिन्नचरौ नखेषूहः । एवमगन्मः सुवरित्यादिस्वर्गप्रका-शकमन्त्रस्यान्यफलायां विकृतावूह इति सिद्धान्तः ॥ १ ॥

प्रोक्षणस्याद्यपूर्वप्रयुक्तताधिकरणम् स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वं च ॥ २ ॥

**संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥**

प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्र प्रोक्षणस्योलूखलादिद्वाराऽव-घातार्थत्वान्नखनिर्भिन्नचरौ च तदभावादनूहप्राप्तौ,—प्रोक्षणं विनाप्यवघा-तसिद्धेस्तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनत्वं तेनैव रूपेणावघातस्य द्वारत्वात्तस्य च नखविदलनेऽपि सत्त्वादूह इति सिद्धान्तः पूर्वोक्त एव प्रपञ्चितः । एवं वा यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनु-ब्रूयादिति श्रुतः स्वरविशेषस्तु दीक्षणीयापूर्वप्रयुक्त एव सन्निहितत्वात् । ज्योतिष्टोमापूर्वस्य विप्रकृष्टत्वान्न तत्प्रयुक्त इत्यपि ज्ञेयम् ॥ २ ॥

फलदेवतासंबद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् ॥ ३ ॥

**फलदेवतयोश्च ॥ ३ ॥**

सौर्यादिविकृतावगन्मः सुव इति स्थाने अगन्म ब्रह्मवर्चसमित्यूहः । अग्नेरहमुज्जितिमनूज्जेषमिति मन्त्रे च सूर्यस्याहमित्यूहः, फलदेवताप्रका-शनद्वारा क्रत्वपूर्वोपयोगादिति स्पष्टम् ॥ ३ ॥

धर्माणामदेवताप्रयुक्तताधिकरणम् ॥ ४ ॥

**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ४ ॥**

यागेनाराधिता देवता फलप्रदेति सैव प्रधानं यागस्तदर्थो भोजनमि-वातिथ्यर्थम् । एवं च देवताप्रसादादेव कालान्तरेऽपि फलसिद्धेर्नापूर्व-कल्पनेति प्राप्ते,—देवतासाध्यत्वेन फलभावनाकरणत्वेन च याग एव

प्रधानं भोजनं तु दृष्टवशादतिथ्यर्थम् । तत्रापि फलं भोजनादेव न त्वतिथेस्तस्यासामर्थ्यात् । देवतायाश्चाभोक्तृत्वान्न प्रसादसंभवः । अर्थवादानामस्वार्थपरत्वात् । स्तोकमण्डूकादीनामपि देवतात्वदर्शनात् । तस्माद्यागादेवापूर्वद्वारा फलमिति सिद्धान्तः ॥ ४ ॥

प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणम् ॥ ५ ॥

द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ५ ॥

व्रीहीनित्यादिश्रुतिवलाद्व्रीह्यादिस्वरूपार्था एव प्रोक्षणादयः न तु दुर्बलप्रकरणेनापूर्वार्था इति प्राप्ते,—एवं सत्यानर्थक्यादपूर्वसाधनत्वेनैव प्रोक्षणाद्यन्वय इति सिद्धान्तः । तेन यवनीवारादिष्वपि प्रोक्षणादयः ॥ ५ ॥

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तताधिकरणम् ॥ ६ ॥

देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥६॥

ज्योतिष्टोमे त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति श्रुतम् । त्सरा छद्मगतिः । इदमुपांशुत्वमग्नीषोमीयप्राकृतयज्ञप्राग्भागधर्मः यज्ञस्य प्राचीनमित्यन्वयात् । अतो विकृतौ तद्भागारम्भकेऽप्राकृतेऽपि पदार्थ ऊहितव्यमिति प्राप्ते,—यज्ञशब्दस्य त्सराशब्दविशेषणत्वं न तु प्राचीनमित्यस्य व्यवधानात् । यत्किंचिदित्यस्यानेकार्थत्वाच्च अग्नीषोमीयप्राग्वर्तिनामङ्गानामेवोपांशुत्वं धर्मः । तेन विकृतावप्राकृते पदार्थे नोहितव्यमिति सिद्धान्तः ॥ ६ ॥

इष्टकासु सकृत्प्रोक्षणाद्यनुष्ठानाधिकरणम् ॥ ७ ॥

अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ ७ ॥

हिरण्यशकलैरग्निं प्रोक्षतीति प्रोक्षणं प्रतीष्टकं कार्यम् अग्निशब्देनेष्टकातिरिक्तैकावयविनोऽसंभवेनानभिधानादिति प्राप्ते,—स्थण्डिलमित्येकबुद्ध्यैकावयविसत्त्वात्तत्संस्कारकं प्रोक्षणं सकृदेवेति सिद्धान्तः ॥ ७ ॥

उत्तमान्येषामह्नां पत्नीसंयाजान्तत्वाधिकरणम् ॥ ८ ॥

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ ८ ॥

द्वादशाहे पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इत्यविशेषात्सर्वेषामह्नां पत्नीसंयाजान्तत्वम् असंस्थितो हि तर्हि यज्ञ इति तु चिरसंस्थितत्वेनोपपद्यत इति प्राप्ते,—अन्त्यादह्नः प्रागेवायं विधिः द्वादशयागानां सहप्रयोगो हि क्वचित्पदार्थेऽवस्थाप्योत्तरोपक्रमणे स्यात् । तत्र कस्मिन्पदार्थे-

ऽवस्थापनमित्यपेक्षायां पत्नीसंयाजेष्ववस्थापननियमो विधीयते । तेन वाक्यशेषोप्युपपन्न इति सिद्धान्तः ॥ ८ ॥

त्रिः प्रथमामन्वाहेत्यादिषु स्थानधर्मताधिकरणम् ॥ ९ ॥

**अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात् ॥ ९ ॥**

दर्शपूर्णमासयोरेकादश सामिधेन्यः पठिताः । तत्र त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश संपद्यन्त इति श्रुतम् । अयं त्रिरभ्यासः प्रवो-वाजेत्यादिऋग्विशेषधर्मः स्त्रीलिङ्गनिर्देशादिति प्राप्ते,—प्रथमशब्दस्य प्राथम्याश्रय एव शक्तेः प्रथमस्थानगताया एवायं धर्मो न ऋग्विशेषस्य । तेन विकृतौ प्रथमस्थानगतऋगन्तरे त्रित्वोह इति सिद्धान्तः ॥ ९ ॥

यावज्जीवदर्शपूर्णमासयोरारम्भणीयायाः सकृदेवानुष्ठानाधिकरणम् ॥ १० ॥

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ १० ॥**

आरम्भणीयेष्टिर्दर्शपूर्णमासारम्भे विहिता सा तदावृत्तावावर्तनीया प्रयाजवदिति प्राप्ते,—आरम्भस्यैकत्त्वात्तदर्थान्वारम्भणीया सर्वप्रयोगसा-धारणीति नावर्तनीयेति वृत्तिकृत्सिद्धान्तः । अथवा आरम्भः प्रथमः पदार्थस्तदावृत्तौ तदङ्गभूतेष्टिरप्यावर्तेत इति प्राप्ते,—आरप्स्यमानशब्दस्य प्रथमप्रवृत्तिरूपारम्भकर्तृवाचकत्वात् लृट्प्रत्ययेन चारम्भार्थतोक्तेः कर्तृसं-स्कारद्वारेण कर्माङ्गत्वात्प्रथमप्रवृत्तिरूपारम्भस्य चैकत्वान्नावृत्तिरिति भाष्यमतेसिद्धान्तः ॥ १० ॥

निर्वापमन्त्रे सवित्रादिपदानामनूहाधिकरणम् ॥ ११ ॥

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ११ ॥**

देवस्यत्वेत्यादिनिर्वापमन्त्रे सवित्रादिपदानां लक्षणया अग्न्यादिदेव-ताप्रकाशकत्वाद्विकृतावूह इति प्राप्ते,—लक्षणायां प्रमाणाभावान्निर्वापवि-शेषणमात्रार्थत्वान्नोहितव्या इति सिद्धान्तः ॥ ११ ॥

अग्नये जुष्टमित्यत्र विकृतिष्वग्निशब्दस्योहाधिकरणम् ॥ १२ ॥

**गुणशब्दस्तथेति चेत् ॥ १२ ॥**

निर्वापमन्त्रे अग्नये जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदु-च्यते निर्वापवेलायां तदभावादसमवेतवचनो जुष्टशब्द इति तद्विशेषण-मग्निपदमपि तथा सवित्रादिपदवत्प्रशंसामात्रार्थमित्यनूह इति प्राप्ते,— यज्जुष्टं तन्निर्वापामीति नार्थः किंतु निर्वापेणाग्नये जुष्टं करोमीति तस्मा-

त्समवेतवचनत्वादूह इति सिद्धान्तः । यद्वा प्रकृतौ धान्यमसि धिनुहि देवानिति तण्डुलेषु धान्यशब्दोऽसमवेतार्थत्वात्तरसमये हविषि नोहितव्य इति प्राप्ते,—लक्षणया प्रकृतावपि समर्थत्वात् मांसमसीति मुख्यशब्दस्यैवोहो न तु लक्षणया मृगशब्दस्य तस्या अविवक्षितत्वादिति सिद्धान्तः ॥ १२ ॥

इडोपह्वाने यज्ञपतिशब्दस्यानूहाधिकरणम् ॥ १३ ॥

## चोदिते तु परार्थत्वाद्विधिवदविकारः ॥ १३ ॥

दर्शपूर्णमासयोरिडानिगदे उपहूता मनुष्या ये यज्ञपतिं वर्द्धानिति यज्ञपतिवृद्धिप्रकाशनेन तदुत्साहजननात्तसंस्कारजनकं लिङ्गात् । अतोऽनेकयजमानकेषूहो यज्ञपतीनिति प्राप्ते,—इडोपह्वानाङ्गनिगदमध्यवर्तिनस्ततो भिन्नवाक्यत्वासंभवाद्यच्छब्देन च वृद्धेः परार्थत्वावगमात्प्राधान्यायोगेनेडास्तुत्यर्थत्वमेवेति सत्रादौ नोहः । यत्र तु यजमानप्राधान्यं न तु परार्थत्वं तत्र भवत्येवोहः । यथा सूक्तवाके अयं यजमान आयुराशास्त इति सिद्धान्तः ॥ १३ ॥

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् ॥ १४ ॥

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ १४ ॥

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः इन्द्र आगच्छ हरिव आगच्छेत्यादिः । सोऽग्निष्टुति यज्ञे आग्नेयी सुब्रह्मण्येतिवचनादग्ने आगच्छेत्यूह्यते । हरिवदादिशब्दा अपि देवतागुणार्था रोहितवदादिरूपेणोहितव्या इति प्राप्ते,—देवताधर्मत्वे प्रमाणाभावात्स्तुतिमात्रेणादृष्टार्थानां नोह इति । एवं तस्यै शृतं तस्यै दधीत्याद्येकहायनीमन्त्रः साण्डे त्रिवत्से शृताद्यभावादूहितव्य इति प्राप्ते,—एकहायन्यवस्थायां शृताद्यभावान्नान्वित्वेऽपि मानाभावात्कथंचित्स्तुत्यर्थत्वस्य साण्डेऽपि गोजननद्वारा संभवादनूह इति सिद्धान्तः ॥ १४ ॥

सारस्वत्यां मेष्यामध्रिगुवचनाभावाधिकरणम् ॥ १५ ॥

## लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ १५ ॥

ज्योतिष्टोमे सारस्वती मेषी अतिरात्रे श्रुता । तत्र पशुधर्माणां सर्वसाधारण्ये—प्रास्मा अग्निं भरतेति पुल्लिङ्गस्य पशुशब्दाभिप्रायेण स्त्रियामप्युपपत्तेर्मेष्यामपि स्यादध्रिगुप्रैष इति प्राप्ते,—पशुशब्दाश्रवणात्पुरो-

वर्तिद्रव्यस्य स्त्रीरूपस्य पुल्लिङ्गविरोधात्प्रकाशनासंभवान्मेध्यामप्रवृत्तिः। अग्नीषोमीयमात्रार्थत्वे तु सिद्धान्तेऽतिदेशादूह इति सिद्धान्तः ॥ १५ ॥

यज्ञायज्ञीये गिरापदस्थाने इरापदस्यैव कर्तव्यताधिकरणम् ॥ १६ ॥

**आम्नातादन्यदधिकारे वचनात्तद्विकारः स्यात् ॥ १६ ॥**

ज्योतिष्टोमे यज्ञायज्ञीयसामनि श्रुतं—न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गेयमिति। तत्रेरापदमात्रं वचनेन विधीयते नोद्गानस्तोत्रसंबन्धः। किंतु प्रकरणकल्प्यः। स च गिरापदस्यापि तुल्य इत्युभयोर्विकल्प इति प्राप्ते,—इरापदस्य श्रुत्यैवोद्गानसंबन्धात्प्रकरणाच्च स्तोत्राङ्गत्वात्प्राबल्यम्। गिरापदस्य तु प्रगाथैकवाक्यतया गानसंबन्धः। क्रमाच्च स्तोत्राङ्गत्वमतो दौर्बल्यम्। एवं प्रत्यक्षविधिविहितत्वादपीरापदं प्रबलमतस्तदेव नियतमिति सिद्धान्तः ॥ १६ ॥

इरापदस्य प्रगीतताधिकरणम् ॥ १७ ॥

**अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ १७ ॥**

इरापदमप्रगीतमेव प्रयोज्यं तथाभूतस्यैव विधानात्। प्रगीतात्तद्धितोत्पत्तौ वृद्धं तालव्यं प्रथमस्वरं चेतीकारस्यायीभावे सति वृद्धाच्छ इति छप्रत्यये आयीरीयमिति स्यात् न त्वैरमिति। अयं च स्वार्थतद्धितस्तस्मादप्रगीतोपदेश इति प्राप्ते—गिरापदस्थाने विधानादपेक्षिततदीयगीतिलाभः स्तुतेः सामसाध्यत्वात्। तस्मात्प्रगीतप्रयोग इति सिद्धान्तः ॥१७॥

इति श्रीन्यायबिन्दौ नवमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## नवमाध्यायस्य द्वितीयः पादः।

गीतीनां सामनामताधिकरणम् ॥ १ ॥

**सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥**

रथन्तरादिशब्दा गीतिमात्रवाचका इति स्मार्यते अथवा ऊहग्रन्थस्य पौरुषेयत्वमुच्यते ॥ १ ॥

साम्नः ऋक्संस्कारकर्मताधिकरणम् ॥ २ ॥

**कर्म वा विधिलक्षणम् ॥ २ ॥**

साम्नां न संस्कारत्वमकर्मकालेऽपि प्रयोगात्। अदृष्टसंस्कारत्वे क्रतुमध्ये पुनः प्रयोगो न स्यात्। अकर्मकाल एव तदुत्पादात् तस्मात्प्रधान-

कर्म साम वहिः प्रयोगस्तु फलार्थः, क्रतुमध्ये क्रतोराराद्धुपकारक इति प्राप्ते,—अक्षराभिव्यक्तिद्वारा साम्नां स्तुतिसाधनता तस्मात्संस्कारकर्माणि सामानि अकर्मकाले गानं वाचनिकं शिक्षार्थमिति सिद्धान्तः ॥ २ ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ॥ ३ ॥

## तृचे स्याच्छ्रुतिनिर्देशात् ॥ ३ ॥

एकं साम तृचे क्रियते स्तोत्रीयमिति ऋक्त्रित्वं सामोद्देशेन निष्पत्त्यर्थत्वेन विधीयते । तेन ऋक्त्रयेण मिलित्वा गेयं, प्रत्यृचं गीयमाने तु अभ्यासलक्षणा स्यात् । तस्माद्व्यासज्य गानमिति प्राप्ते,—साम्ना स्तुवीतेत्यादिभिः साम्नः स्तोत्रसाधनत्वं तत्साधनशव्दाभिव्यक्त्या वाक्यं च स्तुतिसाधनं न तत्समूहः, तस्मात्प्रत्यृचं गेयम् । एवं च स्तोत्राङ्गत्वेनैव तत्साधनपरिच्छेदेन त्रित्वविधानात्तृचे क्रियत इत्यनुवादः । अतोऽभ्यासलक्षणाऽपि न दोष इति सिद्धान्तः ॥ ३ ॥

समास्वेव तिसृषु ऋक्षु गानाधिकरणम् ॥ ४ ॥

## तदभ्यासः समासु स्यात् ॥ ४ ॥

तिसृषु समासु वा विषमासु वा अनियमेन गानप्राप्तौ संशरविलेशपरिहाराय समास्वेवेति सिद्धान्तः । संशरः साम्नो हिंसा । अधिकच्छन्दस्कायामुत्पन्नस्य हि न्यूनच्छन्दस्कायां गानेऽवशिष्टं सामाश्रयाभावाद्धन्येत न्यूनच्छन्दस्कायामुत्पन्नं चाधिकच्छन्दस्कया गायमानमल्पं स्यात् सोऽयं विलेशः ॥ ४ ॥

उत्तरयोर्गायतीत्यत्रोत्तराग्रन्थाधीतयोरेव ऋचोर्ग्रहणाधिकरणम् ॥ ५ ॥

## नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ ५ ॥

यद्योन्यां तदुत्तरयोर्गायतीति योन्युत्तरयोरेव ग्रहणं संवन्धिशव्दत्वादिति प्राप्ते,—लोके तथात्वेऽपि उत्तराग्रन्थे संज्ञाकरणात्तस्याश्च निरपेक्षत्वेन प्रावल्यात्प्रकरणाच्च तासामेव ग्रहणमिति सिद्धान्तः । अथवा द्वादशाहिकं चतुर्थमहस्तत्र त्रैशोकं नाम ब्रह्मसामातिजगतीषु स्तुवत इति तदतिजगत्यामुत्पन्नं द्वे अतिजगत्यावानीय समासु गेयं न तु नेमं नमन्तीत्याद्योरुत्तरयोः तयोर्वृहतीत्वादतिजगतीष्विति च वहुत्वश्रुतेरिति प्राप्ते,—क्रत्वर्थयोरुत्तरयोर्वृहत्योरानर्थक्यादेकविंशस्तोमकत्वश्रवणात्तदर्थमेकैकस्यामृचि सप्तकृत्वः पठ्यमानायामतिजगतीवहुत्वानुवादोपपत्तेरुत्तरयोरेव गानमिति ॥ ५ ॥

बृहतीपङ्क्त्योरेव ग्रन्थनेन रथन्तरस्य गानाधिकरणम् ॥ ६ ॥

प्रागाथिकं तु ॥ ६ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने । अभित्वा शूर नो नुमस्त्वामिद्धि हवामह इति, तयोः पङ्क्ती उत्तरे, न त्वा वा अन्यः सत्त्वन्नश्चित्रेति च । तत्र म्—न वै बृहद्रथन्तरमेकन्छदोयत्तयोः पूर्वा बृहती ककुभादुत्तर इति । तत्र पङ्क्ती परित्यज्य द्वे द्वे ककुभावानेतव्ये इति प्राप्ते,—प्रगाथस्मरणात्तथा समाख्यानात्पङ्क्तिपाठानर्थक्यापत्तेः । पादं पुनरारभत इति दर्शनात् बृहतीं पङ्क्तिं च प्रग्रथ्य ककुप्संपत्तिरिति सिद्धान्तः । एवं रौरवयौधाजये वार्हते तृचे भवत इत्यादावपि विशेषतस्तृज्विधानादन्यागमशङ्कायामुक्तहेतुभिरेव प्रग्रथनम् । तथा गवामयने चतुः शतमैन्द्रावार्हताः प्रगाथा इत्यत्र प्रगाथवचनमृक्प्रग्रथनाभिप्रायम् । प्रथमे तृचे गीत्वा तत्रैकामृचमुपादायापरे द्वे ऋचौ गृहीत्वा गानं पुनरप्येवमिति । एवं च तृचगानं प्रगाथशब्दश्चेत्युभयानुग्रह इति प्राप्ते,—अन्या अन्या ऋचो भवन्तीति वचनादेकस्या द्विर्गानासंभवाद्द्वयोः प्रग्रथनमेवेति सिद्धान्तः ॥ ६ ॥

साम्ना स्तुवत इत्यस्यैव विधित्वाधिकरणं वर्णकान्तरसहितम् ॥ ७ ॥

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तत्परत्वात् ॥ ७ ॥

विकृतौ कचिदप्राकृतानि स्तोत्राणि विहितानि तेषु प्राकृतरथन्तरादिसाम्नामप्राप्तेर्यदृचा स्तुवत इति ऋङ्मात्रेण स्तुतिरिति प्राप्ते,—एवं विद्वान्साम्ना स्तुवीतेति प्रत्यक्षसामविधानाद्यदृचेत्यस्यार्थवादत्वात्साम्ना स्तुतिः न केवलयर्चेति सिद्धान्तः । यत्र त्वेकैव ऋक् प्रगीता ऽप्रगीता च पठिता तत्र प्रगीतैव ग्राह्या । यथा अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठत इति । अप्रगीतापाठस्तु स्वरूपावधारणार्थः । एवं वा त्रैस्वर्यचातुस्वर्याभ्यां शाखाभेदेनाम्नातमन्त्राणां कर्मणि तयोर्विकल्प इति प्राप्ते,—तानो यज्ञकर्मणीति स्मृतेस्त्वैकश्रुत्यं स्वराध्ययनं त्वर्थज्ञानार्थमिति सिद्धान्तः ॥ ७ ॥

रथन्तरमुत्तरयोर्गायतीत्यत्रोत्तरावर्णवशेन गानाधिकरणम् ॥ ८ ॥

सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ८ ॥

रथन्तरमुत्तरयोर्गायतीति योनिवर्णवशेनोत्तरयोर्गानं योनावेकारं निवर्त्योकारेकारौ पठितौ उत्तरयोरपि तत्स्थानगतं वर्णं निवर्त्योकारेकारावुच्चार्याविति । अतो नोह इति प्राप्ते,—एकारस्यैव संध्यक्षरस्य विश्लेषेण प्रदर्शनादुत्तरयोरपि यत्र स्थाने एकारस्तत्रैवायीभावः । ऋगक्षराभिव्यक्तार्थत्वात् । तस्मादुत्तरावर्णवशेनोह इति सिद्धान्तः ॥ ८ ॥

उत्तरयोः स्तोभातिदेशाधिकरणम् ॥ ९ ॥

स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ९ ॥

सामातिदेशे स्तोभानां न सः असामत्वादिति प्राप्ते,—सामाङ्गत्वात्तदतिदेशे तेषामप्यतिदेश इति सिद्धान्तः ॥ ९ ॥

स्तोभलक्षणाधिकरणम् ॥ १० ॥

अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ १० ॥

यदृगक्षरेभ्योऽधिकं विवर्णं च तत्स्तोभशब्देनोच्यते ॥ १० ॥

नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे
चोदनानुबन्धः समवायात् ॥ ११ ॥

नीवारादीनां व्रीह्यादिस्थानापत्तौ किं मानमिति शङ्कायामुच्यते—नीवाराणां व्रीहिकार्ये तन्दुलनिष्पत्तौ सामर्थ्यं प्रत्यक्षमेव चरोश्च पुरोडाशकार्ययागसाधनत्वम् । एवं मध्वशनं षडहाभावे तत्कार्यार्थतया विधानात्तत्स्थानापन्नम् । एवं नखानामुलूखलकार्यापत्तिः परिधौ पशुं नियुञ्जीतेति वचनाद्यूपस्थानापत्तिः । एवमिरापदस्य गिरापदस्थानापत्तिः न गिरागिरेति निषेधात् । अतस्तत्र तत्र प्राकृतधर्मोह इति सिद्धान्तः ॥ ११ ॥

परिधौ यूपधर्मानुष्ठानाधिकरणम् ॥ १२ ॥

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥ १२ ॥

परिधौ न यूपधर्माः परिधानार्थस्यैव पशुनियोजनोपकारित्वात् अतः खलेवाल्यामिवात्रापि नेति प्राप्ते,—अन्यार्थस्यापि नियोजनाङ्गत्वात्प्रोक्षणपरिव्याणादिधर्मान्वयः तेषां साधनद्वारा नियोजनाङ्गत्वात् । छेदनादीनां त्वसंभवाल्लोप इति सिद्धान्तः ॥ १२ ॥

भृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १३ ॥

परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ १३ ॥

अभ्युदयेष्टौ दधिघृतयोः प्रणीताकार्ये विध्यभावात्प्रणीताधर्माकरणमिति प्राप्ते,—विध्यभावेऽपि साधनत्वसत्त्वात्तन्निवेशिनो धर्माः कार्या इति सिद्धान्तः ॥ १३ ॥

बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १४ ॥

एकार्थत्वादविभागः स्यात् ॥ १४ ॥

रथन्तरे प्रस्तूयमाने संमीलयेद् बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये-

दित्यादयो धर्मा उभयोः संकीर्णाः कार्याः एकपृष्ठापूर्वसाधनत्वात् व्रीहिधर्मा यवेष्विव। न च शूरचित्रादिप्रकारभेदान्नैकसाधनत्वं व्रीहिस्रुवादेरिवेति वाच्यम्। अक्षराभिव्यञ्जकत्वरूपसाधनत्वप्रकारैक्यात् शूरत्वादिप्रकारभेदस्य ऋक्साधनत्वान्तर्गतस्य सामसाधनतायामनन्तर्भावादिति प्राप्ते,—रथन्तरे बृहतीति च निर्देशभेदात्तत्स्वरूपविवक्षाया अवगमाद्धर्मव्यवस्था। किञ्च रथन्तरबृहत्साध्यं नैकं पृष्ठस्तोत्रं किंतु भिन्नं तयोश्च भिन्नार्थयोर्वचनवशाद्विकल्पः। तस्मान्न धर्मसाङ्कर्यमिति सिद्धान्तः॥ १४॥

कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम्॥ १५॥

## अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्॥ १५॥

वैश्यस्तोमे कण्वरथन्तरं पृष्ठं भवतीति बृहद्रथन्तरयोः स्थानापन्नं कण्वरथन्तरं तद्धर्मान्विकल्पेन गृह्णाति प्रकृतिवदिति प्राप्ते,—द्वयोः कार्ये विधानात्समुच्चयेन धर्मानुष्ठानं प्रकृतौ तु निर्देशाद्व्यवस्थेति भाष्यकारः। कण्वरथन्तरं द्वयोः कार्ये विहितमपि यथाप्राप्तयोः कार्ये विधानात्प्राप्तेश्च वैकल्पिकत्वात्कदाचित्कस्यचिद्धर्मान् गृह्णाति न सर्वदा सर्वान् अतो विकल्प एवेति तु वार्तिककृत्॥ १५॥

द्विसामके बृहद्रथन्तरधर्मव्यवस्थाधिकरणम्॥ १६॥

## उभयसाम्नि चैवमेकार्थापत्तेः॥ १६॥

यत्र तु संसव उभे कुर्यादित्यादौ बृहद्रथन्तरयोः समुच्चयस्तत्रोभयधर्माणामुभयत्रानुष्ठानं द्वयोः संहत्यैककार्यजनकत्वादिति प्राप्ते,—विकल्पेन प्राप्तयोः समुच्चयमात्रविधानान्नैककार्ये सामद्वयविधिः। अतो धर्माणां व्यवस्थैवेति सिद्धान्तः॥ १६॥

सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम्॥ १७॥

## पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि॥ १७॥

दर्शपूर्णमासयोः स्रुवेण पार्वणौ जुहोतीति होमौ पर्वदैवत्यौ आरादुपकारकौ विकृतिष्वतिदिश्येते इति प्राप्ते,—दानार्थस्य पृणातेः कर्मण्यपि भावव्युत्पत्या मुख्यत्वात्प्रकरणात्कर्मसमुदायस्य देवतात्वं तत्संस्कारकौ च होमौ विकृतिषु संस्कार्याभावान्न कार्यौ अधिकरणव्युत्पत्या कालदैवत्यत्वे त्वारादुपकारकत्वं दुर्बलमिति सिद्धान्तः॥ १७॥

दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ॥ १८ ॥

उभयोरविशेषात् ॥ १८ ॥

एतौ च होमौ सूक्तवाकन्यायेन पौर्णमास्याममावास्यायां च विभज्य कार्याविति प्रयोजनमुक्तम् ॥ १८ ॥

प्रयाजनामारादुपकारकत्वाधिकरणम् ॥ १९ ॥

प्रयाजेऽपीति चेत् ॥ १९ ॥

समिधो यजतीत्यादीनां कर्मसंबन्धिसमिदादीन्देवतात्वेनोद्दिश्य तत्संस्कारार्थयागविधित्वमिति प्राप्ते,—देवतायाः त्यागकर्मत्वायोगाद्धितीयानुपपत्तेः उद्देशांशकर्मत्वस्य त्यागे विधावुपचारायोगाद्यागमात्रविधिः समिदादिशब्दास्तु मन्त्रप्राप्तदेवतानुवादिन इति लक्षणाप्यनुवादे न दोषः । तस्मादारादुपकारका एव प्रयाजा इति सिद्धान्तः ॥ १९ ॥

इति श्रीन्यायबिन्दौ नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## नवमाध्यायस्य तृतीयः पादः ।

---

विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् ॥ १ ॥

प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

अग्नये जुष्टं निर्वपामि व्रीहीणां मेध इत्येतौ मन्त्रौ प्रकृतिवदेव विकृतौ सौर्यादौ पठनीयौ सूर्यादिप्रकाशकत्वरूपेणैव विवक्षा न स्वरूपतः अदृष्टार्थत्वापत्तेः । अतो विकृतौ प्रकृतिवद्देवताप्रकाशकपदोच्चारणस्योहेनैव सिद्धिः । एवं व्रीह्यादिपदस्थाने नीवारादिपदोहः, ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुक्तेति वैषम्यमिति सिद्धान्तः ॥ १ ॥

पौण्डरीकहविःषु स्तरणमन्त्रस्योहाधिकरणम् ॥ २ ॥

जातिनैमित्तकं यथास्थानम् ॥ २ ॥

पौण्डरीकानि बर्हींषि भवन्तीति कचिच्छ्रुतम् । तत्र दर्भैस्तृणीत हरितैरिति प्राकृतमन्त्रे दर्भस्थाने यथा पुण्डरीकपदोहस्तथा हरितपदस्थाने न रक्तपदोहः प्रकृतौ दर्भशब्देनैव प्रकाशनसिद्धेर्हरितशब्दस्यादृष्टार्थत्वादिति प्राप्ते,—गुणद्वारेण द्रव्यप्रकाशनसंभवे दृष्टार्थत्वायोगाद्रक्तपदोह इति सिद्धान्तः ॥ २ ॥

अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्ताधिकरणम् ॥ ३ ॥

लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादविभागित्वात् ॥ ३ ॥

यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयादिति यूपस्पर्शप्रायश्चितं लौकिके वैदिके चाविशेषात्प्रकरणाद्वा वैदिक एव फलाकल्पनलाघवादिति प्राप्ते,—स्पर्शनिषेधस्य लौकिकविषयत्वात्तद्दोषपरिहाराय प्रायश्चित्तमपि तत्रैवेति सिद्धान्तः ॥ ३ ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तवद्विवचनान्तपदयोर्द्विर्वचनान्तेनोहाधिकरणम् ॥ ४ ॥

अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ ४ ॥

पशौ अदितिः पाशं प्रमुमोक्त्वेतं, अदितिः पाशान्प्रमुमोक्त्वेतानिति मन्त्रौ द्विपशुकेष्वप्यतिदिष्टौ तत्रैकवचनान्ते द्विवचनोहप्रसंगात् बहुवचनान्तस्य त्वसमवेताभिधायित्वादनूहेन तस्यैव प्रवृत्तिरित्येकः पक्षः। प्रथमस्योहेन संख्याविशिष्टपाशप्रकाशनार्थमूहितस्य प्रयोगः द्वितीयस्य तु पाशमात्रप्रकाशकस्यासमग्रत्वादप्रवृत्तिरिति द्वितीयः। अतिदेशप्राप्तयोरूहेनानूहेन च विकल्पेन प्रयोग इति तृतीय इति प्राप्ते,—उभयोरूहेन प्रवृत्तिरिति सिद्धम्। बहुवचनस्यापि छन्दसि एकस्मिन्प्रयोगात्समर्थत्वात् द्वयोस्त्वसामर्थ्याद्युक्त एवोह इति ॥ ४ ॥

अग्नीषोमीयपशौ पाशैकत्वबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् ॥ ५ ॥

विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥ ५ ॥

प्रकृतौ बहुवचनान्तः पाशमन्त्रोऽसमर्थत्वात्पशुगणेषूत्कृष्यत इति प्राप्ते,—प्रधानप्रातिपदिकार्थप्रकाशनसिद्धेर्गुणभूतसंख्यावशेन नोत्कर्षः किंत्वेकस्मिन्बहुवचनं छान्दसत्वेन नेयमिति सिद्धान्तः ॥ ५ ॥

द्विपत्नीके दर्शपूर्णमासे पत्नीं संनह्येत्यस्यानूहाधिकरणम् ॥ ६ ॥

अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ ६ ॥

दर्शपूर्णमासयोः पत्नीं सन्नह्येति मन्त्रो द्विबहुपत्नीकप्रयोगयोरूहीतव्य एकपत्नीके समवेताभिधायित्वादिति प्राप्ते,—सर्वप्रयोगाणां समानत्वात्तद्विषयस्य मन्त्रस्य समवेतार्थत्वायोगान्निर्देशमात्रार्थत्वेन नोह इति सिद्धान्तः ॥ ६ ॥

विकृतियागेऽपि द्विपत्नीके मन्त्रानूहाधिकरणम् ॥ ७ ॥

## विकृतौ चापि तद्वचनात् ॥ ७ ॥

विकृतौ पत्नीशब्दो नैकवचनान्त आम्नातः अतः पत्नीद्वित्वादावूहितव्य इति प्राप्ते,—प्रकृतावसमर्थस्य नोहः द्वयोरेकवचनस्य छान्दसत्वान्नासाधुत्वं, पाशे च द्वयोर्बहुवचनं न छान्दसमिति विशेष इति सिद्धान्तः॥७॥

सवनीयपशूनां समानविधानत्वे प्रास्मा अग्निमिति मन्त्रेऽनूहाधिकरणम् ॥ ८ ॥

## अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ ८ ॥

संस्थापशूनां सामानविध्यपूर्वपक्षे द्विबहुपशुके सवनीयगणे प्रास्मा इत्यध्रिगुप्रैषगतमेकवचनान्तं पत्नीशब्दवदेव नोहितव्यमिति प्रयोजनं सिद्धान्ते तूह इति प्रसङ्गादुक्तम् । प्रास्मा इति पुल्लिङ्गं त्वत्यन्तानुपपत्तेर्न सारस्वत्यां प्रवर्तत इति वैषम्यम् ॥ ८ ॥

नीवाराणां व्रीहिप्रकृतित्वे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

## प्रतिनिधौ चाविकारात् ॥ ९ ॥

नीवारादिप्रतिनिधौ व्रीहिपदस्यासामर्थ्यादूह प्राप्तौ,—नीवारादिगतव्रीह्यंशानामेव साधनत्वान्नोह इति सिद्धान्तः ॥ ९ ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादितिमन्त्राणामनूहाधिकरणम् ॥ १० ॥

## संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ १० ॥

अध्रिगुप्रैषे सूर्यं चक्षुर्गमयतादित्यादौ द्विबहुपशुकेषु द्विबहुवचनोहः एकवचनस्य प्रकृतौ चक्षुषस्तेजस्त्वेन जलवत्संसर्गितया स्वरूपतः संख्यानर्हत्वेन पशूपाधिकत्वात् अधिष्ठानौपाधिकत्वे द्वित्वापत्तेः अतः पशुसंख्यावशेनोह इति प्राप्ते,—अधिष्ठानान्निर्गतं तेज एकीभवतीत्यभिप्रायमेकवचनं न त्वधिष्ठानाभिप्रायं तयोः सूर्यगमनायोगात् द्वित्वाच्च । अतः पशुभेदेऽपि उक्तैक्यसंभवादनूह इति सिद्धान्तः ॥ १० ॥

द्विपशुकेऽध्रिगुप्रैषे एकधेतिशब्दस्याभ्यासाधिकरणम् ॥ ११ ॥

## एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ११ ॥

अध्रिगुप्रैष एकधास्य त्वचमाच्छ्यतादित्येकधाशब्द एकप्रयत्नसाध्यार्थकत्वात्तस्य च बहुपशुकायां विकृतौ बह्वीनां त्वचां तदसंभवेऽपि देशकालसाहित्याभिप्रायेण सकृदेव प्रयोज्य इति प्राप्ते,—प्रकृतौ यत्प्रकाशकत्वं तदेव विकृताविति सकृत्पाठे तदसंभवादभ्यास एवेति सिद्धान्तः ११

द्विपश्वादिविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १२ ॥

मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्याय्यानिगदत्वात्सर्वत्रैवाधिकारः स्यात् ॥ १२ ॥

तत्रैव मेधपतिभ्यां मेधमिति श्रुतं केषांचित्तु मेधपतये मेधमिति, तत्र मेधस्यपशोः पतिर्यजमानः देवताभूतौ चाग्नीषोमावुभयत्र वाच्यौ तेन द्विवचनैकवचनयोर्द्वयोरप्यसमर्थत्वादनूहः । अथवा द्विवचनान्तो देवतावचनत्वात्तद्विवृद्धावूहनीयः अन्यस्तु यजमानविवृद्धाविति । यद्वा वचनभेदेऽपिमन्त्रैक्यात्तस्य च नियतार्थत्वौचित्यादेवतापरत्वे चैकवचनानुपपत्तेर्यजमानपरत्वमेव । द्विवचनं तु पत्न्यभिप्रायम् । अतो द्वावपि यजमानवशादूहितव्याविति प्राप्ते,—मेधमाशासाना इत्युक्ते किमर्थमित्याकाङ्क्षायां मेधपतिभ्यामिति संवध्यते । तेन देवतावचनत्वात्तस्य चैक्येनैकवचनम् । द्विवचनं त्वधिष्ठानापेक्षम् । अतस्तत्संख्यावशात्तदूहः देवतासंख्यावशात्त्वेकवचनोह इति सिद्धान्तः ॥ १२ ॥

वहुदेवत्यपशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥ १३ ॥

नियमो वा वहुदेवते विकारः स्यात् ॥ १३ ॥

वैश्वदेवादिवहुदैवत्ये एकवचनासामर्थ्यादूहः इति शङ्कायां देवतात्वैक्यात्प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमुक्तम् ॥ १३ ॥

एकादशिन्यामेकवचनान्तमेधपतिशब्दोहाधिकरणम् ॥ १४ ॥

अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥१४॥

पशुगणे तु गणाभिप्रायेणैकवचनानूहं मन्वानस्योत्तरं देवतारूपभेदे ऊह एव तदैक्ये परं नानूह इति सिद्धान्तः ॥ १४ ॥

इति श्रीन्यायविन्दौ नवमाध्यायस्य तृतीयः पादः ॥ १ ॥

## नवमाध्यायस्य चतुर्थः पादः ।

षड्विंशतिरस्य पङ्क्तय इत्यादौ समस्योहाधिकरणम् ॥ १ ॥

षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभक्तत्वादधिकारे हि तासामकार्त्स्न्येनाभिसंवन्धोविकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

तत्रैव षड्विंशतिरस्य वङ्क्रय इति श्रुतम् । वङ्क्रय आन्त्राणि पार्श्वद्वय-

गतानि । तत्र षड्विंशतिसंख्यायाः पशुसंबन्धप्रकाशनाय पशुगणे षड्विंशतिपदमस्यपदं चावर्त्तनीयमिति मुख्यः पूर्वः पक्षः । द्वितीयस्तु अकरणभूतोऽयमदृष्टार्थो मन्त्रस्तस्मादविकार इति । अथवा अवदानोद्धरणाय तत्साकल्यस्मृत्यर्थो मन्त्रस्तेन सकलसंख्याप्रकाशनाय पशुद्वये षड्विंशती इति अनयोरिति च द्विवचनमूह्यं पार्श्वभेदेन तद्वित्वात् । यद्वा विहितत्वात्पशुः प्रधानमिति प्रत्येकं संख्यावोधनायास्य पदमात्राभ्यास इति प्राप्ते,—अन्यूनावदानोद्धरणाय वङ्क्रीयत्तायाः प्राधान्येन प्रकाश्यत्त्वात्सर्वपशुवंक्रीणां समस्य संख्याभिधानमिति द्विपञ्चाशदनयोर्वङ्क्रय इत्याद्यूह इति सिद्धान्तः ॥ १ ॥

चतुस्त्रिंशद्वाजिन इत्यनेनाश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ॥ २ ॥

## अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ २ ॥

अश्वमेधे चतुस्त्रिंशद्वाजिनो देववन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेतीति मन्त्रपाठः । न चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूयादिति च श्रुतम् । तत्र गिरापदवच्चतुस्त्रिंशदिति वाधित्वा षड्विंशतिरित्येव सदा वाच्यमिति प्राप्ते,—इरापदस्य न गिरेति निषेधाननुवादकत्वेन गिरापदस्थाने विधानाद्युक्तं नित्यत्वम् । इह तु षड्विंशतिरित्येवेत्येवकारोपहतविधित्वात् 'न चतुस्त्रिंशत्' इति प्रतिषेधस्यैव विधिः तेनेतरोऽनुवादः । शास्त्रप्राप्तनिषेधाच्च विकल्प इति सिद्धान्तः ॥ २ ॥

आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशदित्यनेन समस्ताया एव ऋचोनिषेधाधिकरणम् ॥ ३ ॥

## तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ ३ ॥

न चतुस्त्रिंशदित्यनेन चतुस्त्रिंशत्पदं प्रतिषिध्य वैशेषिकमन्त्र एव षड्विंशतिपदं निक्षिप्यते न तु समस्तमन्त्रनिषेधः तेनातिदेशप्राप्तमन्त्रनिवृत्तिरिति प्राप्ते,—एवकारवशेन षड्विंशतिविध्यसंभवाच्चतुस्त्रिंशन्निषेधे चैतदनुवादायोगात्समस्तमन्त्रनिषेध एव षड्विंशतिरिति त्वनुवाद इति सिद्धान्तः । एवं च प्राकृतमन्त्रेऽश्वविषये न समस्य वचनं षड्विंशतिरित्येवेति वचनादिति कश्चित्तदयुक्तम् । निषेधमात्रे तात्पर्यात् षड्विंशतिरित्यनुवादस्य यथाप्राप्तपरत्वात् । अतः समस्तवचनमेव । तच्च तूपरगोमृगयोरपि सत्त्वात्षडशीतिरेषां वङ्क्रय इति पक्षे च चतुस्त्रिंशदितिमन्त्र इति सिद्धान्तः ॥ ३ ॥

अग्नीषोमीयपशावुरूकशब्देन वपाद्रव्याभिधानाधिकरणम् ॥ ४ ॥

## वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ ४ ॥

वनिष्ठुमस्य माराविष्टोरूकं मन्यमाना इत्यत्र उरूकशब्देन रलयोरेकत्वादुलूकाभिधानात्तत्सादृश्यबुद्धया वनिष्ठोरवयवविशेषस्य लवनप्रतिषेध इति प्राप्ते,—उरू विस्तीर्णं कं मांसमिति वपाभिधानम्। वपोद्धरणकाले सन्निधानाद्भ्रान्त्या वनिष्ठोर्लवनं प्राप्तं निषिध्यते, तस्माद्वपाविवृद्धावूह इति सिद्धान्तः ॥ ४ ॥

अग्निगौ प्रशसावाहू इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् ॥ ५ ॥

## प्रशसाऽस्यभिधानम् ॥ ५ ॥

प्रशसा बाहू कृणुतादिति प्रशसेति तृतीयान्तमस्यभिधानमसिना बाहू छेत्तव्याविति प्राप्ते,—स्वधितेरङ्गत्वात्प्रशसेति प्रशस्तावित्यर्थकम्। अतो बाहुविवृद्धावूह इति सिद्धान्तः ॥ ५ ॥

अग्निगौ श्येनमस्येत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ॥ ६ ॥

## श्येनशलाकच्छपकवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ ६ ॥

श्येनमस्य वक्षः कृणुतादिति श्येनसदृशमित्यर्थः तेन कर्तनाद्युपायेन श्येनाकृति वक्षः कार्यमिति प्राप्ते,—एवं सत्यदृष्टार्थतापत्तेः कर्तनेन हविर्नाशाच्च वक्षःसाकल्यमत्र विवक्षितम्। सकलस्य श्येनसदृशत्वात्। एवञ्च दृष्टार्थता भवति, तथा शलादोषणी शलाकाकारौ हस्तौ कच्छपेवांसौ कूर्माकारावित्यर्थः। कवषोरू कपाद(?)सदृशौ खट्वासदृशौ वा ऊरू अष्ठीवन्तौ ऊर्वोः पूर्वभागौ स्रेकपर्णौ करवीरपत्रसदृशावित्यपि साकल्यपरमेवेति सिद्धान्तः ॥ ६ ॥

दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ॥ ७ ॥

## प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ ७ ॥

अग्निहोत्रे अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो अहुतेऽग्निहोत्र उद्वायादिति श्रुतम्। उद्वानं नाशः तस्मिन्निमित्ते इदं कर्म आरादुपकारकमग्निहोत्रस्य, निमित्तस्य च प्रकरणेन विशेषणायोगाद्दर्शाद्यर्थोद्धृतस्याग्नेरुद्वानेऽपि निमित्तसत्त्वादिष्टिः कार्येति प्राप्ते,—अग्निसंबन्ध्युद्वानस्यावयवशः सर्वदा सत्त्वान्न निमित्तत्वम्, अग्निव्याप्तता तु नोद्वानस्य निमेषादिगतस्यापि तस्मादुद्वानव्याप्ताग्नेर्निमित्तता। एवञ्च

तदुत्पत्त्यर्थेयमिष्टिरग्निहोत्राङ्गम् । अग्निहोत्रार्थस्य चाग्नेरुद्धानस्योत्पादिका तदङ्गं नान्यार्थस्य तस्माद्दर्शायोद्धृताग्नेरुद्धाने नैतत्प्रायश्चित्तमिति सिद्धान्तः ॥ ७ ॥

धार्योद्धाने प्रायश्चित्तरूपज्योतिष्मत्यनुष्ठानाधिकरणम् ॥ ८ ॥

धारणे च परार्थत्वात् ॥ ८ ॥

धार्या गतश्रिय आहवनीय इति श्रुतम् । गतश्रियः प्राप्तलक्ष्मीकस्य तत्राग्निहोत्रकाले एतदुद्धानेऽपि कर्तव्येष्टिरिति प्राप्ते,—अन्यार्थमुद्धृतस्य । गतश्रीत्वेन निमित्तेन धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोति अतोऽग्निहोत्रार्थोद्धृतस्योद्धानाभावान्नेष्टिरिति सिद्धान्तः ॥ ८ ॥

दर्शार्थोद्धरणस्यामन्त्रकत्वाधिकरणम् ॥ ९ ॥

न तूत्पन्ने यस्य चोदना अप्राप्तकालत्वात् ॥ ९ ॥

दर्शार्थोद्धरणस्याप्यग्निहोत्रोपकारकत्वात्तदङ्गभूतोद्धरणमन्त्रो वाचात्वा होत्रेत्यादिः प्रयोक्तव्यः साधननिवेशित्वाद्धर्माणां कालाभावेऽपि च न मन्त्रस्य लोपः । अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणम् । अन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यापत्तेरिति प्राप्ते,—अनुपादेयत्वेन कालत्यागायोगादकालकृतस्य निष्फलत्वान्नाग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वेति सिद्धान्तः ॥ ९ ॥

प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ॥ १० ॥

प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥१०॥

आदित्यः प्रायणीयः पयसि चरुरिति श्रुतम् । तत्र चरोर्देवतासंबन्धस्य पयसश्चरुसंबन्धस्य च विधौ वाक्यभेदापत्तेर्द्रव्यद्वयविशिष्टदेवतासंबन्धविधिः । आधारत्वं तु पयसः सहश्रपणादर्थसिद्धमिति प्राप्ते,—पयस्यादित्यश्चरुरित्यधिकरणद्रव्योभयविशिष्टदेवतासंबन्धविधौ वाक्यभेदाभावात्पयसो न प्रदेयत्वम् । अतो न वत्सापाकरणादिभिः पयः संबध्यते, किंतु प्रणीताधर्मैरेवेति सिद्धान्तः ॥ १० ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ११ ॥

अभ्युदितेष्टौ दधनि चरुं शृते चरुमिति सप्तमीश्रुतेः पूर्ववत्प्रदेयधर्मा न कार्या इति प्राप्ते,—कर्मान्तरविध्यभावेन प्राप्ते कर्मणि तण्डुलानां देवतान्तरसंबन्धो दधिशृतयोश्च प्रणीतार्थतेति वाक्यभेदात्तयोरपि

देवतान्तरसंवन्ध एव विधीयत इति कार्या एव प्रदेयधर्मा इति सिद्धान्तः ॥ ११ ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्मानंनुष्ठानाधिकरणम् ॥ १२ ॥

## अपनयो वा अर्थान्तरे विधानाच्चरुपयोवत् ॥ १२ ॥

यः पशुकामः स्यात्सोमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुमित्यत्राभ्युदयेष्टिवदेव दधिपयसोः प्रदेयत्वशङ्कायामिहापूर्वकर्मविधानाद्वाक्यभेदाभावेन श्रपणार्थतैव दधिपयसोर्न तु प्रदेयत्वमिति सिद्धान्तः ॥ १२ ॥

ज्योतिष्टोमे श्रपणानां प्रदेयधर्मानंनुष्ठानाधिकरणम् ॥ १३ ॥

## श्रयणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ १३ ॥

सोमे पयसा मैत्रावरुणं श्रीणातीति पयसः सोममिश्रणं प्रदानार्थं दृष्टार्थत्वात्। सोमसंस्कारार्थत्वे त्वदृष्टार्थता स्यादिति प्राप्ते,—द्वितीयाश्रुतिवशाददृष्टकल्पने दोषाभावान्न पयसः प्रदेयत्वमिति सिद्धान्तः ॥ १३ ॥

अश्वमेधे ईशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम् ॥ १४ ॥

## पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ १४ ॥

अश्वमेधे ईशानाय परस्वत आलभत इति प्रकृत्य पर्यग्निकृतानारण्यानुत्सृजतीति श्रुतम्। तत्रालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते इतरत्र पर्यग्निकरणविशिष्टस्त्यागः। पूर्वत्र यागविधौ तूत्तरानर्थक्यं यागविधिनैवोत्सर्गप्राप्तेः पर्यग्निकरणस्य चातिदेशप्राप्तेः, तदुत्तरत्वस्याप्युत्सर्गे तेनैव प्राप्तेरानन्तर्यस्य चाशाब्दत्वात्। न च क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वं तस्य सिद्धवदुपसर्जनत्वेन निर्देशात्। पर्यग्निकरणान्ताङ्गरीतेरपि प्राप्तत्वादेव न विधिः, उत्तरपदार्थनिषेधश्चाशाब्दः, एवं पर्यग्निकरणकालोऽपि कालेन च कालान्तरं निवर्त्तेत नाङ्गान्तराणि। तेन सर्वाङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले न कर्तुं शक्येत तस्मादुत्तरवाक्य एव यागविधिरिति प्राप्ते,—देवतासंबन्धस्य यागं विनाऽनुपपत्तेः पूर्वत्रैव यागविधिः उत्तरत्र तु क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गरीतिविधानादपूर्वत्वमिति न वैयर्थ्यमिति सिद्धान्तः ॥ १४ ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ॥ १५ ॥

## आज्यसंस्था प्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥ १५ ॥

त्वाष्ट्रं पात्नीवतमालभेतेति पर्यग्निकृतं पात्नीवतमुत्सृजतीति आज्येन शेषं संस्थापयतीति च श्रुतं तत्रोत्सृष्टपशुप्रतिनिधित्वेनाज्यविधिः । न च पर्यग्निकरणान्ताङ्गविधिना शेषाभावादनुपपत्तिरिति वाच्यं, एतदनुपपत्त्यैव पूर्ववाक्ये पर्यग्निकृतावस्थायां पशुपरित्यागविधिः तत्प्रतिनिधित्वेन चाज्यविधिरिति स्वीकारादिति प्राप्ते,—पशुपरित्यागे तस्य देवतासंबन्धायोगात्तदभावे चाग्नीषोमीयाङ्गातिदेशाभावात्पर्यग्निकृतोत्सर्गशेषसंस्थापनानुपपत्तिः पशोर्देवतासंन्वधेतु व्यर्थः प्रतिनिधिः । तस्मात्कर्मान्तरविधिरेवाज्येन शेषमित्यत्र । न च देवताभावः पात्नीवतपदानुषङ्गात् । शेषशब्दश्च पूर्वयागस्य पर्यग्निकरणमात्रे समापनादाज्ययागस्तच्छेष इवेत्युपचारादिति सिद्धान्तः ॥ १५ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ नवमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ४ ॥

---

## दशमाध्यायस्य प्रथमः पादः ।

---

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ॥ १ ॥

### विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रुतम् । अत्र कृष्णलेष्वप्यवघातः कर्तव्योऽतिदेशप्राप्तत्वात् अचरौ चरुशब्दस्य तद्धर्मविधानार्थत्वाच्च । अतो लुप्तार्थोऽप्यवघातो वचनात्कार्य इति प्राप्ते,—करणस्योपकाराकाङ्क्षायां सादृश्येन प्राकृतोपकाराणां प्रथममतिदेशः तत्पृष्ठभावेन तु पदार्थानां तेनोपकारलोपे तज्जनकपदार्थस्य नातिदेश इति नावघातः कार्यः । चरुशब्दस्तु धर्मान्तरैर्वैशद्येन चोपपत्तेः श्रपणंतु घृते श्रपयतीति वाचनिकमिति वैषम्यमिति सिद्धान्तः । एवं वा वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेत् इदमहममुं चामुं च व्यूहामीति यं द्विष्यात्तं ध्यायेत् यदन्यो विमृद्येयच्च स्फ्य आश्लिष्येत्तद् विष्णव उरुक्रमायावद्यतीति श्रुतम् । अत्र वैश्वदेवावाहनकाले विष्णोरप्यावाहनं कार्यमन्यथा विष्णुयागवैगुण्यादिति प्राप्ते,—निमित्तानिश्चये नैमित्तिकानिश्चयान्न तदर्थमावाहनं विधीयते अतो न कार्यमिति सिद्धान्तः ॥ १ ॥

दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् ॥ २ ॥

### इष्टिरारंभसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ २ ॥

सोमाङ्गदीक्षणीयादिषु चोदकप्राप्तेरारम्भणीया कार्येति प्राप्ते,—आरम्भद्वारेण तस्या अङ्गत्वात्तस्य च दीक्षणीयादावभावान्न कर्तव्येति सोमस्य हि तत्रारंभो न दीक्षणीयायाः पृथगिति सिद्धान्तः ॥ २ ॥

अनुयाजादिष्वारम्भणीयाबाधाधिकरणम् ॥ ३ ॥

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ३ ॥**

राजसूयेष्टीनामपि प्रधानत्वेनारम्भसत्त्वादारम्भणीया कार्येति प्राप्ते, आरम्भस्येष्टिपशुसोमव्यासक्तत्वेनेष्टिमात्रसंबन्धित्वाभावाद्द्वारलोपेन न कार्येति सिद्धान्तः ॥ ३ ॥

आरम्भणीयायां तद्बाधाधिकरणम् ॥ ४ ॥

**तस्यां तु स्यात्प्रयाजवत् ॥ ४ ॥**

आरम्भणीयायाः प्रयोगवर्हिभावात्स्वतन्त्रारम्भसत्त्वेन तत्रातिदेशप्राप्ता कार्येति प्राप्ते,—तत्काले दर्शाङ्गत्वेनाज्ञातत्वान्नातिदेश इति न कार्येति सिद्धान्तः ॥ ४ ॥

खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

**कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥५॥**

साद्यस्के श्रुतं खलेवाली यूपो भवतीति तत्र यूपं छेत्स्यता होतव्यमिति यूपाहुतिः प्राकृती कर्तव्येति प्राप्ते,—तस्याश्छेदनार्थत्वात्तस्य चेहाभावान्न कार्येति सिद्धान्तः ॥ ५ ॥

साद्यस्के स्थाण्वाहुतिबाधाधिकरणम् ॥ ६ ॥

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ ६ ॥**

स्थाण्वाहुतिं जुहोतीत्याहुतिराराद्दुपकारिका खलेवाल्यां कार्येति प्राप्ते,—यूपच्छेदनार्थस्थाणुद्वारेण यूपसंस्कारिका द्वाराभावान्न कार्येति सिद्धान्तः ॥ ६ ॥

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ॥ ७ ॥

**प्रयाजे च तन्न्यायत्वात् ॥ ७ ॥**

दर्शपूर्णमासयोः स्वाहाकारं यजतीति पञ्चमः प्रयाज आराद्दुपकारकः स्वाहाकारदेवताया अन्यत्रोपयोगादर्शनादिति प्राप्ते,—स्वाहाग्निमित्यादिमन्त्रसंबन्धात् स्वाहाकारमिति नामधेयं देवता तु मान्त्रवर्णिकी अग्न्यादिः सा चाज्यभागादिषु विनियुक्तेति तत्स्मरणार्थोऽयं यागः, अतः सौर्यादिष्वग्न्यादिपदबाध इति सिद्धान्तः ॥ ७ ॥

अग्नियागस्यारादुपकारकत्वाधिकरणम् ॥ ८ ॥

### तथाज्यभागाग्निरपीति चेत् ॥ ८ ॥

आग्नेयाज्यभागः प्रधानदेवतायाः अग्नेः स्मारक इति प्राप्ते, अग्निमावहेत्यादिनिगदे अग्निशब्दस्य द्विः पाठात्सोमात्पूर्वं पठ्यमानस्य प्रधानाग्नेरन्यत्वावगमात्सोमसाहचर्याच्चाङ्गत्वेनैव विधिः, अतः सौर्यादौ नाग्निनिवृत्तिरिति सिद्धान्तः ॥ ८ ॥

पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम् ॥ ९ ॥

### पशावपीति चेत् ॥ ९ ॥

अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति पुरोडाशः पशोरारादुपकारकस्तद्धितेन देवताया गुणत्वावगमादिति प्राप्ते,—पशुदेवतास्मरणरूपदृष्टसंभवेऽदृष्टकल्पनायोगात्तद्द्वारेणैव पश्वङ्गमिति देवतान्तरवत्यां विकृतावग्नीषोमनिवृत्तिरिति सिद्धान्तः ॥ ९ ॥

सौर्यंचरौ चरुशब्दस्यौदनवाचित्वाधिकरणम् ॥ १० ॥

### चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ १० ॥

सौर्यं चरुमित्यत्र चरुशब्दः स्थाल्यां लोकप्रसिद्धः सन्नोदने लक्षणया याज्ञिकप्रयोगः, तैरपि कपालादिश्रपितस्य चरुशब्देनाव्यवहारात् स्थाली च कपालस्थाने हविष्ट्वायोग्यत्वात् । तद्धितश्च परम्परासंबन्धे, अथवा तद्धितबलादभक्ष्येणापि कृष्णलादिनेव यागः कार्यः, अतः स्थाल्येव हविरिति प्राप्ते,—आदित्यचरोरदितिमोंदतेनेनेति वाक्यशेषादोदन एव चरुपदार्थ इति, शास्त्रस्था वा तन्निमित्तत्वादित्यत्रोक्तम् । ओदनश्चानवस्रावितांतरूष्मपक एव याज्ञिकव्यवहाराद्वाच्यः स च स्थालीनियत इति तदादरः न तु तद्वचने सतीति सिद्धान्तः ॥ १० ॥

सौर्यंचरोः स्थाल्यामेव पाकाधिकरणम् ॥ ११ ॥

### स कपाले प्रकृत्यास्यादन्यस्य चाश्रुतत्वात् ॥ ११ ॥

एतत् प्रयोजनसूत्रम् । एवं सति हि कपालनिवृत्तिः अन्यथा तस्योदकधारणरूपमप्राकृतं कार्यं स्यात् । अथवा पेषणादीनां संभवादनुष्ठानमिति शङ्कायां प्रयोजनाभावादकरणमित्युच्यते । याज्ञिकास्तु कपालवत्स्थाल्या उपधानं मन्त्रेण कुर्वन्ति तदयुक्तम् । स्थाल्या उदकधारणार्थत्वेन कपालकार्ये विधानाभावादिति सिद्धान्तः ॥ ११ ॥

इति श्रीन्यायबिन्दौ दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

# दशमाध्यायस्य द्वितीयः पादः ।

कृष्णलचरौ पाकाद्यनुष्ठानाधिकरणम् ॥ १ ॥

## कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

कृष्णलेष्वशक्यत्वात् घृते श्रयपतीति विहितोऽपि पाको न कार्य इति प्राप्ते,—वचनबलाल्लक्षणया उष्णीकरणमात्रमदृष्टार्थं कर्तव्यमिति सिद्धान्तः ॥ १ ॥

कृष्णले उपस्तरणाभिघारणाभावाधिकरणम् ॥ २ ॥

## उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ २ ॥

उपस्तरणाभिघारणे कृष्णलेष्वपि कार्ये अमृताहुतिमेवैनां करोतीति तयोः स्वादिमार्थत्ववचनमर्थवादमात्रमिति न लुप्तार्थता, न च तयोश्चतुरवत्तसंपत्तिः फलं तत्तु चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्यास्या इति कृष्णलचतुष्ट्वेनैव सिद्धमिति वाच्यम्, तस्य स्तुतिमात्रत्वात् । अन्यथा द्विरवदानमपि न स्यात् तस्य प्रकृतौ चतुरवत्तसिद्ध्यर्थत्वात् तत्र चत्वारि चत्वारीति वीप्सानुपपत्तिः । विधाने तु वाक्यं भिद्येतेति प्राप्ते,—स्रुच्यसंसर्गार्थमुपस्तरणाभिघारणं दृष्टार्थत्वात्तदभावात्कृष्णलेषु न भवति । चतुरवत्तं त्वविवक्षितमर्थसिद्धानुवादत्वाच्चतुःशब्दस्येति सिद्धान्तः ॥ २ ॥

कृष्णले भक्षाद्यनुष्ठानाधिकरणम् ॥ ३ ॥

## भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ ३ ॥

कृष्णलानामभक्ष्यत्वान्न भक्षः चुश्चूकारं भक्षयन्तीति त्वाज्यस्य भक्षो विधीयत इति प्राप्ते,—प्राधान्येन कृष्णलानामेव भक्षणवाक्येऽन्वयात्तेषामेव चुश्चूषाकरणविशिष्टं भक्षणं वचनबलात्कार्यमिति सिद्धान्तः ॥ ३ ॥

कृष्णले एकधा ब्रह्मणे चरतीत्यनेन सहपरिहारविधानाधिकरणम् ॥ ४ ॥

## एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥ ४ ॥

तत्रैवैकधा ब्रह्मण उपहरतीति श्रुतं तत्र सकृत्त्वे सहत्वे चैकधाशब्दप्रयोगादनियम इति प्राप्ते,—चोदकप्राप्तभक्षान्तरबाधाय सहत्वमेव विधीयते प्राशित्रमिडामिति द्वितीयया शेषप्रतिपत्त्यर्था भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वं विधीयत इति सिद्धान्तः ॥ ४ ॥

कृष्णले ब्रह्मणे सर्वभक्षताधिकरणम् ॥ ५ ॥

सर्वत्वं च तेषामधिकारात्स्यात् ॥ ५ ॥

तत्रैव सर्वं ब्रह्मणे परिहरतीति श्रुतं तत्र चोदकप्राप्तपुरुषान्तरावाधार्थं ब्रह्मभागस्यैव देयस्य सर्वस्य ब्रह्मभागस्य वा दानं विधीयत इति प्राप्ते,–एतदर्थस्य प्राप्तत्वाद्वचनानर्थक्यापत्तेर्यत्किंचिद्भक्षजातं तत्सर्वं ब्रह्मणे नान्येभ्य इति पुरुषान्तरपरिसंख्येति सिद्धान्तः ॥ ५ ॥

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् ॥ ६ ॥

पुरुषापनयात्स्वकालत्वम् ॥ ६ ॥

सकृदुपहृतानां युगपदेव भक्षणमिति प्राप्ते,–प्रकृतिवन्नानाकालमेवेति सिद्धान्तः ॥ ६ ॥

ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् ॥ ७ ॥

एकार्थत्वादविभागः स्यात् ॥ ७ ॥

कृष्णलेषु चतुर्द्धाकरणम् इदं ब्रह्मण इत्यादिनिर्देशश्च न कर्तव्यः एकस्यैव ब्रह्मणः सकलभक्षादिति स्पष्टम् ॥ ७ ॥

ज्योतिष्टोमे ऋत्विग्दानस्यानत्यर्थताधिकरणम् ॥ ८ ॥

ऋत्विग्दानं धर्ममात्रं स्याद्ददातिसामर्थ्यात् ॥ ८ ॥

ऋत्विग्भ्यो दक्षिणादानं परिमाणमन्त्रादिनियमाददृष्टार्थमिति प्राप्ते,–आनतिरूपदृष्टसंभवे अदृष्टार्थत्वायोगान्नियम एवादृष्टार्थः न तु दानं अतः सत्रेषु न कार्यमिति सिद्धान्तः ॥ ८ ॥

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

शेषभक्षाश्च तद्वत् ॥ ९ ॥

शेषभक्षाः पूर्ववदृत्विगानत्यर्था इति प्राप्ते,–आनतिवत्प्रतिपत्तेरपि दृष्टत्वात्तदर्था एव देवतायै त्यक्तेन ऋत्विगानत्यसंभवात्, अतः सत्रेष्वपि कार्या इति सिद्धान्तः ॥ ९ ॥

सत्रे ऋत्विग्वरणाभावाधिकरणम् ॥ १० ॥

वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ १० ॥

सत्रे वरणमृत्विक्त्वार्थं कार्यमिति प्राप्ते,–प्रकृतावानत्यर्थत्वात्तल्लोपान्न कर्तव्यम् । ऋत्विक्त्वं तु यागकर्तृत्वरूपं वरणाभावेऽपि न विरुद्धमिति सिद्धान्तः ॥ १० ॥

सत्रे परिक्रयाभावाधिकरणम् ॥ ११ ॥

**परिक्रयश्च तादर्थ्यात् ॥ ११ ॥**

एवं दानमप्यानत्यर्थमनपेक्षितत्वान्निवर्तत इति स्पष्टार्थम् ॥ ११ ॥

उदवसानीये दानस्य परिक्रयार्थत्वाधिकरणम् ॥ १२ ॥

**उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ १२ ॥**

सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति श्रुतं तत्र फलवत्सत्रसमभिव्याहारात्पृष्ठशमनीयस्तदुत्तराङ्गम् । अन्यथा फलकल्पनागौरवादिति प्राप्ते,—उदवसायेति त्यागोक्तेर्निःशेषसमाप्त्यवगमान्न तदङ्गत्वं किं तु त्यागे निमित्ते नैमित्तिकमिदं कर्मेति सिद्धान्तः । वाजपेयेनेष्ट्वेति तु प्रयोगानन्तर्यं बृहस्पतिसवस्याङ्गस्य संभवतीति वैषम्यम् ॥ १२ ॥

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ॥ १३ ॥

**तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ १३ ॥**

पृष्ठशमनीयः सर्वैर्मिलित्वा कार्यः यजेरन्निति कर्तृबहुत्वश्रवणादिति प्राप्ते,—मध्ये चिन्तान्तरम् ॥ १३ ॥

उदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् ॥ १४ ॥

**तत्रान्यानृत्विजो वृणीरन् ॥ १४ ॥**

यजमानैरेव पृष्ठशमनीयः कार्यः समानकर्तृकत्वावगमात्त्यागे च तेषामेव कर्तृत्वादिति प्राप्ते,—ऋत्विग्भिः क्रियमाणे यजमानस्य कर्तृत्वाविरोधात्प्रकृतिवदृत्विजोऽपि स्युरिति सहस्रदक्षिणेनेति दक्षिणाश्रवणाच्चेति । स्थितादुत्तरं—त्यागे कर्तॄणामिह कर्तृत्वात्तेषु च बहुत्वस्य प्राप्तत्वान्न विधिः । किंच यथा त्यागे कर्तॄणां निरपेक्षता तथा यागेप्युचिता, तस्मादेकैके एव कुर्वीरन्निति सिद्धान्तः ॥ १४ ॥

कामेष्टौ दानस्यादृष्टार्थताधिकरणम् ॥ १५ ॥

**कामेष्टौ च दानशब्दात् ॥ १५ ॥**

सारस्वते सत्रे प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं निर्वपति तस्यामश्वां च पुरुषीं च धेनुके दद्युरिति श्रुतम् । तत्रास्या इष्टेः प्रकृतावसत्त्वेनापूर्वाङ्गत्वाद्यजमानानामार्त्विज्यं नातिदिश्यते यूपावटस्तरणबर्हिषि तद्धर्मवत्, तेन ऋत्विगन्तरसत्त्वादानत्यर्थमेवाश्वादिदानमिति प्राप्ते,—ये

यजमाना इति प्रयोगे विधानात्तद्वारेणापूर्वाङ्गेऽपि तैरेव प्रसङ्गसिद्धेर्न कर्त्रन्तरप्राप्तिरित्यदृष्टार्थमेव दानमिति सिद्धान्तः ॥ १५ ॥

दर्शपूर्णमासयोर्द्वेष्यदानस्यादृष्टार्थताधिकरणम् ॥ १६ ॥

द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ १६ ॥

दर्शपूर्णमासयोः श्रुतं यदि पत्नीः संयाजयन्कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां द्वेष्याय दद्यादिति । तत्र दक्षिणाशब्दादानत्यर्थत्वे प्राप्ते—ऋत्विजां द्वेष्यत्वासंभवात्तद्भिन्नाय दानमदृष्टार्थमेवेति सिद्धान्तः ॥ १६ ॥

जीवतामस्थियज्ञाधिकरणम् ॥ १७ ॥

अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ १७ ॥

यदि सत्राय संदीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरेऽस्थीनि याजयेयुरिति । तत्रास्थियागो मृताधिकारिकः अन्ये ऋत्विक्स्थानीयाः, अत एव परस्मैपदमिति प्राप्ते,—मृतस्य सर्वथा कर्तृत्वाभावान्नाधिकारस्तस्माज्जीवतामेवाधिकार इति सिद्धान्तः ॥ १७ ॥

अस्थियज्ञे अस्थ्नां जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ १८ ॥

मृताधिकारं, कृत्वा चिन्त्यते—जपवपनादयो यजमानसंस्काराः दीक्षणीयेष्टिश्च चोदकानुग्रहाय कार्या इति प्राप्ते,—मृतस्य दीक्षाया असंभवात्तदर्थानां लोप एव, जपादेस्त्वशक्यत्वादपीति सिद्धान्तः ॥ १८ ॥

अस्थियज्ञे शुक्रादिस्पर्शे अस्थ्नां कर्तृत्वाधिकरणम् ॥ १९ ॥

क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ १९ ॥

शुक्रं यजमानोऽन्वारभत इत्याद्यचेतनानामस्थ्नां कर्तृत्वासंभवादकर्तव्यमिति प्राप्ते,—चैतन्याभावेऽपि काष्ठादौ तद्दर्शनात्कार्यमिति सिद्धान्तः ॥ १९ ॥

अस्थियज्ञे अस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणम् ॥ २० ॥

काम्यानि तु न विद्यन्ते कामाऽज्ञानाद्यथेतरस्यानुच्यमानानि ॥ २० ॥

गुणकामानां विकृतौ प्रवृत्तावप्यत्र लोपः कामाज्ञानात् । वस्तुतस्तु विकृतौ न तेषां प्रवृत्तिरिति सिद्धान्तः ॥ २० ॥

अस्थियज्ञे अस्म्यां सूक्तवाकगताशासनानुष्ठानाधिकरणम् ॥ २१ ॥

ईहार्थाश्चाभावात्सूक्तवाकवत् ॥ २१ ॥

आयुराशास्त इत्यादिसूक्तवाकपदानामपि लुप्तार्थत्वान्निवृत्तिरिति सिद्धान्तः ॥ २१

अस्थियज्ञे होतुः कामाभावाधिकरणम् ॥ २२ ॥

स्युर्वा होतृकामाः ॥ २२ ॥

यं कामयेत वसीयान्स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यादित्यपि यजमानफलमेव न होतुः अतस्तस्यापि निवृत्तिः ॥ २२ ॥

यजमानस्य मृतावपि सर्वस्वारसमापनाधिकरणम् ॥ २३ ॥

सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ २३ ॥

सर्वस्वारयज्ञे आर्भवस्तोत्रकाले ब्राह्मणाः समापयत मे यज्ञमिति प्रैषमुच्चार्य यजमानो म्रियते तत्र कर्मशेषो न समाप्यः मृतस्य कर्तृत्वासंभवेन ऋत्विजामप्रवृत्तेरिति प्राप्ते,—प्रैषद्वारेण मृतस्यापि कर्तृत्वात्तत्प्रयुक्ता ऋत्विजः कर्म समापयेयुरिति सिद्धान्तः ॥ २३ ॥

यजमानस्य मृतौ सर्वस्वारस्य शुक्रस्पर्शाद्यनुष्ठानाधिकरणम् ॥ २४ ॥

गते कर्मास्थियज्ञवत् ॥ २४ ॥

अत्रापि मृते यजमाने पदार्थबाधाबाधावस्थियज्ञवद्द्रष्टव्यामित्यतिदेशः ॥ २४ ॥

सर्वस्वारे यजमानमृतावप्यायुराशंसनाधिकरणम् ॥ २५ ॥

जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ २५ ॥

सर्वस्वारे मरणात्प्रागायुराशास्त इति न वाच्यं मरणाभ्युपगमादिति प्राप्ते,—आर्भवकालात्प्राग्मरणनिवृत्त्यर्थमाशास्यमायुरिति सिद्धान्तः २५॥

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ॥ २६ ॥

क्रिया स्याद्धर्ममात्राणाम् ॥ २६ ॥

सत्रे यददृष्टार्थमृतुयाज्यावरणम् आत्रेयाय हिरण्यदानं च तत्कर्तव्यमिति प्रत्युदाहरणमुक्तम् ॥ २६ ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥ २७ ॥

गुणलोपे च मुख्यस्य ॥ २७ ॥

अग्निहोत्रहवण्या हवींषि निर्वपतीति निर्वापः पवमानेष्टिषु न कार्य-

स्तदानीमग्निहोत्रहवण्यभावादिति प्राप्ते,—अग्निहोत्रहवणीरूपाङ्गलोपेऽपि मुख्यो निर्वापः कार्यः, न च वैगुण्यम्, बाधितस्यानङ्गत्वादिति सिद्धान्तः ॥ २७ ॥

वाजपेये मुष्टिलोपाधिकरणम् ॥ २८ ॥

मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् ॥ २८ ॥

वाजपेये बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवतीति । तत्र चतुर्भिर्मुष्टिभिः सप्तदशशरावासंभवान्मुष्टिचतुःसंख्ययोरुभयोर्बाधः, अथवा संख्याया एव मुष्ट्यङ्गत्वाद्बाध इति प्राप्ते,—संख्याया अपि चतुर इति द्वितीयया निर्वापाङ्गत्वान्न मुष्ट्यङ्गत्वम् । अतो मुख्यत्वात्संख्यानुग्रहः, जघन्यत्वाच्च मुष्टिबाध इति सिद्धान्तः ॥ २८ ॥

धेन्वादिशब्दानां गवान्वितप्रतिपादकताधिकरणम् ॥ २९ ॥

औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ २९ ॥

द्यावापृथिव्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृषभमिति श्रुतम् । अत्र धेन्वादिशब्दानां गोगतगुणवाचकत्वेऽपि गोवाचकत्वाभावादतिदेशप्राप्ताजद्रव्यगुणलक्षकत्वं यथा अजमृषभमित्यादिष्विति प्राप्ते,—औपदेशिकगुणानुरोधेन आतिदेशिकाजबाध एव उपदेशप्राबल्यादिति सिद्धान्तः ॥ २९ ॥

वायव्यं श्वेतमित्यत्राजस्यैवालम्भनाधिकरणम् ॥ ३० ॥

नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ३० ॥

वायव्यं श्वेतमालभेतेत्यादौ तु श्वेतादिगुणस्याजेऽपि संभवान्न तद्बाध इति ज्ञेयम् ॥ ३० ॥

साद्यस्क्रचित्र्येष्ट्योः खलेवालीतण्डुलयोः क्रमेण खादिरत्वव्रैहत्वनियामकताधिकरणम् ॥ ३१ ॥

विप्रतिषेधे तद्वचनात्प्रकृतेर्गुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ३१ ॥

खलेवाली यूपो भवतीत्यत्र चोदकानुग्रहाय तक्षणादियुक्तखादिरयूपस्य खलेवालीकरणम् । एवं चित्रेष्टौ व्रीहीणां तण्डुलीकरणमिति प्राप्ते,—खलेवालीकरणस्यादृष्टार्थत्वापत्तेर्यथास्थितायास्तस्या यूपकार्यकरत्वे दृष्टार्थत्वाद्यथास्थितैव यूपकार्ये विधीयते, तण्डुलानां च स्वतः सिद्धानां व्रैहाणामन्येषां चोपादानं श्रपणनिवृत्तौ तदनुसारि व्रीहिनियमाप्रवृत्तेरिति सिद्धान्तः ॥ ३१ ॥

खलेवाल्यां तक्षणाद्यभावाधिकरणम् ॥ ३२ ॥

**परेषां प्रतिषेधः स्यात् ॥ ३२ ॥**

खादिरत्वादिबाधेऽपि तक्षणादीनामविरोधेनानुष्ठाने प्राप्ते,—प्रयोजनाभावान्नानुष्ठानमिति सिद्धान्तः ॥ ३२ ॥

खलेवाल्यां पर्यूहणाद्यनुष्ठानाधिकरणम् ॥ ३३ ॥

**अर्थाभावे संस्कारत्वं स्यात् ॥ ३३ ॥**

अदृष्टार्थमञ्जनप्रोक्षणाद्यपि खलेवाल्यां न भवति तेषां यूपार्थत्वात् अत्र तदभावादिति प्राप्ते,—छेदनादिसंस्काराणामेव काष्ठगतानां यूपशब्दार्थत्वात्पशुनियोजनाङ्गत्वम् । अतश्चालुप्तार्थानां न निवृत्तिरिति सिद्धान्तः ॥ ३३ ॥

महापितृयज्ञे धानासु अवघाताद्यनुष्ठानाधिकरणम् ॥ ३४ ॥

**अर्थे न च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ३४ ॥**

महापितृयज्ञे श्रुतं पितृभ्यो बर्हिषद्भ्यो धाना इति, तत्र धानास्ववघातो न कार्यो धानात्वविघातादिति प्राप्ते,—श्रपणात्पूर्वमवघाते विघाताभावात्कर्तव्योऽवघातः क्रममात्रं तु बाध्यत इति सिद्धान्त इति भाष्यम् । तदयुक्तम् । प्रकृतावपि तथैव क्रमसत्त्वात्, गुणलोपे च मुख्यस्येत्यनेन पौनरुक्त्याच्च। श्रपणोत्तरमवघाते तु पूर्वं हन्ति कृत्वेति भाष्यविरोधस्तस्मात्पितृभ्योऽग्निष्वात्तेभ्यो अभिवान्यायै (?) दुग्धे मन्थमिति मन्थ उदाहरणम् । तत्र श्रपणोत्तरं क्रियमाणं पेषणं न प्राकृतं पाकार्थत्वासंभवात् अतो लौकिकमधर्मकं तदिति प्राप्ते,—प्राकृतमेवैतत् उभयत्रापि हविरर्थं, पौर्वापर्यभेदस्तु प्रकृतावत्र चार्थिकः। अतः पेषणधर्माः कार्या इति सिद्धान्तो वार्तिके वर्णितः ॥ ३४ ॥

इति श्रीन्यायबिन्दौ दशमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## दशमाध्यायस्य तृतीयः पादः ।

विकृतौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ १ ॥

**विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥**

पशौ एकादशप्रयाजान्यजतीति न प्रयाजानुवादेन संख्याविधिः तेषां प्रकृतौ पञ्चसंख्यत्वात्, किंतु संख्याविशिष्टप्रयाजविधिः । एवंच

क्लृप्तोपकाराङ्गश्रवणादतिदेशबाध इति प्राप्ते,—विशिष्टविधिगौरवात्पश्चान्नामप्यावृत्त्यैकादशत्वसंभवान्नातिदेशबाध इति सिद्धान्तः ॥ १ ॥

वायव्ये पशौ हिरण्यगर्भादिमन्त्रस्य उत्तराघारे गुणत्वाधिकरणम् ॥ २ ॥

हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात् ॥ २ ॥

वायव्यपशौ हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति प्राक्तनाघारानुवादेन पूर्ववन्मन्त्रविधिरिति स्थिते प्रजापतेः पूर्वाघार एव सः मन्त्रस्य प्रजापतिलिङ्गत्वादिति प्राप्ते,—पूर्वस्यामन्त्रकार्यकल्पनायां गारव उत्तरत्र तु प्रकृतौ मन्त्राम्नानात्तन्नियमादृष्टं क्लृप्तमिति तत्रैव मन्त्रविधिः मन्त्रस्त्विन्द्रपर एव व्याख्येय इति सिद्धान्तः ॥ २ ॥

चातुर्मास्यसोमयोरासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् ॥ ३ ॥

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ ३ ॥

उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेत्यप्राकृतमासादनं नियोजनं च विधीयते प्राकृतस्य दृष्टार्थस्याशक्यत्वादिति प्राप्ते,—उत्करस्य स्थूलाग्रतां परिधेश्च स्थूलतामाश्रित्यासादननियोजनयोः शक्यत्वात्प्राकृतत्वमेवेति सिद्धान्तः ॥ ३ ॥

अग्निचयने प्राकृतवैकृतोभयाहुत्यनुष्ठानाधिकरणम् ॥ ४ ॥

षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ ४ ॥

..चयने प्रकृतितो दीक्षाहुतयः षट् तन्मन्त्राश्च आकूत्यै प्रयुजेऽग्नये स्वाहेत्यादयः प्राप्ताः, अत्र चाकूतिमग्निमित्यादयः षण्मन्त्रा दीक्षायां विनियुक्ताः षड्भिर्दीक्षयतीति, दीक्षाहुतयश्च द्वादश जुहोतीति वाक्यात्तत्संख्याः। तत्र प्रत्यक्षपाठवचनाभ्यां वैकृतमन्त्रैः प्राकृतबाधः। तेन तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते,—सकृत्प्रयोगादेव होमद्वारेण दीक्षार्थत्वोपपत्तौ नाभ्यासः प्राकृतबाधो वेति सिद्धान्तः ॥ ४ ॥

पुनराधाने प्रथमाधानदक्षिणानिवृत्त्यधिकरणम् ॥ ५ ॥

अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ५ ॥

नैमित्तिके पुनराधेये पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वास इत्युक्तदक्षिणा, एका देयेत्यादिप्राकृतदक्षिणाया न बाधिका उभयीर्ददातीति वचनादिति प्राप्ते,—पुनराधेये सति पूर्वमेका इदानीं चैकेति दक्षिणाद्वयसंपत्तिरित्यर्थवादोऽयम्। अतो बाध एवेति सिद्धान्तः ॥ ५ ॥

आग्रयणे वासोवत्सयोः पाकाभावाधिकरणम् ॥ ६ ॥

दाने पाकोऽर्थलक्षणः ॥ ६ ॥

आग्रयणे वासोवत्सयोरन्वाहार्यकार्ये दक्षिणात्वेन विधानात्पाकप्राप्तौ श्रुतवत्सनाशापत्तेर्न पाक इति सिद्धान्तः ॥ ६ ॥

आग्रयणे वाससि पाकाभावाधिकरणम् ॥ ७ ॥

पाकस्य चान्नकारित्वात् ॥ ७ ॥

वाससि तु प्रयोजनाभावान्न पाक इति स्पष्टम् ॥ ७ ॥

आग्रयणे वासोवत्सयोरभिघारणानतुष्ठानाधिकरणम् ॥ ८ ॥

तथाभिघारणस्य ॥ ८ ॥

एवमभिघारणमपि स्वादिमार्थत्वात्तस्य चात्रासंभवान्न कार्यम् ॥ ८ ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ॥ ९ ॥

द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात् ॥ ९ ॥

ज्योतिष्टोमे श्रुतं गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति। तत्र तस्येति गवादीन्युद्दिश्य संख्याविधेः सर्वेषां प्रत्येकं द्वादशशतमिति। अथवा गवादिषु संख्यायास्तेषां च दक्षिणात्वेन विधौ वाक्यभेदाद् द्रव्यसंख्योभयविशिष्टा दक्षिणा विधीयते। सा च कुत्रचिदेकत्र संख्यान्वयेऽपि घटते तत्रानन्तर्यान्माषेष्वेवेति न युक्तं चशब्देनान्यसहितानां प्रतीतेर्बहुत्वाच तस्येतिप्रतिनिर्देशायोगात्। अतः क्रतोर्गवादिसमूहस्य वा तस्येति निर्देशः। सहितानां च दक्षिणात्वात्सर्वसंपाद्या संख्या। वस्तुतो वाक्यगतेन द्रव्येण तस्येत्यन्वयः तत्रैकवचनादेकमेव पशुरूपं माषादिषु स्वरूपतः संख्याव्यवहाराभावात्, आनतिकरत्वासंभवाच्च। तत्र यद्यपि तस्येत्येकवचनं एकवचनान्तानामेव ग्राहकमिति गवादीनि चत्वारि संभवन्ति तथाप्युपकाराधिक्यादनिषिद्धत्वान्मुख्यत्वाच्च गवामेव ग्रहणं, तस्य गोर्द्वादशशतं दक्षिणेति। तस्माद्गवामेषा संख्येति सिद्धान्तः ॥ ९ ॥

विभागेन यागे दक्षिणाया दानाधिकरणम् ॥ १० ॥

तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ १० ॥

दक्षिणा चाविभज्यैव सहितेभ्यो देया न प्रत्येकं ऋत्विग्भ्य इति बहुवचनविरोधादिति प्राप्ते,–विभज्य प्रत्येकमेव दानं ऋत्विजां प्राधान्यान्न संख्याविवक्षा, तुथो वो विश्ववेदा विभजत्विति मन्त्राच्च विभाग-

सिद्धिः । यत्र च धेनुर्दक्षिणेत्येकमेव द्रव्यं तत्र परमसंभवादविभाग इति सिद्धान्तः ॥ १० ॥

ज्योतिष्टोमे समाख्यातो दक्षिणाविभागाधिकरणम् ॥ ११ ॥

समं स्यादश्रुतित्वात् ॥ ११ ॥

विभागः समः प्रयासानुरूपो वेति प्राप्ते,—द्वादशाहे दीक्षाक्रमवाक्यगतार्धादिसमाख्यानात्तदनुसारेण विभाग इति सिद्धान्तः ॥ ११ ॥

भूर्नामैकाहे तस्य दक्षिणेत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥ १२ ॥

तस्य धेनुरिति गवां प्रकृतौ विभक्तं चोदितत्वात्तत्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ १२ ॥

अथैष भूर्वैश्वदेवस्तस्य धेनुर्दक्षिणेति धेनुर्गवामेव निवर्तिका नाश्वादीनां, गवादीनां प्रत्येकं दक्षिणात्वात् क्वचिन्निवेशनाप्यस्या उपपत्तेः गोसामान्येन च तत्स्थानकत्वसिद्धेरिति प्राप्ते,—दक्षिणाशब्दस्य गवादिविशेषणत्वे बहुवचनान्तत्वापत्तेः स्वप्रधानत्वमेव, गवादीनि विशेषणानि । तेनैकगवाद्यात्मिकैव दक्षिणेति धेन्वा सर्वनिवृत्तिरिति सिद्धान्तः॥१२॥

यस्य सोममपहरेयुरित्यादावेकां गामित्यनेन गोगतसंख्याबाधाधिकरणम् ॥१३॥

एका पञ्चेति धेनुवत् ॥ १३ ॥

यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात् अभिदग्धे सोमे पञ्च गा दद्यादिति श्रुतम् । तत्रैकामित्यस्य दद्यादित्यन्वयात्सर्वनिवृत्तिरिति प्राप्ते,—गोशब्दे लक्षणायां पाक्षिकानुवादत्वे वा दोषात्, एकां दद्यात्तां च गामिति विधौ च वाक्यभेदात्, गोरेव दाने विधौ च तत्परिच्छेदकद्वादशशतसंख्यायाः प्रकृतितः प्राप्तेरेकपञ्चशब्दानर्थक्याच्च गो—संख्यासंबन्ध एव विधीयते । दाने तद्विधावपि गोपरिच्छेदकत्वेनैव विधिः । अतो न सर्वनिवृत्तिरिति सिद्धान्तः ॥ १३ ॥

साद्यस्के त्रिवत्सेन सर्वक्रयार्थबाधाधिकरणम् ॥ १४ ॥

त्रिवत्सश्च ॥ १४ ॥

त्रिवत्सः साण्डः सोमक्रयण इत्यत्र क्रयसाधनत्वेन त्रिवत्सविधानात्सर्वक्रयद्रव्यनिवृत्तिः ॥ १४ ॥

अश्वमेधे प्राकाशावित्यस्याध्वर्युभागबाधाधिकरणम् ॥ १५ ॥

प्राकाशौ तथेति चेत् ॥ १५ ॥

अश्वमेधे प्राकाशावध्वर्यवे ददातीति श्रुतम् । तत्र प्राकाशावित्यस्यु

दानक्रिययान्वयः। न च साऽध्वर्युणा विशेष्टुं शक्या उद्देश्यत्वात्। तेनाध्वरयोगादनुवादोऽध्वर्युशब्दः ऋत्विग्मात्रस्य, तस्माद्दानमात्रे प्राकाशविधिरिति प्राप्ते,—अध्वर्युपदानर्थक्याद्ध्वर्युप्राकाशविशिष्टदानान्तरमेव विधीयते। किं वाऽध्वर्युप्राकाशसंवन्ध एव पार्ष्टिकोऽपि विधीयतेअतो न सर्वनिवृत्तिरिति सिद्धान्तः॥ १५॥

उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यवाधाधिकरणम्॥ १६॥

धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य॥ १६॥

उपहव्याख्ये यज्ञे श्रुतम्—अश्वः श्यावो दक्षिणा, स ब्रह्मणे देय इति तत्र पूर्ववत् ब्रह्मभागस्यैव प्राकृतस्य निवृत्तिरिति प्राप्ते,—एकेन वाक्येनास्मिन्क्रतावश्व एव दक्षिणेति सर्वप्राकृतबाधो धेनुन्यायेन, द्वितीयवाक्येन तु पुरुषान्तरनिवृत्तिः अतस्तेषां दक्षिणां विनोपायान्तरेणानतिरिति सिद्धान्तः॥ १६॥

ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम्॥ १७॥

तथा च सोमचमसः॥ १७॥

ऋतपेये श्रुतम् औदुम्बरः सोमचमसो दक्षिणा स ब्रह्मणे देय इति। तत्र यत्पशून् दद्यादिति निन्दया प्रतिषेधः प्राप्त्यपेक्ष इति न सर्वनिवृत्तिरिति शङ्कायाम्, अर्थवादत्वेन प्रतिषेधाभावात्सर्वनिवृत्तिरेवेति सिद्धान्तः।

'यदि तु ब्रह्मणः' इत्यादिसूत्रद्वयं प्रयोजनप्रदर्शनार्थम्। अथवा एकवाक्यत्वेऽपि सकलनिवृत्तौ प्राप्तायां ब्रह्मभागस्यैव निवृत्तिः, अन्यथा वाक्यभेदप्रसङ्गादिति सिद्धान्तः कृत्वाचिन्तयोच्यते॥ १७॥

वाजपेये रथस्य भागनियामकताधिकरणम्॥ १८॥

यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारः स्यात्॥ १८॥

वाजपेये सप्तदशरथादिदक्षिणां विधाय यजुर्युक्तं रथमध्वर्यवे ददातीति श्रुतम्। तत्र प्राकाशवदध्वर्युभागस्य बाधे प्राप्ते,—सप्तदशान्तर्गतस्य यजुर्युक्तस्यानियमेन दानप्राप्तौ अध्वर्युनियमोऽयं यद्यजुर्युक्तं ददाति तदध्वर्यव इति द्रव्यान्तरसहितस्य प्राप्तस्य नियम इति न भागान्तरनिवृत्तिरिति सिद्धान्तः॥ १८॥

इति श्रीन्यायविन्दौ दशमाध्यायस्य तृतीयः पादः॥ ३॥

## दशमाध्यायस्य चतुर्थः पादः ।

अग्न्यादौ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ॥ १ ॥

**प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

नक्षत्रेष्टौ अग्नये स्वाहेत्यादय उपहोमाः प्राकृतनारिष्टहोमकार्यार्थत्वात्तन्निवर्तका इति प्राप्ते,—उपहोमानां भिन्नादृष्टार्थत्वान्नारिष्टकार्यत्वाभावेन तैः समुच्चय एवेति । एवं वाजपेये रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति श्रुतम् । तत्र रथघोष इति समाहारद्वन्द्वो न तत्पुरुषः पूर्वपदे लक्षणापत्तेः । तेन रथः प्राकृतदर्भस्थाने घोषस्तूपावर्तध्वमिति मन्त्रस्थाने स च न रथस्यैवेति प्राप्ते,—समाहारे पदद्वये लक्षणापेक्षया पूर्वपदमात्रे लक्षणया षष्ठीसमास एव, तस्माद्रथस्य घोषेणोपाकरणम् । तेन प्राकृतदर्भमन्त्रनिवृत्तिरिति सिद्धान्तः ॥ १ ॥

बृहस्पतिसवादिषु बार्हस्पत्यग्रहैः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् ॥२॥

**सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ २ ॥**

बृहस्पतिसवादौ बार्हस्पत्यं ग्रहं गृह्णातीत्याद्यपूर्वग्रहाम्नानं प्राकृतग्रहनिवर्तकमिति प्राप्ते,—साक्षाद्यागाङ्गतया ग्रहविध्यभावाद्ग्रहाणामदृष्टार्थत्वाच्च प्रयोगवचनेन प्राकृतवैकृतसमुच्चय इति सिद्धान्तः ॥ २ ॥

वाजपेये क्रतुपशूनां प्राजापत्यपशुभिः समुच्चयाधिकरणम् ॥ ३ ॥

**प्राजापत्येषु चाम्नानात् ॥ ३ ॥**

वाजपेये सप्तदश प्राजापत्यात्पशूनालभत इति प्राजापत्यैः प्राकृतपशुबाध इति प्राप्ते,—असाधारण्येन सवनीयादिपशुकार्योपस्थितेरदृष्टार्थत्वाच्च न बाध इति सिद्धान्तः ॥ ३ ॥

साङ्ग्रहण्यामामनहोमानुयाजानां समुच्चयाधिकरणम् ॥ ४ ॥

**आमने लिङ्गदर्शनात् ॥ ४ ॥**

साङ्ग्रहण्याम् आमनमस्यामनमस्य देवा इति तिस्र आहुतीर्जुहोतीत्यनुयाजत्रयानुवादेन मन्त्रविधिरिति प्राप्ते,—त्रित्वविशिष्टहोमानुवादे विशिष्टानुवाददोषात्कर्मान्तराण्येव नच त्रित्वमनेकसाधारणमनुयाजकार्यं शक्नोत्युपस्थापयितुं तस्मात्समुच्चय इति सिद्धान्तः ॥ ४ ॥

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयः ॥ ५ ॥

**उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ५ ॥**

गवामयने महाव्रतं नाम एकाहः, तत्र पत्नय उपगायन्तीति श्रुतं तेन चोदकप्राप्तानां सामगानामृत्विजां निवृत्तिरिति प्राप्ते,—पत्नय उपगायन्तीत्येतत्समीपे काण्डवीणाभिरुपगायन्तीति विधानात्तत्रैव कर्तृत्वं पत्नीनां न समगाने इति ऋत्विजामनिवृत्तिरिति सिद्धान्तः ॥ ५ ॥

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयः ॥ ६ ॥

## संस्कारे चान्यसंयोगात् ॥ ६ ॥

अञ्जनाभ्यञ्जने सत्रे 'गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते' इति गौग्गुलवाभ्यञ्जनं प्राकृतनवनीताभ्यञ्जनस्य निवर्तकमिति प्राप्ते,—नवनीताभ्यञ्जनस्य स्नेहनार्थत्वेन, गौग्गुलवादेस्तु चन्दनादिवद्रूक्षीकरणार्थत्वेन भिन्नार्थत्वात्समुच्चय इति सिद्धान्तः ॥ ६ ॥

महाव्रते अहतवाससस्तार्यादिभिः समुच्चयः ॥ ७ ॥

## आच्छादने त्वैकार्थत्वात्प्राकृतस्य विकारः स्यात् ॥ ७ ॥

महाव्रते 'तार्यं यजमानः परिधत्ते दर्भमयं पत्नी' इति श्रुताभ्यां प्राकृतस्याहतवाससो निवृत्तिः शरीराच्छादनरूपैककार्यत्वादिति प्राप्ते,—घृताक्तं कम्बलं हि तार्यं तस्य दर्भमयस्य च गुह्याच्छादनेऽतीवायोग्यत्वात्तयोरुत्तरीयस्य स्थाने विधानम्, वासांसि विस्रंसयतीति वासोबहुत्वानुवादश्चैवमुपपन्नस्तस्मात्समुच्चय इति सिद्धान्तः ॥ ७ ॥

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयः ॥ ८ ॥

## सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ ८ ॥

तत्रैव 'श्लोकेन पुरस्तात्सदसः स्तुवीतेति अनुश्लोकेन पश्चात्' इत्याम्नातं तेन प्राकृतानां गायत्रादिसाम्नां निवृत्तिरिति प्राप्ते,—प्राप्तस्तुत्यनुवादेन सामान्तरदेशान्तरयोर्विधाने वाक्यभेदात्स्तुतिरेवात्र विधेया सा चादृष्टार्था न प्राकृतीनां निवर्तिका, एकार्थत्वानवगमादिति सिद्धान्तः ॥ ८ ॥

क्वचिद्विकृतौ कौत्सादिभिः प्राकृतानां बाधः ॥ ९ ॥

## अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ ९ ॥

कचित् 'कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः' इत्यादिना कौत्सादीनि सामानि विधीयन्ते तत्र च तेषां स्तुत्यर्थताया अश्रवणात्प्राकृतानां स्तुत्यर्थानामनिवृत्तिरिति प्राप्ते,—प्रकरणात्क्रत्वर्थ-

त्वागमे उपकार्याकाङ्क्षायां लिङ्गेन प्राकृतानां साम्नां कार्यमेवोपस्थाप्यते तस्मात्प्राकृतानां निवृत्तिरिति सिद्धान्तः ॥ ९ ॥

कौत्सादिभिर्व्यवस्थया एकादिबाधः ॥ १० ॥

**सर्वेषामविशेषात् ॥ १० ॥**

कौत्सादिभिर्या प्राकृतानां निवृत्तिरुक्ता सा अविशेषात्सर्वत्र सर्वेषामिति प्राप्ते,—यत्र एकं श्रूयते तत्र एकस्य यत्र द्वयं तत्र द्वयोरिति श्रुतसंख्याकप्राकृतनिवृत्तिमात्रेण विधेरर्थवत्त्वोपपत्तावधिकनिवृत्तौ पमाणाभाव इति सिद्धान्तः ॥ १० ॥

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामाबाधबाधौ ॥ ११ ॥

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ ११ ॥**

यत्र स्तोमविवृद्धिर्यथा द्वात्रिंशः पवमानोऽभिषेचयनीय इत्यादौ तत्रापि प्रत्यक्षश्रुतै राजसामभिः प्राकृतानि बाध्यन्ते, विवृद्धस्तोमकेष्वागमेन संख्यापूरणस्य वक्ष्यमाणत्वादिति प्राप्ते,—नह्यागमेन संख्यापूरणं वाचनिकं, विवृद्ध्यन्यथानुपपत्त्या त्वागमः क्रियते, साचेद्विवृद्धिरुपदिष्टातिदिष्टसामभिरेव सिध्यति को नामाश्रुतान्यागमय्यातिदिष्टानि बाधेत तस्मात्समुच्चय इति सिद्धान्तः ॥ ११ ॥

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापौ ॥ १२ ॥

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ १२ ॥**

अविवृद्धौ प्रत्यक्षश्रुतैः सामभिः तावत्संख्यानां प्राकृतानामुद्वापः, विवृद्धौ प्रत्यक्षश्रुतानामावाप इति स्थिते यस्यां कस्यांचिच्छ्रुतानां यत्र क्वचिदावापस्तावतापि तेषामर्थवत्त्वात्, तन्निबन्धनः प्राकृतानामुद्वापोऽप्यविशेषेणैवेति प्राप्ते,—त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्रह्येवावपन्ति, अत एवोद्वपन्तीति वचनेन गायत्र्यादिभ्योऽन्यत्र तयोः परिसंख्यानात्पवमानेष्वेवावापोद्वापौ, स्तोत्रान्तरेषु त्वगत्याऽभ्यासेनैव संख्यापूरणमिति सिद्धान्तः ॥ १२ ॥

यागादौ विधिशब्देनैव देवताभिधानम् ॥ १३ ॥

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदनात् ॥ १३ ॥**

दर्शपूर्णमासयोः आग्नेयोष्टाकपाल इति श्रुतं तत्र अग्न्यर्थो देवता कर्तव्य इत्येतावांश्चोदनार्थः । बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक

इत्यादीनि तत्र तद्वाचिषु यागनिर्वापादिमन्त्रेषु येन केनचिच्छब्देन तदुद्देशेऽपि चोदनाभिहितमग्नेर्देवतात्वं संपादितं भवतीति प्राप्ते,—अर्थस्य देवतात्वं हि तस्य शब्देनोद्देश इति शब्दोच्चारणेऽपि पुरुषं प्रवर्तयन्ती चोदना सन्निहितस्य विधिगतस्यैव शब्दस्योच्चारणं विधत्त इति विधिशब्दनियम इति केचित्। अस्मिन्पक्षे स्यादपि कथं चिद्विधिशब्दनियमः किंतु यत्र पर्यायशब्दद्वयेन देवताविधिः, यथा 'अग्नये पावकाय निर्वपेदग्नये शुचये' इति, तत्र निरपेक्षयोरेककार्ययोरसमुच्चयाद्विकल्पेनान्यतरेणैव शब्देनोद्देशः स्यात्, तस्मान्नात्र देवतात्वविधिः, अपि तु शब्दस्वरूपमेव वाक्यार्थान्वयित्वेन विधीयते, तेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते। येन हि शब्देनोद्दिश्य हविस्त्यज्यते तदर्थो देवता भवति तस्मान्न पर्यायप्रसक्तिरिति सिद्धान्तः ॥ १३ ॥

अतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम् ॥ १४ ॥

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ १४ ॥

सौर्यादिविकृतिषु प्राप्तेषु अग्नेरहमुज्जितिमित्यादिनिगमेषु विधिगतसूर्यपदवदादित्यातिशब्दा अपि वाच्या इत्यनियमः त्यागमात्र एव विधिशब्दनियमादिति प्राप्ते,—विधिशब्दस्य यागकरणकभावनारूपयागभावनायामङ्गत्वेन नियमात्सर्वत्र तन्नियम एवेति सिद्धान्तः ॥ १४ ॥

आधाने अग्नेः सगुणेनाभिधानाधिकरणम् ॥ १५ ॥

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ १५ ॥

आधाने अग्नये पावकायेत्यादिपवमानेष्टौ चोदकानुग्रहायाग्निशब्द एवोच्चार्य इति प्राप्ते,—भावनाङ्गत्वेन शब्दद्वयविधानात्सर्वत्र मिलितयोः प्रयोग इति सिद्धान्तः ॥ १५ ॥

आधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम् ॥ १६ ॥

## वृधन्वान्पवमानवद्विशेषनिर्देशात् ॥ १६ ॥

पवमानेष्टावाज्यभागं प्रकृत्य वृधन्वानाग्नेयः कार्यः पावकवान्सौम्य इति। तत्र वृधन्वत्वादेर्देवतागुणत्वाद्वृधन्वन्तमग्निमावहेत्यादिसगुणमभिधानमिति प्राप्ते,—उपसर्जनीभूतायां देवतायां वृधन्वत्वाद्यन्वयायोगादाग्नेयोमन्त्रो वृधन्वानिति मन्त्रविशेषनियमार्थो विधिर्देवता तु प्रकृतिवदेवेति सिद्धान्तः ॥ १६ ॥

गवानुबन्धपशुपदाज्ययोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ॥ १७ ॥

**विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥१७॥**

ज्योतिष्टोमे गौरनुबन्ध्यः तत्र उस्राया वपाया मेदस इति मन्त्रः श्रुतः तेन प्राकृतच्छागस्य वपाया मेदस इति मन्त्रो निवर्तते । तत्रानुबन्ध्याया द्रव्यत्वान्न विधिशब्दनियम इति प्राप्ते,—प्रकरणपठितेनोस्राशब्देनैवाभिधानं नियामकसंभवेऽनियमायोगादिति सिद्धान्तः । यस्तु प्रकृतौ पशुशब्देन विधिः, छागशब्देन निगम इति भेदः स आर्थिक इति न तस्यातिदेश इति ज्ञेयम् ॥ १७ ॥

अवभृथेऽग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणम् ॥ १८ ॥

**स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ १८ ॥**

अवभृथे अग्नीवरुणौ स्विष्टकृतौ यजतीति श्रुतम् । तत्र स्विष्टकृच्छब्दस्याग्नौ रूढत्वान्नाग्नीवरुणयोः सामर्थ्यम् अतः स्विष्टकृत्कार्ये लक्षणयाग्नीवरुणयोर्विधानम् । अतो निगमेऽग्नीवरुणावावहेत्यस्विष्टकृच्छब्दकत्वमेवेति प्राप्ते,—भूतस्विष्टकरणाभावेऽपि स्विष्टकरणयोगसंभवात्प्रयोगान्तरापेक्षया भूतकालत्वस्याप्युपपत्तेरग्नीवरुणयोरपि तद्गुणकयोरेव देवतात्वात्स्विष्टकृच्छब्दकमेवाभिधानमिति सिद्धान्तः ॥ १८ ॥

अग्नीषोमीये सप्रयोगेषु निर्गुणेनाग्निपदेनाग्नेरभिधानाधिकरणम् ॥ १९ ॥

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ १९ ॥**

पशुपुरोडाशे स्विष्टकृद्गुणलोपः श्रुतः अग्निं यजतीति तत्र यागमात्रे तल्लोपो न तु निगमेष्विति प्राप्ते,—प्रयोग एव निर्गुणविधेः सर्वत्र गुणलोप इति सिद्धान्तः ॥ १९ ॥

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ॥ २० ॥

**स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् २०**

दर्शपूर्णमासयोस्तृतीयोऽनुयाजः स्विष्टकृद्देवत्यः स आरादुपकारक इति प्राप्ते,—स्विष्टकृद्यागदेवतास्मारकत्वात्तत्संस्कारकत्वमेव,न च नियामकाभावः द्रव्यप्रतिपत्त्या दृष्टदेवतास्मरणेन च कृतार्थस्योत्तरार्धस्विष्टकृतः प्रयोजनानाकाङ्क्षत्वादनुयाजस्य तु प्रयोजनान्तराभावात्तस्यैव स्विष्टकृद्देवतासंस्कारकत्वस्य युक्तत्वादिति सिद्धान्तः ॥ २० ॥

दर्शपूर्णमासयोः याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ॥ २१ ॥

**अन्वाहेति शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ २१ ॥**

दर्शपूर्णमासयोस्तिष्ठन्याज्यामन्वाहेति अर्थप्राप्तस्यैवोच्चारणस्य पुनर्विधानं दृष्टार्थं तदिति प्राप्ते,—उच्चारणमनूद्य तिष्ठन्निति गुणविधानान्नोच्चारणस्यादृष्टार्थं विधानमिति सिद्धान्तः ॥ २१ ॥

मनोतायामूहाभावाधिकरणम् ॥ २२ ॥

**मनोतायां तु वचनादविकारः स्यात् ॥ २२ ॥**

अग्नीषोमीये पशौ त्वं ह्यग्ने प्रथमो मनोतेति मन्त्रः तत्रैव 'यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्या' इति वचनम्। तच्चाग्नीषोमदेवत्ये केवलाग्निदेवत्याया मनोताया असामर्थ्यादुत्कर्षप्राप्तौ तन्निवृत्त्यर्थं न तु विकृतावूहनिवृत्त्यर्थं प्रकृतावेवार्थवत्त्वोपपत्तेः, अतो वायव्यादिषु यथादैवतमूहितव्यमिति प्राप्ते,—केवलाग्नेः प्रकाशकस्यापि तद्द्वारेणाग्नीषोमप्रकाशकत्वसंभवान्न प्रकृतावाग्नेय्येवेति वचनमर्थवत् विकृतिषु सामान्यसंबन्धाभावाच्च नोत्कर्षप्राप्तिः तस्माद्विकृतिषूहप्राप्तेस्तन्निषेधार्थं वचनमिति सिद्धान्तः ॥ २२ ॥

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

**पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥२३॥**

वैश्यस्तोमे कण्वरथन्तरं पृष्ठं भवतीति श्रुतं साम बृहद्रथन्तरयोर्योन्योरन्यतरत्र गेयम्। अथवा अस्यापि रथन्तरत्वाद्रथन्तरयोनावेव कण्वस्य रथन्तरमिति योगप्रतीतेरिति प्राप्ते,—कण्वसंबन्धे मानाभावेन सामविशेषे रूढ एवायम्। अतः स्वयोनावेव गेयम्। उत्तराग्रन्थे तस्याः पाठस्य क्रत्वर्थत्वात्। सामाधारयोन्युत्तरापरिज्ञानाय ह्युत्तराग्रन्थः यस्य तु कौत्सादेर्योनिर्नोत्तराग्रन्थे तेषां प्राकृतीष्वेव ऋक्षु गानमिति सिद्धान्तः ॥२३॥

कण्वरथन्तरस्य स्वयोन्युत्तरयोन्योः गानाधिकरणम् ॥ २४ ॥

**कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ २४ ॥**

कण्वरथन्तरं प्राकृतोत्तरयोरेव गेयं पाठसिद्धक्रमपरित्यागस्याविशेषाच्चोदकानुग्रहाच्चेति प्राप्ते,—उत्तराग्रन्थपठितयोरेव गेयं तत्रैवोत्तराशब्दरूढेरिति सिद्धान्तः ॥ २४ ॥

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ॥ २५ ॥

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥२५॥**

अग्निष्टुति श्रुतं आग्नेया ग्रहा भवन्तीति तत्र प्राकृतस्तोत्रशस्त्राणामदृष्टार्थत्वादनूह इति स्पष्टम् ॥ २५ ॥

चातुर्मास्येष्वाज्यशब्दस्याविकारेणावाहनाधिकरणम् ॥ २६ ॥

### उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ॥ २६ ॥

चातुर्मास्येषु पृषदाज्येनानुयाजान्यजतीति श्रुतं तत्र देवानाज्यपानावहेत्यादिनिगमे आज्यदधिपानित्यूहः दधिमिश्रिताज्यस्य पृषदाज्यपदार्थत्वादुभयोरपि हविष्ट्वात् अथवा द्विरुपस्तृणातीति वचनाद्दधि प्रधानं तत्संस्कारार्थमाज्यमतो दधिपानित्येवोहः, अथवा उभयसंयोगे पृषदाज्यं द्रव्यान्तरं तेन पृषदाज्यपानित्येवोह इति प्राप्ते,—पृषच्छब्दस्य चित्रवाचित्वाद्दधिमिश्रितमाज्यमेव यागसाधनं श्रुतम् अतो न कश्चिदूहः द्वयं वा इदं सर्पिश्च दधि चेति तुल्यनिर्देश उपस्तरणादिवादश्चार्थवादमात्रमिति सिद्धान्तः ॥ २६ ॥

इति श्रीन्यायबिन्दौ दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

## दशमाध्यायस्य पञ्चमः पादः ।

---

एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥ १ ॥

### आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥

द्यावापृथिव्य एककपाले आश्विने द्विकपाले वैष्णवे च त्रिकपाले प्रकृतिप्राप्तानां बहूनां मध्ये कस्यचिदनियमेनोपादानम् । एवमेकां सामिधेनीमित्यत्र तथा द्विरात्रादिषु द्वादशाहैकदेशस्येति प्राप्ते,—प्रथमातिक्रमे कारणाभावादादित उपादानम् । अवशिष्टानां लोप इति सिद्धान्तः॥१॥

एकत्रिक आद्ये तृचे गानाधिकरणम् ॥ २ ॥

### एकत्रिके तृचादिषु माध्यन्दिनच्छन्दसां श्रुतिभूतत्वात् ॥ २ ॥

एकत्रिकाख्ये क्रतौ एकस्यां स्तोत्रीयायां बहिष्पवमानं तिसृषु होतुराज्यमित्यारभ्य तिसृषु माध्यन्दिनः पवमान इत्यन्तं श्रुतम् । प्रकृतौ माध्यन्दिने पवमाने त्रयस्तृचाः गायत्रो बार्हतस्त्रैष्टुभ इति तत्र त्रिच्छन्दा आवापो माध्यन्दिनः पवमान इति वचनादेकैकतृचाद्यानां तिसृणां ग्रहणं न त्वाद्यतृचस्य त्रिच्छन्दस्त्वहानादिति प्राप्ते,—प्रकृतौ वचनप्राब-

स्येऽपि विकृतावानुमानिकत्वेन श्रुतिपाठयोः समत्वाद्विकृतौ चाद्यतृचस्य शीघ्रोपस्थितत्वात्तस्यैव ग्रहणमिति सिद्धान्तः ॥ २ ॥

एकस्यामृचि धूर्गानाधिकरणम् ॥ ३ ॥

## त्रिकं स्तृचेषु धुर्ये स्यात् ॥ ३ ॥

एकत्रिक एव प्राकृतधूर्गानयुक्तस्तोत्राणि त्रिके कार्याणि तत्र ऋक्त्रयं पृथक्, एकं साम तृचे क्रियत इति वचनात्, आवृत्तं धूर्षु स्तुवत इति तु एकस्य साम्नस्तिसृष्वावृत्तेरनुवाद इति प्राप्ते,—स्तुवत इति स्तोत्रावृत्तिश्रवणादृक्साध्यस्तोत्रावृत्तिरेव वचनार्थः । सा च मन्त्रावृत्तावेवेत्येकस्या एव ऋचोऽभ्यास इति सिद्धान्तः ॥ ३ ॥

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥ ४ ॥

## चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ ४ ॥

द्विरात्रादिषु द्वादशाहातिदेशः द्वादशाप्यहान्यादितः प्रवर्तन्त इति प्राप्ते,—द्विरात्रे यत्प्रथमं तद् द्वितीयं द्वादशाहस्येति शेषः । एवं यद् द्वितीयं तत्तृतीयं जगतीमन्तर्गच्छन्तीति लिङ्गदर्शनान्मध्यमदशरात्रस्यैव प्रवृत्तिः जगतीच्छन्दस्कं ह्यादित आरभ्य चतुर्थः दशरात्रस्य तु तृतीयं तदन्तर्गच्छन्ति त्यजन्तीत्यर्थः । पूर्वपक्षे तु जागतमहश्चतुर्थं स्यादिति तस्य नानोक्तिरसंगता स्यात् । मध्यमदशरात्रेऽपि प्रथमं द्वितीयमिति व्यवहारसत्त्वात् रात्रिशब्दवत्त्वरूपावान्तरसादृश्याच्चेति सिद्धान्तः ॥ ४ ॥

सप्तभिराधूनोतीत्यनेनाग्नौ धूननाबर्थकमन्त्राणामनियमेनोपादानाधिकरणम् ॥ ५ ॥

## अपूर्वासु तु संख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात् ॥ ५ ॥

यत्र वहूनां प्रकरणपठितानां मन्त्राणां सप्तभिराधूनोति चतुर्दशभिरावपतीत्यत्र ग्रहणं तत्राप्यादित उपादाने प्राप्ते,—प्रकरणेन सर्वेषामङ्गत्वावगमात् क्रमबाधेनादितो मध्यतोऽन्ततो वा सप्तादिग्रहणमिति सिद्धान्तः ॥ ५ ॥

विवृद्धस्तोमकेऽप्राप्तानां साम्नामागमाधिकरणम् ॥ ६ ॥

## स्तोमविवृद्धौ प्राकृतानामभ्यासेन तु संख्यापूरणमधिकारात्संख्याया गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ ६ ॥

एकविंशेनातिरात्रेणेति स्तोमवृद्धौ सामान्तरागम एव संख्यासामञ्जस्यात् चात्तु नागमः अत्र ह्येवावपन्तीत्यनेनावप्तव्यानां गायत्र्याद्याधार-

त्वनियमात् ऋचां संभवात् । सामागमोऽप्यत एव पवमानस्तोत्रविषय एव स्तोत्रान्तरेष्वगत्याभ्यास इति ज्ञेयम् ॥ ६ ॥

बहिष्पवमानेऋगागमाधिकरणम् ॥ ७ ॥

### बहिष्पवमाने त्वृगागमः सामैकत्वात् ॥ ७ ॥

बहिष्पवमाने पूर्ववत्सामागमे प्राप्ते,—एकं हि तत्र सामेति वचनान्न-सामागमः किंत्वृगागमः य एकं बहिष्पवमानेन स्तुवीतेत्यनभ्यासस्य पराक् शब्देनोक्तेरिति सिद्धान्तः ॥ ७ ॥

सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणम् ॥ ८ ॥

### अभ्यासेन संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ ८ ॥

एकविंशतिमनुब्रूयादिति सामिधेनीवृद्धावेकादशानामेवर्चां प्रथमोत्त-मयोरभ्यासेन संख्यापूरणे त्रिः प्रथमामन्वाह त्रिरुत्तमामिति वचने त्रित्वस्याविवक्षितत्वाद्यावदुक्तसंख्यापूरणार्थत्वस्यैव त्रिःशब्देनोपलक्षणा-दिति प्राप्ते,—द्विश्चतुरभ्यासेनापि पञ्चदशसंख्यापूरणान्न त्रिरभ्यासस्तं-न्नियतो येनोपलक्षणार्थः स्यात्तस्मात्प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामागम इति सिद्धान्तः । अत्र च संख्यैवागम्यमानानां कर्माङ्गत्वे प्रमाणम् । अन्यथा संख्यायाः सामिधेनीपरिच्छेदद्वारकक्रत्वङ्गत्वानुपपत्तेः । एवं सर्वत्रागमे ज्ञेयमिति ॥ ८ ॥

षोडशिनांप्राकृतत्वम् ॥ ९ ॥

### षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ९ ॥

ज्योतिष्टोमे षोडशिनं गृह्णातीति विहितः षोडशिग्रहो विकृतिष्वेव उत्तरेऽहनि द्विरात्रस्य गृह्यत इत्यादिवचनात्, अन्यथा प्रकृतितः प्राप्ति-संभवेन तद्वैयर्थ्यात् । अग्निष्टोमे राजन्यस्य गृह्णीयादिति वैकृताग्निष्टो-माभिप्रायम् । तस्मात्प्रकरणबाधेन वाक्याद्विकृतावुत्कर्ष इति प्राप्ते,—अग्निष्टोमादिशब्दानां दूरस्थविकृतिपरत्वायोगाद्राजन्यादिनिमित्ते प्रकृ-तावस्त्येव विकृतौ पुनःश्रुतिरनैमित्तिकत्वार्थेति सिद्धान्तः ॥ ९ ॥

आग्रयणादेवषोडशिग्रहणम् ॥ १० ॥

### तस्याग्रयणाद्ग्रहणम् ॥ १० ॥

षोडशी आग्रयणादुक्थ्याद्वा विकल्पेन समुच्चयेन वा ग्राह्यः आग्रयणा-द्गृह्णाति, उक्थ्याद्गृह्णातीति वचनद्वयादिति प्राप्ते,—उक्थ्याद्गृह्णातीत्यस्याप्यु-

कुथ्यादूर्ध्वकाले गृह्णातीत्यर्थः तेन दिग्योगनिमित्तैवेयं पञ्चमी न त्वपादाने तस्मादाग्रयणादेव ग्राह्य इति सिद्धान्तः ॥ १० ॥

तृतीयसवन एव षोडशिग्रहणम् ॥ ११ ॥

## तृतीयसवने वचनात् स्यात् ॥ ११ ॥

प्रातःसवने गृह्णातीत्यादिवाक्यैः सवनत्रयेऽपि षोडशिग्रहणं तत्राद्ययोः सवनयोरुक्थ्याभावेन तदानन्तर्यासंभवेऽपि वचनबलाद्ग्रहणमिति प्राप्ते,—प्रातःसवन इत्याद्युक्तस्य प्रातःसवनादिनिन्दया तृतीयसवने षोडशिविधिपर्यवसानात्तत्रैवास्य ग्रहणमिति सिद्धान्तः ॥ ११ ॥

षोडशिग्रहस्यसस्तोत्रशस्त्रत्वम् ॥ १२ ॥

## उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् १२

अग्निष्टोमे राजन्यस्य गृह्णीयादिति विहितः षोडशी स्तोत्रशस्त्ररहितः कार्यः अन्यथा षोडशिसंस्थत्वापत्तौ अग्निष्टोम इत्येतद्विरोधात् अग्निष्टोमादिपदानां तत्तत्स्तोत्रशस्त्रसंस्थानिमित्तत्वादिति प्राप्ते,—अग्निष्टोमे प्राप्ते राजन्यस्य न तत्संस्था किंतु षोडशिसंस्थेति वचनार्थः, तस्मात्स्तोत्रशस्त्रसहित एव कार्य इति सिद्धान्तः ॥ १२ ॥

अङ्गिरसां द्विरात्रे षोडशिनः परिसंख्याधिकरणम् ॥ १३ ॥

## अभावादतिरात्रेषु गृह्यते ॥ १३ ॥

अङ्गिरसां द्विरात्रे वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर इति षोडशिविधिः, न चोत्तरेऽहन्द्विरात्रस्य गृह्यत इति सामान्यवचनात्प्राप्तिः अस्य विशेषवचनत्वेन शीघ्रप्रवृत्त्या विधिसंभवादिति प्राप्ते,—प्रयोजनाभावाच्छीघ्रप्रवृत्तेः द्विरात्रान्तरपरिसंख्यैव षोडशिनियमस्य क्रियते। तेनाङ्गिरसां द्विरात्र एव नियमः द्विरात्रान्तरे तु प्रकृतिवद्विकल्प एवेति वृत्तिकृत्। भाष्यकारास्तु परिसंख्यायां त्रैदोष्याद्वैखानसविध्यर्थवादत्वमेवेत्याहुः ॥ १३ ॥

नानाहीने षोडशिग्रहग्रहणाधिकरणम् ॥ १४ ॥

## चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ १४ ॥

चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इति श्रवणादेकस्मिन्नहीने चतुर्थे गृहीत्वा पुनश्चतुर्थे षोडशी ग्राह्य इति प्राप्ते,—एकस्याहीनस्यैकमेव चतुर्थ-

मन्यत्त्वष्टममिति न तत्र ग्रहणं अहीनस्येत्येकवचनं तु सामान्याभिप्रायं वीप्सा च नानाहीनाभिप्रायेति सिद्धान्तः ॥ १४ ॥

विकृतौ ग्रहाणामाग्रयणाग्रताधिकरणम् ॥ १५ ॥

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥ १५ ॥**

ज्योतिष्टोमे यदि जगत्सामा आग्रयणाग्रान् गृह्णीयादिति श्रुतं तत्र प्रकरणाज्जगत्सामशब्देन ज्योतिष्टोम एवेति प्राप्ते,—जगत्यामुत्पन्नस्य साम्नो ज्योतिष्टोमेऽभावाद्विषुवत्येव तत्सत्त्वात्तत्रैवाग्रयणाग्रतेति सिद्धान्तः। रथन्तरमेव ईशानमस्य जगतः स्वर्दृशमित्यृच्युत्पन्नत्वाज्जगत्सामशब्देनोच्यत इति तु न युक्तम् । लक्षितलक्षणाप्रसङ्गात् ॥ १५ ॥

संस्रवे उपवत्यग्रवत्योरभावाधिकरणम् ॥ १६ ॥

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥ १६ ॥**

यत्र बृहद्रथन्तरयोः समुच्चयः संस्रवे उभे कुर्यादित्यादौ तत्र उपवती रथन्तरस्य प्रतिपदं कुर्यादग्रवतीं बृहत्पृष्ठस्येत्याद्युभयधर्मानुष्ठानं विकल्पेनेति मुख्यत्वाद्वा रथन्तरधर्मतैवेति प्राप्ते,—उभयसामकस्यैकैकसामकत्वाभावान्निमित्ताभावेन तद्धर्माननुष्ठानमेवेति सिद्धान्तः ॥ १६ ॥

ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ॥ १७ ॥

**ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ १७ ॥**

ज्योतिष्टोमे उपांश्वन्तर्यामावधाराग्रहौ विधाय यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते अण्व्या धारया गृह्णातीति श्रुतम् । तत्र ग्रहाणां सर्वेषां विध्यन्तरप्राप्तानामग्रताविधिः तेनोपांश्वन्तर्यामाभ्यामपि प्रागैन्द्रवायवग्रहणमिति प्राप्ते,—धारासंयोगाद्धाराग्रहाणामेव गृह्णातिनोपादानात्तेषां चैन्द्रवायवाग्रतायाः पाठप्राप्तत्वाद्वक्ष्यमाणानां धाराग्रहाणां संक्षेपेण कीर्तनमिदमतः स्वस्थानस्थतैवैन्द्रवायवस्येति सिद्धान्तः ॥ १७ ॥

कामयोगेऽप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् ॥ १८ ॥

**कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ १८ ॥**

ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति तदनन्तरं काम्याग्रताविधानमिति सर्वादितः प्रतिकर्ष इति प्राप्ते—प्रस्तुतधाराग्रहाणामेवाग्रताविशिष्टानां फलसंबन्धात्स्वस्थान एवैन्द्रवायव इति सिद्धान्तः ॥ १८ ॥

आश्विनाग्रादिग्रहाणां प्रतिकर्षाधिकरणम् ॥ १९ ॥

## परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ १९ ॥

शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकाम इत्यत्र तु न स्वस्थानस्थितिः अप्राप्तशुक्राग्रताया एव फले विधानात् । तस्मादादितः प्रतिकर्षः ॥ १९ ॥

आश्विनादिग्रहाणामैन्द्रवायवस्य पुरःप्रतिकर्षाधिकरणम् ॥ २० ॥

## पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ २० ॥

अविशेषात्सर्वादितः शुक्रग्रह इति प्राप्ते,—ऐन्द्रवायवादिधाराग्रहाणां प्रकृतत्वात्तदाश्रितैव शुक्राग्रता फले विधीयत इति न सर्वादितः प्रतिकर्षः । इदमेव वक्ष्यमाणानामैन्द्रवायवाग्रा ग्रहा गृह्यन्त इति कीर्तनस्य प्रयोजनं यत्तेषामाश्रयत्वलाभ इति सिद्धान्तः ॥ २० ॥

सादनस्य प्रतिकर्षाधिकरणम् ॥ २१ ॥

## सादनं चापि शेषत्वात् ॥ २१ ॥

ग्रहाणामपकर्षे सादनादीनामपि तदङ्गानामपकर्ष इति स्पष्टम् ॥२१॥

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥ २२ ॥

## प्रदानं चापि सादनवत् ॥ २२ ॥

ग्रहणस्य प्रदानार्थत्वात्प्रदानापकर्षे प्राप्ते,—अवदानग्रहणस्य न प्रदानोपक्रमत्वं सर्वेषु गृहीतेषु पश्चात्तदनुष्ठानात्, अतो न प्रदानापकर्ष इति सिद्धान्तः ॥ २२ ॥

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेःसमानविध्यर्थताधिकरणम् ॥ २३ ॥

## त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ २३ ॥

द्वादशाहे श्रुतम् 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथशुक्राग्रम्' इत्यादि अत्र नवस्वहःसु यदग्रतात्रयं तत् त्र्यनीकेत्युच्यते त्रयाणामनीकानामग्रतानां समाहार इति व्युत्पत्तेः । अनीकान्तर्गतयोश्चाद्ययोरह्नोः क्रमेण रथन्तरबृहत्सामत्वात्प्रकृतित एवैन्द्रवायवाग्रत्वशुक्राग्रत्वयोः प्राप्तिः । अतस्तच्छ्रवणमनुवादमात्रमर्थवादो वेति प्राप्ते,—रथन्तरसामत्वादिनिमित्तकत्वेन प्रकृतितः प्राप्तावप्यनैमित्तिकत्वार्थं पुनर्विधानं, तत्फलं चैतदहर्विकृतावसत्यपि रथन्तरबृहत्सामत्वे ऐन्द्रवायवशुक्राग्रतयोः प्राप्तिरिति सिद्धान्तः ॥ २३ ॥

व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् ॥ २४ ॥

**द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ २४ ॥**

उक्ताग्रतारूपं द्वादशाहस्य समूढत्वं नाम, व्यूढरूपं तु ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथैतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रमथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति । तत्र व्यूढस्यापि क्रत्वर्थत्वं फलार्थत्वं चेति प्राप्ते,—व्यूढस्वरूपस्याप्रसिद्धत्वात्तज्ज्ञापनायैकं वाक्यं तस्य च फलसंबन्धो वाक्यत्रयेणेति न क्रत्वर्थत्वं किंतु समूढमेव क्रत्वर्थमिति सिद्धान्तः ॥ २४ ॥

संवत्सरसत्रेऽनीकानां विवृद्ध्यधिकरणम् ॥ २५ ॥

**ऐकादशिनवत् त्र्यनीकापरिवृत्तिः स्यात् ॥ २५ ॥**

गवामयने एकषष्ट्यधिकानि त्रीणि शतान्यहानि अशीतिशतं पूर्वं पक्षः, तथोत्तरं, मध्ये विषुवान् । तत्राहःक्लृप्तिं ताण्डकिनः समामनन्ति—प्रायणीयं प्रथममहः चतुर्विंशं द्वितीयं, ततश्चत्वारोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः स मासः, स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः, ततस्त्रयोऽभिप्लवाः षडहाः, एकः पृष्ठ्यः षडहः, अभिजिन्नामैकाहः ततस्त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि, आद्याभ्यामहोभ्यां सह षण्मासाः । तदिदं पूर्वं पक्षः । ततो विषुवान् । अथोत्तरं पक्षः—त्रयः स्वरसामानः विश्वजिन्नामैकाहः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः त्रयोभिप्लवाः षडहाः तान्यष्टाविंशतिरहानि पुनः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः चत्वारोऽभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थः ततस्त्रयोऽभिप्लवाः षडहाः आयुर्गौरिति द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः । अत्र भाष्यकृता द्वादशाहातिदेशेन प्राप्तामनीकामाश्रित्य विचारितम् अनीकाया आवृत्तिं विना सकलाहःपूरणायोगान्नवस्वहःसु त्र्यनीकामनुष्ठाय पुनर्नवसु तदनुष्ठानमित्येवं रीत्या दण्डकलितवदावृत्तिः, अग्रतानामहर्धर्मत्वादिति प्राप्ते,—उद्दिश्यमानस्य प्रथममित्यस्याह्नो विशेषणायोगात्प्रथममैन्द्रवायवाग्रमिति फलितं, गवामयने पूर्वपक्षसो नवधा विभागात्प्रथमादिभागेषु नवस्वैन्द्रवाग्रवाग्रतादीनां नवानामनीकानामनुष्ठानात्स्वस्थानविवृद्धिरिति सिद्धान्तः । एवं च सत्युत्तरपक्षसि पञ्चमे

षडहान्तर्गते त्रयस्त्रिंशस्तोमकेऽहन्याग्रयणाग्रतादर्शनं युज्यते । पूर्वस्मिन्पक्षस्यत्र नवमभागे आग्रयणाग्रताया अनुष्ठानादुत्तरे पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमभागेऽहर्नवकरूपे आग्रयणाग्रतायाः संभवात्पञ्चमस्य च तदन्तर्गतत्वात् । दण्डकलितवदावृत्तौ तूत्तरपक्षस्यैकमहर्व्याप्य त्र्यनीकासमाप्तिः । ततः पुनरैन्द्रवायवाग्रत्वादारभ्यानुष्ठाने द्वितीयमहरैन्द्रवायवाग्रं तृतीयं शुक्राग्रं चतुर्थं विश्वजिदाग्रयणाग्रं त्रयस्त्रिंशं पञ्चममहरैन्द्रवायवाग्रं प्राप्नोतीति लिङ्गदर्शनानुपपत्तिरिति तदिदमुक्तमतिदेशतस्त्र्यनीकाप्राप्त्यभावात् । अभिप्लवे हि ज्योतिर्गौरायुरितिनामधेयैरेकाहज्योतिरादिधर्मातिदेशः । स च चोदनालिङ्गाद्बलवान् । एवं च रथन्तरसामस्वैन्द्रवायवाग्रता । बृहत्सामसु च शुक्राग्रतेति अभिप्लवषडहेऽपि प्रथमतृतीयपञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता अन्येषां बृहत्सामत्वाच्छुक्राग्रतेति न त्र्यनीकाप्रसङ्गः । तथा नवधाविभागोप्ययुक्तः । द्वादशाहे प्रायणीयोदयनीयान्तरालस्य दशभिरनीकैः पूरणाद्दशमे चैन्द्रवायवाग्रतायाः सत्त्वादत्रापि पूर्वपक्षसि दशधाविभक्ते दशमो भाग ऐन्द्रवायवाग्रः स्यादुत्तरार्धस्य च प्रातिलोम्येनानुष्ठाने प्रथमो भाग ऐन्द्रवायवाग्रः स्यादिति तदन्तर्गतपञ्चमाहे आग्रयणाग्रतानुपपत्तिः सिद्धान्तेऽपि स्यात् । किंच पूर्वपक्षे त्र्यनीकाया अहर्धर्मत्वात् पृष्ठ्यषडहे च नामधेयेन द्वादशाहिकपृष्ठ्यषडहधर्मप्राप्तेस्त्रयस्त्रिंशस्य च पञ्चमस्याह्न आग्रयणाग्रत्वादत्रापि सेति विपरीतं लिङ्गमिति तस्माद्यथावार्तिकमुच्यते—गवामयने प्रत्यक्षवचनेनैव त्र्यनीका विहिता तत्र प्रथममहरित्यहःशब्दस्योत्तरत्राप्यनुषङ्गात्प्रथमादह्न आरभ्यासमाप्तेरैन्द्रवायवशुक्राग्रयणानां व्यतिषङ्गेणाग्रता विधीयते । त्रिष्वहःस्वैन्द्रवायवाद्यग्रतात्रयमनुष्ठाय पुनस्त्रिषु तदनुष्ठानमिति प्राप्ते,—उद्देश्यस्य विशेषणायोगादहर्मात्रोद्देशे चाथेतिनिर्देशायोगात्प्रथममैन्द्रवायवाग्रमित्येवान्वयः । अहःपदं त्वहःसंघातानुवादः । एवं च भागधर्मत्वादग्रतानां नवधा विभागः अवान्तरप्रकरणाच्च पूर्वपक्षसि निवेशात्तदन्त्यभागे आग्रयणाग्रता उत्तरपक्षसि च प्रातिलोम्येनानुष्ठाने प्रथमभागे आग्रयणाग्रतेति लिङ्गदर्शनोपपत्तिः । दण्डकलितावृत्तौ त्वाद्याहर्द्वये आहत्यैन्द्रवायवाग्रताविधानात्तद्वर्जयित्वा प्रवृत्ता अनीका अन्त्यपर्याये सप्तानामह्नां पूर्वार्धगतानामवशेषान्मध्यं विषुवन्तमुत्तरार्धगतं चैकमहर्व्याप्य समाप्येत अतस्त्र्यनीका न पूर्वपक्षसो धर्मः किंतु सामर्थ्यरूपलिङ्गान्महाप्रकरणाच्च अवान्तरप्रकरणं बाधित्वा गवामयन-

स्यैवाङ्गमिति न तस्याः प्रातिलोम्यमुत्तरपक्षसि विधीयते यत्पूर्वपक्षसि विहितं तस्यैवोतरत्र प्रातिलोम्यविधानात्। आनुलोम्येन प्रवृत्तौ च त्रयस्त्रिंशे आग्रयणाग्रतानुपपत्तिः । सिद्धान्ते त्वविरोधादादित आरभ्य त्र्यनीका प्रवर्तते । उत्तरे च पक्षसि प्रातिलोम्यं लभत इति लिङ्गोपपत्तिरिति सिद्धान्तः ॥ २५ ॥

व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

**छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥ २६ ॥**

द्वादशाहे छन्दांसि वान्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभं त्रिष्टुब्जगत्या जगती गायत्र्या इति छन्दोव्यतिक्रमः श्रुतः । तत्र भक्षपरिध्यादीनामपि गायत्रादिशब्दैरर्थवादादिष्वभिलापाद्गायत्रशब्दनिर्दिष्टः प्रातःसवनीयभक्षस्त्रैष्टुभशब्दितस्य माध्यन्दिनीयभक्षस्य स्थाने स्यात्। तथा श्येनोसि गायत्रच्छन्दा इत्यादिषु पर्णोऽसित्रिष्टुप्छन्दा इत्यादिस्थाने सुपर्णोऽसि गायत्रछन्दा इत्येवमूहितव्यमिति प्राप्ते,—मन्त्रगतानामेव गायत्रादिपदानां व्यतिक्रमो नान्येषामिति सिद्धान्तः ॥ २६ ॥

इति श्रीन्यायविन्दौ दशमाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## दशमाध्यायस्य षष्ठः पादः ।

रथन्तरादिसाम्नां तृचे गानाधिकरणम् ॥ १ ॥

**एकर्क्स्थानानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥**

ज्योतिष्टोमादौ रथन्तरादीनि सामानि एकस्यामृचि गेयानि तत्रैवाम्नानात् । एकं साम तृचे क्रियत इति विध्यभावादर्थवादमात्रमिति प्राप्ते,—ऋक्सामोवाचेत्यादिस्तुतिकल्पितेन विधिना तृचे गानविधानात्तत्र गेयानीति सिद्धान्तः ॥ १ ॥

स्वर्दृक्शब्देन वीक्षणस्य कालार्थताधिकरणम् ॥ २ ॥

**स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ २ ॥**

रथन्तरे प्रस्तूयमाने संमीलयेदिति विधाय स्वर्दृशं प्रति वीक्षेतेति श्रुतं तत्र वीक्षणं स्वर्दृक्शब्दोच्चारणाङ्गमिति प्राप्ते,—स्वर्दृक्शब्दवीक्षणयोः स्तुत्यादिफलकत्वेन निर्ज्ञातप्रयोजनयोः कालार्थ एव संबन्धः प्रतिशब्दात् । अतः स्वर्दृक्शब्दावधि संमीलनम् ॥ २ ॥

गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ॥ ३ ॥

## पृष्ठ्यस्य युगपद्विधेरेकाहवद्विसामत्वम् ॥ ३ ॥

गवामयनादिषु पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इति श्रुतं, तत्र वैरूपवैराजशाकररैवतानां प्रकृतिप्राप्तानां साम्नां निवृत्तिः बृहद्रथन्तरे चैकैकस्मिन्नहनि समुच्चिते बृहद्रथन्तरे सामनी अस्येति बहुव्रीहिघटकद्वन्द्वेनेतरेतरयुक्तयोरेव षडहसंबन्धादिति प्राप्ते,—प्रथमे बृहद् द्वितीये रथन्तरमिति रीत्या एकैकमेव कार्यम्। इतरेतरयोगोऽपि षडहापेक्षो न तदवयवापेक्षोऽतिदेशविरोधादिति सिद्धान्तः॥ ३॥

प्रायणीयोदयनीययोरैकादशिनानां विभागः ॥ ४ ॥

## समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ४ ॥

द्वादशाहे ऐकादशिनान्प्रायणीयोदयनीययोरालभेरन्निति श्रुतं तत्र प्रायणीयोदयनीययोरिति द्वन्द्वावगतसाहित्यस्योद्देश्यगतत्वेनाविवक्षितत्वादेकैकस्मिन्सर्वैकादशिना आलब्धव्या इति प्राप्ते,—द्वादशाहाङ्गत्वेनैकादशिनानां प्राकरणिकवचनादेव प्राप्तेस्तेषामनुष्ठानदेशोऽयं विधीयते, देशश्चाङ्गमिति न तदावृत्त्या प्रधानावृत्तिरिति सिद्धान्तः॥ ४॥

विश्वजित्सर्वपृष्ठ इत्यत्रैकस्यैव पृष्ठदेशे निवेशः ॥ ५ ॥

## सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ ५ ॥

विश्वजित्सर्वपृष्ठो भवतीति श्रुतं तत्र षाडहिकानां रथन्तरादिषट्पृष्ठानां विधिरिति सप्तमे स्थितं, षडहे च तेषां पृष्ठसाधनत्वादिहापि पृष्ठशब्दात्पृष्ठदेश एव माध्यन्दिनपवमानमैत्रावरुणसाम्नोर्मध्ये प्रयोग इति प्राप्ते,—रथन्तरं माध्यन्दिनपवमाने कुर्यादार्भवे बृहन्मध्ये इतराणि वैरूपं होतुः पृष्ठे इत्यादिवचनाद्वैरूपमेव पृष्ठसाधनम्। अन्यानि स्तोत्रान्तरसाधनानि। सर्वपृष्ठशब्दस्तु पृष्ठसाधनरथन्तरादिसामलक्षकः स्तुतेरेकत्वेन सर्वशब्दानन्वयात् अतो वैरूपमेव पृष्ठदेशे नान्यानीति सिद्धान्तः॥५॥

वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशः ॥ ६ ॥

## वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् ॥ ६ ॥

विकृतावुक्थ्यो वैरूपसामेति विहितं वैरूपसाम सर्वस्तोत्रेषु कार्यमिति प्राप्ते,—रथन्तरसामेति निर्देशसाम्यात्पृष्ठस्तुतेरेवोपस्थितेस्तत्रैव निवेश इति सिद्धान्तः॥ ६॥

त्रिवृदग्निष्टोम इत्यत्र स्तोमगतसंख्याविकारः ॥ ७ ॥

त्रिवृति संख्यात्वात्सर्वसंख्याविकारः स्यात् ॥ ७ ॥

त्रिवृदग्निष्टुदग्निष्टोम इत्यत्र त्रिवृच्छब्दस्य त्रैगुण्यस्तोत्रीयानवकोभयार्थस्य वाक्यशेषाभावे विशेषाग्रहणात्त्रैगुण्यार्थत्वे शास्त्रस्य महाविषयत्वसंभवेन सर्वद्रव्याणां त्रैगुण्यविधिरिति प्राप्ते,—योगाद्रूढेर्बलीयस्त्वात्स्तोमस्यैव विधिरिति सिद्धान्तः ॥ ७ ॥

उभयसाम्नि बृहद्रथन्तरयोः समुच्चयः ॥ ८ ॥

उभयसाम्नि विश्वजिद्विभागः स्यात् ॥ ८ ॥

बृहद्रथन्तरोभयसामके संसवादावेकमेव पृष्ठसाधनमितरत्स्तोत्रान्तरसाधनम्, अतिदेशेन पृष्ठविकल्पप्राप्तेरिति प्राप्ते,—वचनेनैव पृष्ठद्वयसमुच्चयविधानात् स्तोत्रान्तरनिवेशेऽपि चोदकबाधस्यावर्जनीयत्वात्पृष्ठ एवोभयनिवेश इति सिद्धान्तः । विश्वजिति तु रथन्तरं माध्यंदिने इति वचनात्स्तोत्रान्तरे निवेश इति वैषम्यम् ॥ ८ ॥

मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानम् ॥ ९ ॥

पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥ ९ ॥

संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वेति, यत्र षडहस्य प्रातिलोम्यं विहितं तत्राद्ये एव संस्थिते प्रकृतिवन्मध्वशनमिति प्राप्ते,—षडहसमाप्तावेव विहितमेतत् षडहाङ्गमेव न त्वन्त्यस्यैवाङ्गं, प्रकृतावानुलोम्यात्त्रयस्त्रिंशस्तोमकस्यान्त्यस्य समाप्तौ कृतमपि प्रातिलोम्यस्थले त्रिवृत्स्तोमकस्यान्ते स्यादिति सिद्धान्तः ॥ ९ ॥

षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानम् ॥ १० ॥

अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ १० ॥

षडहावृत्तौ मध्वशनावृत्तिरिति प्राप्ते,—संस्थाशब्देन तद्विषयनिवृत्तेरुक्तत्वात्तस्याश्च सर्वान्त एव सत्त्वात्तत्रैव मध्वशनमिति सिद्धान्तः॥१०॥

गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्तिः ॥ ११ ॥

आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ११ ॥

यत्र षडहस्याहरन्तरैर्व्यवहितस्यावृत्तिस्तत्रापि सर्वान्ते मध्वशनमिति प्राप्ते,—अहरन्तरप्रवृत्त्या षडहविषयनिवृत्तेर्निमित्तस्य सत्त्वान्मध्वशनावृत्तिरिति सिद्धान्तः ॥ ११ ॥

द्वादशाहे सत्रिभिरपि मध्वशनम् ॥ १२ ॥

## मधु न दीक्षिता ब्रह्मचारित्वात् ॥ १२ ॥

सत्राख्यद्वादशाहे मध्वशनं न कार्यं सर्वेषां यजमानत्वेन दीक्षाङ्गब्रह्मचर्यविधानात्तत्र मधुनिषेधादतो घृताशनमेवेति प्राप्ते,—पुरुषार्थनिषिधस्य न क्रत्वर्थबाधकत्वं विषयभेदात्, सोमातिदेशप्राप्तक्रत्वर्थनिषेधस्तु प्रत्यक्षविहितमध्वशनं न बाधते तस्मात्कर्तव्यं मध्वशनमिति सिद्धान्तः ॥ १२ ॥

मानसस्य दशमाहाङ्गत्वम् ॥ १३ ॥

## मानसमहरन्तरं स्याद्द्वादशाहव्यपदेशात् ॥ १३ ॥

द्वादशाहे दशमेऽहनि मानसं प्राजापत्यं ग्रहं गृह्णातीति श्रुतम् । एतत्कर्मान्तरम् । वाग्वै द्वादशाहो मनो मानसमिति व्यपदेशभेदादिति प्राप्ते,—दशमस्यैवाहो ग्रहाभ्यासान्तरमिदं दशमेऽहनि मानसाय प्रसर्पन्तीति लिङ्गात्, एकदेशत्वेन निर्देशभेदोपपत्तेश्चेति सिद्धान्तः॥१३॥

सत्रस्य बहुकर्तृकत्वम् ॥ १४ ॥

## सत्रमेकः प्रकृतिवत् ॥ १४ ॥

सत्रं प्रकृतिवदेकैक एव कुर्यात्, बहुवचनं त्वनुवादो बहुभिः प्रत्येकं करणादिति प्राप्ते,—कर्तृपरिच्छेदकबहुत्वसंख्यया चोदकप्राप्तैकत्वबाधाद्बहवः संहत्य कुर्युरिति सिद्धान्तः ॥ १४ ॥

सत्रे यजमानानामेव ऋत्विक्त्वम् ॥ १५ ॥

## अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ १५ ॥

सत्रेऽपि यजमानभिन्ना एव ऋत्विजः प्रकृतिवत् ये यजमानास्त ऋत्विज इति तु यजमानसंस्कारार्थमार्त्विज्यविधिः । अथवा ऋत्विजां दीक्षासंस्कारयोगाद्यजमानत्वं गौणमनूद्यत इति प्राप्ते,—उभयथाऽप्यप्राकृतकार्यत्वापत्तेर्वचनानर्थक्याच्चार्त्विज्यकारित्वेन यजमानविधिः, अतोऽन्येषामतिदेशप्राप्तानां बाध इति सिद्धान्तः ॥ १५ ॥

सत्राहीनयोर्विवेकः ॥ १६ ॥

## द्वादशाहस्य सत्रत्वमासनोपायिचोदने यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ १६ ॥

सत्राहीनयोर्लक्षणमुच्यते । तत्रासनोपायिचोदनेष्वासीरन्नुपेयुरित्याख्यातविहितेष्वित्यर्थः । सत्रशब्दवाच्यत्वम् । यजत्याख्यातविहितेष्वहर्गणेष्वहीनशब्दवाच्यत्वमिति ॥ १६ ॥

पौण्डरीके सकृदेव दक्षिणादानम् ॥ १७ ॥

**अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदात्स्यात् ॥ १७ ॥**

पौण्डरीकाख्ये एकादशाहे अयुतं दक्षिणाऽश्वसहस्रमेकादशमिति, तत्र प्रत्यहमियं दक्षिणेति प्राप्ते,—एकप्रयोगविधिविहितानामह्नां तन्त्रेण ऋत्विगानतिः । अत एकैव दक्षिणेति । नच प्रकृतौ द्वादशाहे अन्वहं द्वादशशतं ददातीति वचनात्तत्स्थानीयेयमपि दक्षिणा प्रत्यहं भिन्नेति वाच्यं, द्वादशाहेऽपि प्रत्यहं द्वादशशते दीयमाने यावती भवति तावत्येकैव दक्षिणैकप्रयोगत्वादिति सिद्धान्तः ॥ १७ ॥

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनम् ॥ १८ ॥

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ १८ ॥**

प्रकृतौ माध्यन्दिने सवने दक्षिणानयनश्रवणादिहापि कस्मिंश्चिदहनि माध्यन्दिने नयनं न तु प्रत्यहं सकृन्नयनेन संस्कृतायाः पुनः संस्कारानर्थक्यादिति प्राप्ते,—द्वादशाहे अन्वहं द्वादशशतमिति विभज्य नयनादिहापि विभज्य नयनमिति सिद्धान्तः ॥ १८ ॥

मनोर्ऋच इत्यनेन यावदर्थमृचामुपादानम् ॥ १९ ॥

**लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ १९ ॥**

मनोर्ऋचः सामिधेन्यो भवन्तीति कचिच्छ्रुतं, तत्राविशेषेण सर्वासां वचनविहितत्वाचोदकप्राप्तसंख्याबाधेन सर्वोपादाने प्राप्ते,—अग्निसमिन्धनार्थमुपादेयानां कपिञ्जलन्यायेन त्रित्वे प्राप्ते,—चोदकवशात्पञ्चदश उपादीयन्ते, अतो नाधिकानामाशङ्काऽपीति सिद्धान्तः ॥ १९ ॥

वाससि मानोपावहरणयोरनुष्ठानम् ॥ २० ॥

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ २० ॥**

अहर्गणेऽहर्भेदे वासोन्तरम् ॥ २१ ॥

**तत्राहर्गणेऽर्थाद्वासःप्रकॢप्तिः स्यात् ॥ २१ ॥**

सोमे वाससि मिनोति वाससोपावहरतीति च श्रुतम्, तद्वदहर्गणे प्रत्यहमुपावहरणार्थमेव वास इति प्राप्ते,—हविर्धानशकटे स्थितस्य सोमस्य प्रत्यहमभिषवाद्यर्थमुपावहरणं वाससा कार्यमवशिष्टश्च शकट एव वाससा वेष्टितस्तिष्ठतीत्यर्थादेव वस्त्रभेद इति सिद्धान्तः ॥ २०-२१ ॥

उपावहरणार्थमेव वासोन्तरोत्पादनम् ॥ २२ ॥

मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ २२ ॥

वस्त्रान्तरं च मानकाल एवोत्पाद्यं, प्रकृतौ येन वाससा मानं तेनैवोपावहरणदर्शनादिति प्राप्ते,—प्रकृतौ मानवाससोपावहरणस्यार्थिकत्वादहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि मीत्वोपनह्य स्थापितस्याभिषवकाले उपावहरणार्थमेवान्यद्वास इति सिद्धान्तः ॥२२॥

इति श्रीन्यायबिन्दौ दशमाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

## दशमाध्यायस्य सप्तमः पादः ।

---

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदः ॥ १ ॥

पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥

अग्नीषोमीयं पशुमित्यत्र तद्धितेन पशोरेव देवतान्वयबोधनात्समस्तस्य पशोः पुरोडाशवत्त्यागः हृदयस्याग्रे वद्यतीत्यादीन्येकादशावदानस्थानानि मध्यपूर्वार्धवत्तस्मात्पशुरेकं हविरिति प्राप्ते,—अवदीयमानत्वाद्धृदयादीनामेव हविष्ट्वम् । अवदानं हि हविष एव संस्कारः । पशुस्तु हृदयादिप्रकृतित्वेन देवतान्वयी, तस्माद्धृदयादीन्येव देवतायै देयानि तेभ्य एव द्व्यवदानग्रहणमिति सिद्धान्तः ॥ १ ॥

पशोर्हृदयादिभिरेव यागः ॥ २ ॥

हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ २ ॥

समस्तैः पश्वङ्गैर्यागः नत्वेकादशभिरेव, एकादश वै पशोरवदानानि तानि द्विरवद्यतीति एकादशानां द्विरवदाननियमः, अन्येषां तु पञ्चावदानवचनात् त्रिरवदानमिति प्राप्ते,—हृदयादीनामेवावदानश्रवणात्तेषामेव हविष्ट्वं नान्येषां मानाभावादिति सिद्धान्तः ॥ २ ॥

ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैःस्विष्टकृद्धोमः ॥ ३ ॥

इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ ३ ॥

स्विष्टकृत्प्रभृतयो हृदयादिभ्य एव कार्याः, त्र्यङ्गैः स्विष्टकृतं यजतीति वचनं तु तेषामेव त्रित्वविध्यर्थमिति प्राप्ते,—एकप्रसरताभङ्गेनाङ्गानुवादेन त्रित्वविध्ययोगाद्दोः पूर्वार्धस्य गुदमध्यतः श्रोणिजघनार्धस्येति वाक्यशेषे-

न्येषां कीर्तनात्तैरेव त्रिभिः स्विष्टकृदादयः आकीर्णकरत्वेन तत्प्रतिपत्त्यर्थं वचनेन स्विष्टकृद्विनियोगाद्धृदयादिबाध इति सिद्धान्तः ॥ ३ ॥

अध्यूध्न्या इडाभक्षविकारत्ता ॥ ४ ॥

## अध्यूध्नी तु होतुरुयङ्गवादिडाभक्षविकारः स्यात् ॥ ४ ॥

पशौ अध्यूध्नी होत्रे हरतीति श्रुतं, तत्र अत्रानस्थिभिरिडां वर्धयन्तीतिवचनादिडान्तर्गता अध्यूध्नी नाम ऊधस उपरितनभागरूपा होतृभागे नियम्यत इति नेडाभक्षवाधिकेति प्राप्ते,—अनस्थिभिरित्यस्य हृदयं प्रास्यति जिह्वां वक्षइत्यादिवचनोक्तानुवादात्तत्र चाध्यूध्नीकीर्तनाभावाद्यद्धोत्रे हरति तदध्यूध्नीमिति अपूर्वविधानादिडाभक्षवाधिकैवेति सिद्धान्तः ॥ ४ ॥

वनिष्ठोर्भक्षविकारत्वम् ॥ ५ ॥

## अग्नीधश्च वनिष्ठुरध्यूध्नीवत् ॥ ५ ॥

वनिष्टुमग्नीधे हरन्तीत्यत्र वनिष्ठोरिडायां सत्त्वान्न बाधकत्वमिति विशेषाशङ्कायाम्,—इडासंस्कारार्थं वनिष्ठुप्रासनं नतु तस्येडाभक्षत्वमतोऽग्नीधे प्राप्यमाण इडाभक्षबाधक इति सिद्धान्तः ॥ ५ ॥

मैत्रावरुणस्यापि इडाभक्षितृत्वम् ॥ ६ ॥

## अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ ६ ॥

पशौ मैत्रावरुणस्यापूर्वत्वान्नेडाभक्ष इति प्राप्ते,—प्रैषानुवचनरूपाध्वर्युहोतृकार्यकारित्वात्कर्तृसंस्कारार्थो भक्षो भवतीति सिद्धान्तः ॥ ६ ॥

मैत्रावरुणस्यैकभागत्वम् ॥ ७ ॥

## द्विभागः स्याद् द्विकर्मत्वात् ॥ ७ ॥

मैत्रावरुणस्य द्वौ भागाविति प्राप्ते,—तन्त्रेणाध्वर्युहोतृतृप्तिहेतोरेकस्यैव भागस्य भक्षार्थं दानमिति सिद्धान्तः ॥ ७ ॥

प्रतिप्रस्थातुर्भक्षाभावः ॥ ८ ॥

## प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ ८ ॥

वपाश्रपणस्याध्वर्युकार्यस्य करणात् प्रतिप्रस्थातुरिडाभक्षः स्यादिति प्राप्ते,—यस्य यदपूर्वकर्तृत्वं तस्य तच्छेषभक्षणं; तत्र प्रतिप्रस्थातुर्वपाया निःशेषहोमान्न भक्षप्रसक्तिः, नच दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यतीति वचनाद्धृदयाद्यवदानकारित्वेन तद्भक्षः स्यादिति वाच्यम्, इष्टापत्तेः एतदधिकरणं तु यच्छाखायामध्वर्योरेवावदानं तद्विषयमिति ज्ञेयं, तेनाध्वर्योरेवावदानकर्तृत्वपक्षे न प्रतिप्रस्थातुरिडाभक्ष इति सिद्धान्तः ॥ ८ ॥

आज्यभागा यजतीत्यनेनापूर्वगृहमेधीयविधानम् ॥ ९ ॥

विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनःश्रुतिरनर्थिका स्यात् ॥ ९ ॥

साकमेधे पर्वणि गृहमेधीयेष्टौ आज्यभागौ यजतीतिवचनमतिदेशप्राप्तानुवादः, एवं सत्यानर्थक्यादाज्यभागविधाने सति प्रकृतिसादृश्याद्तिदेशकल्पनेति द्वितीयः पक्षः । औषधद्रव्यकत्वसादृश्यादेवातिदेशसिद्धेस्तत्स्तुतिमात्रमिदमिति तृतीयः । विध्येकवाक्यत्वाभावात् स्तुत्यसंभवेन कर्मान्तरविधित्वं वा । अभेदप्रत्यभिज्ञानादेतस्याप्यसंभवादङ्गान्तरपरिसंख्येति पञ्चमः पक्षः । दोषत्रयापत्तेरेतद्भिन्नानामेवातिदेश इति षष्ठः । अतिदेशस्य प्रत्येकपदार्थाविषयत्वेन नैतत्संभवः प्राकृतप्रकारमात्रप्रतिपादकत्वात्, अतोऽतिदेशोपसंहारोऽयं प्रकृतिवदाज्यभागौ यजतीति सप्तमः । एवं सत्यतिदेशानर्थक्यात् चोदकलोपार्थत्वेनापूर्वतापरमिदमिति सिद्धान्तः ॥ ९ ॥

गृहमेधीये स्विष्टकृदाद्यननुष्ठानम् ॥ १० ॥

ततोऽपि यावदुक्तं स्यात् ॥ १० ॥

गृहमेधीय एव स्विष्टकृदिडादि च प्रत्यक्षश्रुतं कर्तव्यं तदितरन्न कार्यमिति सिद्धान्तः ॥ १० ॥

गृहमेधीये प्राशित्रादिभक्षणाभावः ॥ ११ ॥

स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ११ ॥

गृहमेधीय एव प्राकृताङ्गश्रवणं परिसंख्यार्थमिति कृत्वा चिन्ता तदा हि सजातीयमेव यागान्तरं परिसंख्येयमाज्यभागाभ्यां, स्विष्टकृता तु प्राशित्रादिशेषकार्यं वचनात्तु इडोपह्वानमिति सिद्धान्तः ॥ ११ ॥

प्रायणीयातिथ्ययोः शंय्विडान्तत्वम् ॥ १२ ॥

शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजप्रतिषेधोऽनर्थकः स्यात्[1] ॥ १२ ॥

ज्योतिष्टोमे श्रुतं शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति, इडान्ता आतिथ्या संतिष्ठते, नानूयाजान्यजतीति । तत्र न पत्नीः संयाजयन्तीत्यादिना पत्नीसंयाजा न, तथानुयाजानेव न कुर्यात् अन्यत्तु कुर्यादिति विधिः । एवं च पत्नीसंयाजव्यतिरिक्तकृत्स्नविधानं, शंय्विडान्तसंस्थाविधानं चेति द्वयोर्विकल्प इति प्राप्ते,—वाक्यभेदविक-

१ 'षेधादनर्थकोहि' इति पाठः ।

न्पयोस्त्रिदोषपरिसंख्यायाश्चायुक्तत्वाच्छंय्विडान्तविधेरेव न पत्नीरित्याद्यर्थवादः । अतो नियमेन शंय्विडान्ततैवेति सिद्धान्तः ॥ १२ ॥

प्रायणीयातिथ्ययोः पूर्वाभ्यां शंय्विडाभ्यां संस्था ॥ १३ ॥

**प्रतिषेधार्थवत्त्वाद्वोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ १३ ॥**

प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेकः पश्चादन्यः । तथा इडे अपि द्वे अनूयाजानां पुरस्तादेका पश्चादपरा । तत्रोत्तराभ्यामेव शंय्विडाभ्यां तदन्ततविधिः । एवं च पत्नीसंयाजानुयाजनिषेधोऽप्यर्थवान्, अन्यथाऽनुवादमात्रत्वापत्तेरिति प्राप्ते,—शंय्विडाभावनायामुपरमविधानात्पूर्वयोरपि तयोः कृतयोरुपरमो युक्तः । नपत्नीरित्यादिनिषेधस्त्वेकवाक्यत्वादर्थवादो युक्त एवेति सिद्धान्तः ॥ १३ ॥

उपसत्संनिधौ पठितानामाघारादीनामपूर्वाङ्गत्वम् ॥ १४ ॥

**उपसत्सु यावदुक्तमकर्म स्यात् ॥ १४ ॥**

उपसत्सु श्रुतम्—अप्रयाजास्ता अननूयाजास्ता इति । तथा स्रुवेणाघारयतीति । तत्राघारादीनामभावमाशङ्क्य स्रुवेणेति तत्प्रतिप्रसवविधिः । अतो नापूर्वताहेतुः अतिदेशप्राप्तानुवादो वा । नचानर्थक्यं शङ्क्यम्, अपूर्वतापक्षेऽपि अप्रयाजा इति वचनद्वयानर्थकत्वस्य प्राप्तेरेकस्यैव तदौचित्यात् । तस्मात्प्रयाजानुयाजवर्जं सर्वं कार्यमिति प्राप्ते,—आघारप्रतिषेधाभावेन तत्प्रतिप्रसवायोगादपूर्वत्वार्थमेव तच्छ्रवणम् । अप्रयाजा इति तु अनुवाद एव । आख्याताभावात् । अत आघारश्रवणमपूर्वार्थमेवेति सिद्धान्तः ॥ १४ ॥

अवभृथस्यापूर्वकर्मत्वम् ॥ १५ ॥

**अवभृथे बर्हिःप्रतिषेधाच्छेषकर्म स्यात् ॥ १५ ॥**

अवभृथे श्रुतम्—अप्सुमन्तावाज्यभागौ यजतीति, तथा अपबर्हिषः प्रयाजान्यजतीति, अपबर्हिषावनूयाजौ यजतीति । तत्राज्यभागवचनमप्सुमत्तागुणविधानार्थं नापूर्वतां बोधयति, अतो बर्हिर्वर्जमन्यत्सर्वं कार्यमिति प्राप्ते,—लिङ्गक्रमाभ्यामेव अप्स्वग्ने सधिष्ठवाप्सु मे सोमो अब्रवीदिति मन्त्रप्राप्तेर्नाप्सुमत्ताविधिरित्याज्यभागविध्यर्थमेव वचनमतोऽपूर्वोऽवभृथः । अपबर्हिष इत्यादिवचनं तु बर्हिर्व्यतिरिक्तप्रयाजानुयाजविध्यर्थं न बर्हिःप्रतिषेधमात्रार्थमिति सिद्धान्तः ॥ १५ ॥

वाजपेयादौ यूपादीनां खादिरत्वादिनियमः ॥ १६ ॥

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छर-वच्छ्रुतितो विशिष्टत्वात् ॥ १६ ॥**

यत्र चोदकेनानेकप्राप्तावेकं श्रूयते यथा खादिरो यूपो बृहत्पृष्ठं यवमयः पुरोडाश इत्यादि तत्रापि प्रकृतिवद्विकल्प एव खदिरादेः प्राप्तत्वेनानुवादत्वात् । पलाशादिनिवृत्त्यर्थत्वे त्रिदोषपरिसंख्यापत्तेरिति प्राप्ते,—अनियमेनातिदेशप्राप्तस्य खादिरादेः प्रत्यक्षवचनेन नियमनादितरनिवृत्तिरिति न दोषत्रयमतो न विकल्प इति सिद्धान्तः ॥ १६ ॥

काम्येष्टिषु प्राकृतद्रव्यदैवतनिवृत्तिः ॥ १७ ॥

**सर्वासां च गुणानामर्थवत्वाद्ग्रहणमप्रवृत्तेः स्यात् ॥ १७ ॥**

पूर्वमर्थलोपाद्बाध उक्तः प्रत्याम्नानादिदानीमुच्यते । तत्र प्रत्यक्षश्रुतेन श्यामाकादिनाऽतिदेशप्राप्तव्रीह्यादेर्विकल्पः समुच्चयो वा । नच प्रत्यक्षेणातिदेशबाधः द्वयोरपि प्रमाणत्वाविशेषात् । अत एव नार्षेयं वृणीत इति प्रतिषेधः पक्षे चोदकप्राप्तेन वरणेन विकल्प्यत इति वक्ष्यत इति प्राप्ते,—प्रत्यक्षविशेषश्रुतेस्तद्विरोधेनानुमानिकातिदेशस्येतराङ्गपरत्वकल्पनान्न विकल्पः । नच समुच्चयादविरोधः, नैरपेक्ष्यबाधेन तदयोगात् । तस्मात्प्रत्यक्षश्रुतेन चोदकप्राप्तबाधः प्रत्याम्नानादिति सिद्धान्तः ॥१७॥

औदुम्बरत्वस्य खादिरताबाधकत्वम् ॥ १८ ॥

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥१८॥**

विकृतावौदुम्बरो यूपो भवतीति न खादिरादिबाधकं द्वयोरपि समुच्चितयोः पशुबन्धनसंभवादिति प्राप्ते,—निरपेक्षसाधनत्वात्खादिरत्वस्थाने प्रत्यक्षवचनेनौदुम्बरत्वविधानाच्च खादिरत्वबाध इति सिद्धान्तः ॥ १८ ॥

उत्पत्तिवाक्ये श्रुतेन गुणान्तरसहितप्राकृतवैकल्पिकद्रव्येण वैकल्पिकद्रव्यान्तरबाधः ॥ १९ ॥

**विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ १९ ॥**

सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणामित्यत्र व्रीह्यनुवादेन शुक्लगुणविधानान्न यवबाधः, व्रीहिपक्षे तदुपपत्तेरिति प्राप्ते,—एकेन वाक्येन यागस्य चोदकप्राप्तव्रीह्युद्देशेन गुणस्य च विध्ययोगाद्द्रव्यगुणविशिष्टकर्मविधिः, तेनोपदिष्टैर्व्रीहिभिर्यवानां बाध इति सिद्धान्तः ॥ १९ ॥

पञ्चावत्तैववपाकार्येत्यत्रवपापदस्याङ्गोपलक्षकत्वम् ॥ २० ॥

**यथाश्रुतीति चेत् ॥ २० ॥**

अग्नीषोमीये पशौ श्रुतं—यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति तत्र वपायामेव पञ्चावदानं न हृदयाद्यङ्गेषु, चमसाधिकरणन्यायेन प्रातिपदिकार्थस्य विवक्षितत्वाद्वपाऽपूर्वभेदाच्चेति प्राप्ते,—अवदानस्यप्राप्तत्वात्तदुद्देशेन पञ्चसंख्याविधिः, उद्देश्यविशेषणत्वाद्वपा न विवक्षिता तेन वपाग्रहणमुपलक्षणम् । यद्यपि पञ्चावत्तेति समस्तैकपदेनोद्देश्यविधेयभावोऽयुक्त इति संख्याविशिष्टावदानापरमेव विधेयं, वपाग्रहणं चैवमर्थवद्भवति हृदयादिव्यावर्तनात्, तथापि एवं सत्येकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतीति वचनं व्यर्थं स्यात् प्रकृतित एव प्राप्तेः, पञ्चावत्तस्य वपामात्रविषयत्वात्, सर्वविषयत्वे तु पञ्चत्वसंख्यासिद्धये हविष्येऽपि त्र्यवदाने प्राप्ते द्व्यवदानवचनमर्थवत्तस्मात्सकलवचनानर्थक्याद्वपाग्रहणमुपलक्षणमित्येव युक्तम् । अतोऽङ्गेषु द्व्यवदानवचनादुपस्तरणविवृद्ध्याऽभिघारणविवृद्ध्या वा पञ्चावदानसंपत्तिरिति सिद्धान्तः ॥२०॥

इति श्रीन्यायविन्दौ दशमाध्यायस्य सप्तमः पादः ॥ ७ ॥

---

## दशमाध्यायस्य अष्टमः पादः ।

---

पर्युदासाधिकरणम् ॥ १ ॥

**प्रतिषेधः प्रदेशेनारभ्याविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥**

महापितृयज्ञे नार्षेयं वृणीते न होतारमिति, तथाऽनारभ्य यजतिषु ये यजामहं करोति नानुयाजेष्विति श्रुतम् । तत्रार्षेयवरणस्य ये यजामहस्य चातिदेशप्रत्यक्षवचनप्राप्तस्य प्रतिषेधाद्विकल्पः । वरणभिन्नस्यानुयाजभिन्नस्य च पर्युदासरीत्या विध्यन्वये लक्षणा स्यात् । ततश्च प्रधानक्रियान्वयत्यागेनोपपदसंबन्धश्चान्याय्यः स्यात् । किंच नञ्सुबन्तसंबन्धे नित्यसमास इति वार्तिककारवचनादननुयाजेष्वितिरूपप्रसङ्गः । नच सामान्यविषयस्य विधेर्विशेषतः प्रतिषेधाद्बाध एव, तथाऽनुमानिकचोदकस्य प्रत्यक्षवचनेनेति युक्तं; विशेषरूपप्रतिषेधस्यापि स्वात्मलाभार्थं विधिसापेक्षत्वेन तद्बाधकत्वायोगात् । नह्यप्राप्तस्य प्रतिषेधो घटते । पदशास्त्रं

त्वाहवनीयशास्त्रनिरपेक्षं तद्बाधकमिति वैषम्यमतो विकल्प एवेति प्राप्ते,—विकल्पदोषपरिहारायैव पर्युदासाश्रयणम् । नच नञ्समासापत्तिः, पाणिनिना विभाषाधिकारोक्तेः । कात्यायनीयं तु वावचनानर्थक्यवचनं न्यायविरुद्धं, वृत्तिवाक्ययोरैकार्थ्यात् । सापेक्षत्वनिरपेक्षत्वमात्रेणैव हि तद्भेदः ऋद्धस्य राज्ञः पुरुष इति वाक्यस्य ऋद्धसापेक्षत्वात् । राजपुरुष इति समासस्तु नर्द्धविशेषणसापेक्षः, असामर्थ्यात् । प्रतिपाद्यस्त्वेक एवार्थः। अतश्च वाक्यनिवृत्तिप्रसक्तौ विभाषावचनमावश्यकमेवेति तस्मान्न विकल्पः किंतु बाध एवेति सिद्धान्तः ॥ १ ॥

न तौ पशावित्यस्यनिषेधत्वम् ॥ २ ॥

अपूर्वौ वार्थवादः स्यात् ॥ २ ॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते न तौ पशौ करोति न सोम इति । अत्र यद्यपि पशुसोमाभ्यामन्यत्र आज्यभागविधिपर्युदासः सोमे तत्प्राप्त्यभावेन न संभवति तथाऽपि सोमाङ्गदीक्षणीयादौ तत्प्रसक्तेस्तद्द्वारा सोमे प्रसक्तिः । अतस्तन्निवृत्त्यर्थं पर्युदास इति प्राप्ते,—तथाप्रसक्त्यङ्गीकारे न पशावित्यनर्थकं स्यात् । सोमाङ्गत्वेन न सोम इत्यनेनैव सिद्धेः । सोम इति सप्तम्याः षष्ठीवत्परंपरयाऽनुपपत्तेश्च । तस्मान्न पशावित्यस्य न सोम इत्यर्थवादः । पशौ च निषेध एव न पर्युदासः, पाशुकप्रयोगवचनस्यासन्निधानेनाज्यभागवर्जं पशौ कुर्यादिति पर्युदासासंभवात् । तस्मात्पशावाज्यभागयोर्विकल्प इति सिद्धान्तः ॥ २ ॥

नातिरात्रे इत्यादौ नञः प्रतिषेधार्थत्वाद्विकल्पः ॥ ३ ॥

शिष्टा तु प्रतिषेधः स्यात् ॥ ३ ॥

अतिरात्रे षोडशिनं गृह्णाति नेत्यत्रागत्या विकल्पः निषेधार्थवत्त्वाय चाकरणेऽपि क्रतुसिद्धिरस्तीति कल्प्यते । विध्यर्थवत्त्वाय च करणे फलभूयस्त्वमित्युभयोपपत्तिरिति सिद्धान्तः ॥ ३ ॥

अनाहुतिर्वै जर्तिलाश्चेत्यादेरर्थवादत्वम् ॥ ४ ॥

न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ४

अग्निहोत्रे जर्तिलयवाग्वा वा जुहुयात्, गवेधुकयवाग्वा वेत्युक्त्वा अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्चेत्युक्तं, ततः पयसाऽग्निहोत्रं जुहुयादिति श्रुतं, तत्र विहितानां जर्तिलादीनामनाहुतिर्वेतिप्रतिषेधः, पयोविधिश्चान्य इति प्राप्ते,—जर्तिलविधावपि अनाहुतिप्रतिषेधोऽनर्थकः स्यात् विक-

ल्पस्य पयोविधिनैव सिद्धेः । तस्मादनाहुतिर्वेति जर्तिलादिनिन्दाद्वारेण पयःस्तुतिरित्येकवाक्यतैव लाघवादिति सिद्धान्तः ॥ ४ ॥

त्र्यम्बकादावभिघारणानभिघारणवाक्ययोरर्थवादत्वम् ॥ ५ ॥

### पूर्वैश्च तुल्यकालत्वात् ॥ ५ ॥

आधाने होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः पराभवेत्तस्मात्तूष्णीमेव होतव्यमिति श्रुतम् । एवं चातुर्मास्येषु त्र्यम्बकानधिकृत्य अभिघार्या अनभिघार्या इति प्रस्तुत्य अभिघार्या एवेति च । तत्र उभयत्रापि विधिनिषेधाभ्यां विकल्पः । तत्र चैकपक्षपरिग्रहे मीमांसेति तदनुवादः । तूष्णींभावविध्यर्थं वचनमिति प्राप्ते,—मीमांसाविशेषणत्वेनोपक्रमे श्रवणं न विध्यर्थं किंत्वन्ते श्रवणमेवानन्यपरं विध्यर्थं तदर्थवादः शेषस्तस्मान्न विकल्पः किंत्वनुष्ठानमेवेति सिद्धान्तः ॥ ५ ॥

आधाने उपवादस्य विकल्पपरत्वम् ॥ ६ ॥

### उपवादश्च तद्वत् ॥ ६ ॥

अग्न्याधेये वारवन्त्यादिसाम विधाय न ब्रह्मा सामानि गायेदिति । तत्र ब्रह्मणो गानाभावान्निषेधोऽनुवादः, अतो नित्यं गानमिति प्राप्ते,—अनुवादानर्थक्याद्गाननिषेध एवायं, ब्रह्मशब्दस्तु ब्राह्मणपर इति सिद्धान्तः ॥ ६ ॥

दीक्षितो न ददातीत्यादेः क्रत्वर्थतया प्रतिषेधत्वम् ॥ ७ ॥

### दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्तस्माद्दानहोमपाकप्रतिषेधः स्यात् ॥ ७ ॥

ज्योतिष्टोमे दीक्षितो न ददाति न जुहोतीत्यादिप्रतिषेधः सर्वेषामुपदिष्टातिदिष्टानां क्रत्वर्थानां पुरुषार्थानां च होमादीनामिति प्राप्ते,—क्रत्वर्थनिषेधे विकल्पापत्तेः, पुरुषार्थनिषेधेपि तद्दोषतादवस्थ्याददीक्षितो जुहोतीति पर्युदासस्याग्निहोत्रादावसंभवात्क्रत्वर्थपुरुषार्थविषयभेदेन विकल्पं परिहृत्य श्रुत्या प्रतिषेध एव युक्तः । दीक्षितो होमादिव्यतिरिक्तानि प्रायणीयादीन्यङ्गानि कुर्यादिति पर्युदासो वा प्रायणीयादिविधिशेषः लक्षणापरिहारात्तु पुरुषार्थनिषेधः क्रत्वङ्गतया विधीयत इत्येतदेव युक्तम् ॥ ७ ॥

---

१ तद्विधेरसंनिहितत्वादिति भावः ।

विशेषशास्त्रस्य सामान्यशास्त्रबाधकत्वम् ॥ ८ ॥

**अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सं-दिग्धमाराद्विशेषशिष्टं स्यात् ॥ ८ ॥**

यदाहवनीये जुहोतीति सामान्यशास्त्रस्य पदे जुहोतीति विशेषेण न बाधः, क्लृप्तत्वेन लिङ्गादिवैलक्षण्यात्। नाप्युपदेशेनातिदेशस्येव सामान्यस्य बाधः, सामान्यविशेषयोर्द्वयोरपि प्रत्यक्षत्वात्, अतिदेशस्य त्वनुमेयत्वेन वैषम्यमतो विकल्प इति प्राप्ते,—सामान्यशास्त्रस्य सामान्ये श्रौतत्वेन विशेषे लाक्षणिकत्वाद्विशेषशास्त्रस्य श्रुत्यैव विशेषे प्रवृत्तस्य ततो बलवत्त्वमतो विशेषेण तद्बाध एवेति सिद्धान्तः ॥ ८ ॥

विकृतौ श्रुतस्य साप्तदश्यस्यानारभ्याधीतविध्युपसंहारार्थत्वम् ॥ ९ ॥

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्य-भागवत्प्राकृतप्रतिषेधार्थम् ॥ ९ ॥**

सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रुतं साप्तदश्यं पाञ्चदश्यावरुद्धायां प्रकृतासंभवाद्विकृत्यर्थमिति स्थिते विकृतिविशेषे सप्तदशसामिधेनीरिति वचनं क्लृप्तोपकारसामिधेनीपुनर्वचनादपूर्वतापरमिति प्राप्ते,—न सामिधेनीविधिः किंतु साप्तदश्यविधिः। अतो न चोदकलोपः। साप्तदश्यं त्वनारभ्यविधेरुपसंहारार्थमिति न वैयर्थ्यमिति सिद्धान्तः॥९॥

पृथिव्यै स्वाहेत्यादिमन्त्रेषु स्वाहाकाराम्नानस्य नियमार्थत्वम् ॥ १० ॥

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ १० ॥**

स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयत इत्यनारभ्य वचनं, तत्केषुचिद्दर्विहोमेषु स्वाहाकारपुनःश्रवणेनोपसंह्रियत इति प्राप्ते,—वैकल्पिकवषट्कारनिवृत्त्या स्वाहाकारनियमार्थत्वात्पुनःश्रवणं नोपसंहारार्थमिति सिद्धान्तः ॥ १० ॥

प्रकृत्या सामानविध्यसिद्ध्यर्थं विकृतावग्न्यतिग्राह्ययोरुपदेशः ॥ ११ ॥

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ ११ ॥**

अनारभ्य विहितः स्थण्डिलरूपोऽग्निः अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तं द्विरात्रेणेत्यादिना प्रकृतौ विकृतौ च क्वचिद्विनियुक्तः। तथातिग्राह्या नाम ग्रहविशेषाः विकृतावपि क्वचिदुपदिष्टाः—उक्थ्ये गृह्णीयाद्विश्वजिति ग्राह्या इति। तदिदमग्न्यतिग्राह्यं यत्र नोपदेशस्तत्र

नातिदिश्यते । अन्यथा क्वचिद्विकृतावुपदेशस्यानर्थक्यापत्तेरिति प्राप्ते,—क्वचित्पुनःश्रवणस्य समानविधानार्थत्वान्नातिदेशनिवृत्तिः गुणकामप्रवृत्त्यर्थं च समानविधानं, श्येनचितिं चिन्वीत स्वर्गकाम इत्यादीनामग्न्याश्रितत्वात्तस्य विकृतिसाधारणत्वे तत्र कामप्रवृत्तिः । अन्यथा विकृतावाश्रयोपस्थितिविलम्बात्तत्प्रवृत्तिर्न स्यात्तस्मादस्त्यतिदेश इति सिद्धान्तः । तत्र साद्यस्क्रेषु सारस्वतेषु च सत्रेष्वशक्यत्वान्न चयनं वाजपेयादौ तु भवतीति ज्ञेयम् ॥ ११ ॥

उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तम् ॥ १२ ॥

## उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यतुल्यत्वाल्लोकवदुपपत्तेर्गुणभूतत्वात् ॥ १२ ॥

दर्शपूर्णमासयोरुपस्तृणाति द्विर्हविषो वद्यति अभिघारयतीति विधाय चतुरवत्तं जुहोतीति श्रुतम् । अत्र द्वितीयाश्रुत्या चतुरवत्तसंस्कृतस्य होतव्यत्वावगमाद्धविष एव चतुरवदानम् । उपस्तरणादि त्वधिकमिति प्राप्ते,—न च तेन होमाङ्गचतुरवत्तानुवादेन तत्संस्कारतया प्रक्षेपो विधीयते, अप्राप्तत्वात् । होमाङ्गतया चतुरवत्तविधावप्यवत्तमात्रं विधीयेत न संख्या, वाक्यान्तरप्राप्तानुवादत्वात् । संख्याविधानेऽपि वा होमसाधनाज्यपरिच्छेदद्वाराऽपि होमाङ्गत्वसिद्धेरुपस्तरणाभिघारणाभ्यां चतुरवत्तमित्यङ्गीकार्यम् । एवं च व्यवदानस्य न पाक्षिकबाध इति सिद्धान्तः ॥ १२ ॥

उपांशुयाजेऽपि चतुरवदानम् ॥ १३ ॥

## साप्तदश्यवन्नियम्येत् ॥ १३ ॥

चतुःसंख्याया होमाङ्गत्वपक्षे तत्संपादनायोपस्तरणादिप्रकारविधानात्तद्विषय एव चतुरवदानं, न त्वाज्यद्रव्यके उपांशुयाज इति प्राप्ते,—उपस्तरणादेर्हविःसंस्कारार्थतया विधिः, न चतुरवत्तार्थतया । अर्थात्तु पुरोडाशादावुपस्तरणादिना चतुरवत्तसंपत्तेर्न हविषश्चतुरवदीयते आज्ये तु तदभावाद्धविष एव चतुरवदानम् । वस्तुतस्त्व(प्राप्त? नुवाद)त्वान्न चतुःसंख्याविधिः, किंत्ववत्तानुवादेन होमविधिः । उपांशुयाजाज्ये च चतुर्गृहीतं जुहोतीति वाक्याच्चतुर्गृहीतविधिः न तु चतुरवत्तवाक्यादिति सिद्धान्तः ॥ १३ ॥

दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादत्वम् ॥ १४ ॥

**पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेश-स्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ १४ ॥**

दर्शपूर्णमासयोः पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च सान्नाय्येन तु सोमयाजिनमिति श्रुतम्, तत्र पुरोडाशाभ्यामेवासोमयाज्यधिक्रियते, न सान्नाय्येन, यद्वा पुरोडाशाभ्यामसोमयाज्येवाधिक्रियते न सोमयाजीति पक्षद्वयमयुक्तं, विहितसान्नाय्येन विनाऽसोमयाजिनः फलोत्पत्त्ययोगान्नित्यतया विहितयोः पुरोडाशयोरनित्यमसोमयाजिनं प्रति विध्यसंभवाच्च । तस्मात्कर्मान्तरविधिरिति । तदपि न प्रकृतप्रत्यभिज्ञानादेवकारानर्थक्याच्च । न च याजनविधिः, फलाश्रवणात् । परस्मैपदनिर्देशाच्च न कल्पनाया अपि संभवः । तस्मादाग्नेयस्यानुवाद ऐन्द्राग्नस्य त्वमावास्यायां विहितस्य पूर्णमास्यामप्राप्तस्य विधिरित्यपि न युक्तमेवकारानर्थक्यात्, विध्यनुवादवैषम्याच्च । तस्मादसोमयागकाले पुरोडाशाविति कालविधिः । न च तत्प्राप्तिः, असोमयाजिनोऽपि तदु सन्नयेदिति सान्नाय्यविधानात्तद्वैकल्पिकस्यैन्द्राग्नस्य प्रागूर्ध्वं च सोमात्प्राप्तौ प्राक्काल एव नियम्यते, तेन प्रागेव विकल्पः पश्चात्तु सान्नाय्यमेवेति प्राप्ते,—असोमयाजिना काललक्षणायां मानाभावात्सान्नाय्येन सोमयाजिनमित्यस्यार्थवाद एवायमिति सिद्धान्तः ॥ १४ ॥

उपांशुयाजस्य ध्रौवाज्यद्रव्यत्वम् ॥ १५ ॥

**उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ १५ ॥**

उपांशुयाजे विशेषाश्रवणाद्यत्किंचिद्द्रव्यमनियतमाज्यस्यैव तावुपांशु पौर्णमास्यामित्यस्य कालविधिपरत्वेन आज्यविधावसामर्थ्यात्सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमित्यस्य च वैशब्दोपबन्धेन विधावसामर्थ्यादिति प्राप्ते,—विध्यभावेऽपि ध्रौवाज्यस्य प्रयोजनाकाङ्क्षायां प्रकृतोपांशुयाजे द्रव्यसापेक्षे विनियोगः स्यात् । इह तु सर्वस्मा इति वचनादप्राप्तार्थत्वेन विधिसमर्थादाज्यनियम एवेति सिद्धान्तः ॥ १५ ॥

उपांशुयागस्य प्रकृतदेवतानियमः ॥ १६ ॥

**तद्वच्च देवतायां स्यात् ॥ १६ ॥**

उपांशुयाजे देवताया अश्रुतेर्विष्णुरुपांशु यष्टव्य इत्यादेश्चार्थवादत्वादनियम इति प्राप्ते,—अविहिताया देवतात्वासंभवात्प्राकरणिकीभिर्देवताभिः संबन्ध इति सिद्धान्तः ॥ १६ ॥

उपांशुयाजस्य विष्ण्वादिदेवताकत्वं पौर्णमासीकर्तव्यत्वं च ॥ १७ ॥

**धर्माद्वा स्यात्प्रजापतिः ॥ १७ ॥**

नचोपांशुधर्मत्वात् प्रजापतिदेवताकत्वं प्रजापतिं मनसा ध्यायेदिति विधेर्यत्किंचित्प्राजापत्यमुपांश्वेव तत्क्रियत इत्यर्थवाद इति न प्रजापतेरुपांशुधर्मत्वं तस्मादाग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवस्य तस्याम्नानात्स्थानसाम्येन तस्योपांशुयाजाङ्गत्वाद्विष्णुर्देवतेति वैष्णवमन्त्रस्य चामावास्याकालत्वात्तद्वशेनोपांशुयाजाङ्गत्वाद्विष्णुर्देवतेति वैष्णवमन्त्रस्य चामावास्याकालत्वात्तद्वशेनोपांशुयाजोऽप्यमावास्यायामेव । यदि तु अविशेषतः पुरोडाशद्वयान्तराले विधानादुभयत्रोपांशुयाजः तदा पूर्णिमायां तावद्ब्रूतामग्नीषोमावित्यग्नीषोमदेवताविधानान्मन्त्रपाठाच्च तयोर्देवतात्वम् । एवमाग्नेयाग्नीषोमीयमन्त्रमध्ये प्राजापत्यमन्त्राम्नानात्प्रजापतेरपि विष्णुस्त्वमावास्यायामेवेति प्राप्ते,—उपांशुपौर्णमास्यामिति प्रत्यक्षवचनेन विधानात्पौर्णमास्यामेवोपांशुयाजः कालविशिष्टयागानुवादेन देवताविधौ विशिष्टानुवाददोषान्मन्त्रवर्णादेव तत्प्राप्तेश्च कालस्यैव विधेयत्वात् । अमावास्यायामपि तदङ्गीकारे त्रयोदशामावास्यायामिति लिङ्गदर्शनानुपपत्तेः । अस्पष्टकालकत्वेन फलवाक्यानुपात्ततया प्राधान्याभावप्रसङ्गाच्च । अतो मन्त्राणां प्रधानानुसारित्वात्पूर्णिमायामेव तिसृणामपि देवतानां विकल्प इति सिद्धान्तः ॥ १७ ॥

एकपुरोडाशायामप्युपांशुयागः ॥ १८ ॥

**द्विपुरोडाशायां स्यादन्तरालार्थत्वात् ॥ १८ ॥**

असोमयाजिनः अग्नीषोमीयपुरोडाशाभावान्नोपांशुयाजः पुरोडाशद्वयान्तरालाभावादिति प्राप्ते,—पुरोडाशद्वयस्यान्तरालोपलक्षणत्वादुपलक्षणापायेऽप्युपलक्षणीयानपायस्य शङ्खवेलायामागन्तव्यमित्यादौ प्रसिद्धत्वादेकपुरोडाशायामप्युपांशुयाजो भवत्येवेति सिद्धान्तः ॥ १८ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ दशमाध्यायस्य अष्टमः पादोऽध्यायश्च समाप्तः ॥ ८ ॥

---

## एकादशाध्यायस्य प्रथमः पादः।

आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वम् ॥ १ ॥

**प्रयोजनाभिसंवन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥**

आग्नेयादीनां षण्णां मिलितानामेव फलसाधनत्वं विधीयमानसाहित्यस्य विवक्षितत्वात्। अतो न प्रत्येकं फलसंबन्ध इत्यधिकरणार्थः ॥१॥

अङ्गानामैककार्यत्वम् ॥ २ ॥

**अङ्गानां तु शब्दभेदात्कर्तृवत्स्यात्फलान्यत्वम् ॥ २ ॥**

अङ्गानां तु क्रतूपकारकत्वं परस्परनिरपेक्षाणामेव तत्तद्वाक्यैरवगम्यते, तेन चित्रोद्भिदादीनामिव पशुफलेऽङ्गानामपि क्रतूपकारे समुच्चय इति अथवा एकद्विबह्वङ्गकरणादुपकारतारतम्यमिति प्राप्ते,—भेदेन विनियोगाच्चित्रोद्भिदादीनां निरपेक्षपशुफलसाधनता, अङ्गानां तु प्रधानविधिनैकेन युगपदितिकर्तव्यतात्वेन विधानात्सहितानामेव क्रतूपकारकत्वमिति समुच्चय इति सिद्धान्तः ॥ २ ॥

काम्यकर्मणां भूयोऽभ्यासाधिकरणम् ॥ ३ ॥

**कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ ३ ॥**

अपूर्वकल्पनायां तस्य कर्मजन्यत्वं फलजनकत्वं फलपर्यन्तस्थायित्वमित्यनेककल्पनाद्वरं कृतयागादात्मनः फलं सकृत्प्रयोगेऽपि च कृतयागत्वसंभवान्न पुनः प्रयोग इति प्राप्ते,—यागजन्यातिशयं विना कृतयागाकृतयागयोरविशेषादपूर्वावश्यकत्वे तस्य फलनाश्यतया फलान्तरार्थं बहुफलेप्सुनाऽसकृत्प्रयोगः कर्तव्य इति सिद्धान्तः ॥ ३ ॥

अवघातादीनामातण्डुलनिष्पत्तेरभ्यासः ॥ ४ ॥

**क्रियाणामर्थशेषत्वात्प्रत्येकं निर्वृत्त्यापवर्गः स्यात् ॥ ४ ॥**

सकृदवघातेऽपि व्रीहीनवहन्तीति शास्त्रार्थसिद्धेस्तद्दर्शनाददृष्टकल्पनात्सकृदेवावघात इति प्राप्ते,—अवघातेनेष्टं कुर्यादित्यवगतौ दृष्टवितुषीभावस्य प्रयोजनत्वावगमात्तस्य चावृत्तिसाध्यत्वादश्रुताप्यावृत्तिः कार्या। सर्वौषधावघातस्य त्वदृष्टार्थत्वान्नावृत्तिरिति सिद्धान्तः ॥ ४ ॥

प्रयाजाद्यङ्गानां सकृदनुष्ठानम् ॥ ५ ॥

**क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात् ॥ ५ ॥**

अङ्गानां पुनः पुनः प्रयोगः प्रधानोपकाराऽतिशयार्थं फलभूमार्थिना कार्य इति प्राप्ते,—अङ्गानामफलसाधनतया तन्मात्राभ्यासेन फलभूयस्त्वासंभवादुपकारातिशयस्य चाविहितयाऽऽवृत्त्याऽसंभवान्न तत्तन्मात्रावृतिः किंतु साङ्गप्रधानावृत्तिरेव फलभूमार्थिन इति सिद्धान्तः ॥ ५ ॥

बहुवचनस्य त्रित्वपर्यवसायित्वम् ॥ ६ ॥

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ६ ॥**

वसन्ताय कपिञ्जलानालभत इत्यादिषु बहुत्वस्य श्रवणादधिकसंख्यया फलभूयस्त्वं विनाऽनुष्ठानानुपपत्तेस्तत्कल्पनमिति प्राप्ते,—बहुत्वश्रवणेऽपि प्राथमिकत्रित्वसंख्यया चरितार्थत्वान्न शास्त्रस्याधिकसंख्यापरत्वं, तेन न हिंस्यादिति निषेधशास्त्रविषयत्वान्न चतुराद्यालम्भ इति सिद्धान्तः ॥ ६ ॥

उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनविधानम् ॥ ७ ॥

**उत्तरासु तु यावत्स्वमपूर्वत्वात् ॥ ७ ॥**

सान्नायदोहे श्रुतं वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीति तत्र तिसृणामेवोत्तरासां पूर्ववद्दोह इति प्राप्ते,—नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्नित्यनेन कृत्स्नस्य पयसो हविष्ट्वावगमात्सर्वासां दोहयतीति सिद्धान्तः ॥ ७ ॥

प्रधानभेदेऽप्यङ्गानां तन्त्रम् ॥ ८ ॥

**प्रधानकर्मत्वादङ्गानां तद्भेदात्कर्मभेदः स्यात् ॥ ८ ॥**

दर्शपूर्णमासयोः प्रयाजादीनि प्रतिप्रधानं भेदेन कार्याणीति प्राप्ते,—संहत्य फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपदनुष्ठीयमानेषु प्रधानेषु सर्वार्थतया क्रियमाणं प्रयाजादि विशेषाग्रहणात्तन्त्रेणैवोपकरोति भेदेनानुष्ठाने पूर्णमास्यां पूर्णमास्येत्येकप्रयोगत्वं बाध्येत, तस्मादेकदेशकालकर्तृकाणामङ्गतन्त्रतेति सिद्धान्तः ॥ ८ ॥

कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानम् ॥ ९ ॥

**व्याख्यातं तुल्यकालानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ९ ॥**

आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवमित्यत्राग्नेययोस्तन्त्रेणानुष्ठानं देवतैक्यादिति प्राप्ते,—सौम्यात्पूर्वमनन्तरं वा सकृ-

दाग्नेयानुष्ठाने सौम्यानन्तर्यस्याग्नेये, आग्नेयानन्तर्यस्य च सौम्ये बाधापत्तेः, पृथगेवानुष्ठानमिति सिद्धान्तः ॥ ९ ॥

इति श्रीन्यायबिन्दौ एकादशाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## एकादशाध्यायस्य द्वितीयः पादः ।

आग्नेयादीनां प्रधानानां तन्त्रम् ॥ १ ॥

**एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् स्यात् ॥ १ ॥**

दर्शपूर्णमासयोर्देशकालकर्तृफलानां कर्मस्वरूपान्वयित्वेनाग्नेयादिभिरन्योन्यनिरपेक्षैरुत्पत्तिवाक्यावगतैः संबन्धान्न तन्त्रता य इष्ट्येतिवाक्ये पूर्णमास्यादिकालस्येष्टिष्विव, तस्मादेकस्यां पूर्णमास्यामाग्नेयोऽन्यस्यामग्नीषोमीय इतिरीत्या षट्सु पर्वसु षड्यागाः कार्याः । एवं च प्रधानमात्रे कालाद्यन्वयान्नाङ्गानां प्रधानकालत्वादिनियमः । न चैवं सति फलवाक्यावगतस्य षण्णां साहित्यस्य बाधः, प्रत्येकं फलजनकत्वस्यानङ्गीकारादिति प्राप्ते,—प्रथमतो भाव्याकाङ्क्षायां फलवाक्येनान्वयात्तत्र च साहित्येन कर्तव्यत्वावगतौ कालाद्यन्वयात्सहितानामेव तन्त्रेण कालादयः साङ्गप्रयोगस्य कालाद्यन्वयादङ्गानामपि प्रधानकालत्वादिति सिद्धान्तः ॥ १ ॥

दर्शपूर्णमासेष्टिषु संघभेदेनाङ्गानां भेदेनानुष्ठानम् ॥ २ ॥

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ २ ॥**

दर्शपूर्णमासयोः पर्वद्वये क्रियमाणयोरङ्गानि तन्त्रं, प्रयोगविप्रकर्षेऽप्यङ्गावृत्तौ मानाभावात् । वपया प्रातःसवन इत्यादिपशुयागविप्रकर्षेऽप्यङ्गतन्त्रताङ्गीकारादिति प्राप्ते,—पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति त्रिकद्वयस्य साङ्गस्य पर्वद्वये प्रयोगविधानादङ्गावृत्तिः पशौ तु वपाप्रचारादिमात्रस्य भिन्नकालविधिर्न तु पशुप्रयोगस्य, अतो नाङ्गावृत्तिः । एवं चातुर्मास्ये राजसूये च द्रष्टव्यमिति सिद्धान्तः ॥ २ ॥

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानम् ॥ ३ ॥

**तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ ३ ॥**

अध्वरकल्पाख्यायामिष्टौ आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे सर-

स्वतीमाज्यस्य यजेत वार्हस्पत्यश्चरुः एवेमव मध्यन्दिने अपराह्णे च त्रिकद्वयं पुरोडाशयोः परमेकादशकपालत्वं द्वादशकपालत्वं चेति विशेषः । तत्र पुरावाचः प्रवदितोर्निर्वपेदिति श्रुतं तत्र प्रकरणाविशेषात्सर्वनिर्वापापकर्षः तेन च तदन्तस्यान्वाधानाद्यङ्गकाण्डस्यापकर्षो वचनादन्यकालमप्यङ्गकाण्डं प्रधानोपकारकमित्यविशेषादङ्गतन्त्रतेति प्राप्ते,—प्रातःकालनिर्वापस्यैव पुरावाच इति विशेषविधानान्नान्यकालाङ्गापकर्षः, अतः प्रधानकालभेदेनाङ्गावृत्तिरिति सिद्धान्तः ॥ ३ ॥

वसाहोमस्य तन्त्रेणानुष्ठानम् ॥ ४ ॥

**वसाहोमस्तन्त्रमेकदैवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ ४ ॥**

अग्नीषोमीये पशौ याज्यार्द्धर्चान्ते वसाहोमं जुहोतीति श्रुतो वसाहोमः प्राजापत्यपशुषु सहश्रपणाद्वसाया एकत्वादेकदेवतत्वाच्च याज्यार्द्धर्चान्तैक्याच्च सकृत्कर्तव्य इति स्पष्टम् ॥ ४ ॥

देवताभेदे वसाहोमानां भेदेनानुष्ठानम् ॥ ५ ॥

**कालभेदाच्चावृत्तिर्देवताभेदे ॥ ५ ॥**

भिन्नदेवतेषु तु पशुषु याज्यार्द्धर्चान्तभेदान्न सकृद्वसाहोमः किंतु भेदेनेति सिद्धान्तः ॥ ५ ॥

यूपैकादशिन्यां तन्त्रेण यूपाहुतिः ॥ ६ ॥

**अन्ते यूपाहुतिस्तद्वत् ॥ ६ ॥**

पशौ यूपान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति यूपाहुतिः श्रुता, सा यूपैकादशिन्यां यूपान्तिकदेशभेदाद्भेदेन कार्येति प्राप्ते,—सर्वयूपान्तिकदेशस्यैकस्यैव संभवात्सकृदेव यूपाहुतिरिति सिद्धान्तः ॥ ६ ॥

साङ्गावभृथस्याप्स्वनुष्ठानम् ॥ ७ ॥

**अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगः ॥ ७ ॥**

अप्स्ववभृथेन चरन्तीति प्रधानमात्रमप्स्वङ्गानि त्वाहवनीय एवेति प्राप्ते,—तृतीयानिर्देशादवभृथकरणिकायां भावनायां श्रुताः आपस्तदन्तर्गतानामङ्गानामपि भवन्ति । काम्या इष्टयस्ता उपांशुकर्तव्या इत्यत्र तु प्रधानमात्रश्रुतेस्तन्मात्राङ्गमुपांशुत्वमिति भेद इति सिद्धान्तः ॥ ७ ॥

उत्तरदक्षिणविहारयोर्भेदेनानुष्ठानम् ॥ ८ ॥

**दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वतन्त्रं विक्रियेत ॥ ८ ॥**

वरुणप्रघासेषु विहारद्वये विभज्याहवनीयः स्थाप्यते, तत्रोत्तरे विहा-

रेऽष्टौ हवींषि अध्वर्युश्च। दक्षिणे तु मारुत्यामिक्षा प्रतिप्रस्थाता च। तत्राङ्गानां तन्त्रता। न च देशभेदः मारुत्या दक्षिणे आसादनेऽपि होमाभावादुत्तरविहार एव तदनुष्ठानादिति प्राप्ते,—होमार्थतया प्राप्तस्यासादनस्य नियमविधानाद्धोमार्थमेव तत् अतः प्रधानदेशभेदादङ्गावृत्तिरिति सिद्धान्तः। नचोत्तरवैहारिकाङ्गोपकारैः प्रसङ्गसिद्धिः, अन्यतन्त्रमध्यपतिते हि प्रसङ्गः, अत्र तु युगपदेव सर्वविधिरित्यगृह्यमाणविशेषत्वादावृत्तिरेव युक्तेति सिद्धान्तः ॥ ८ ॥

उत्तरदक्षिणविहारयोः कर्त्रभेदः ॥ ९ ॥

## कर्तृभेदस्तथेति चेत् ॥ ९ ॥

अध्वर्युप्रतिप्रस्थातारावुत्तरदक्षिणविहारयोरव्यवस्थितौ। ब्रह्मा होताऽऽग्नीध्रश्च भिन्नाः स्युर्देशभेदादिति प्राप्ते,—त्रिभिरेवोभयत्रापि कार्यसिद्धेर्न भेदः चातुर्मास्यानां पञ्चर्त्विज इति वचनाच्चेति सिद्धान्तः ॥९॥

उत्तरदक्षिणविहारयोरापराग्निकहोमानां भेदेनानुष्ठानम् ॥ १० ॥

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ १० ॥

आपराग्निकपत्नीसंयाजादीनां देशाभेदात्तन्त्रत्वप्राप्तौ कर्तृभेदाद्भेद इति सिद्धान्तः ॥ १० ॥

वाजपेये ब्रह्मसाम्न्यालम्भस्य कर्मशेषप्रतिषेधार्थत्वम् ॥ ११ ॥

## पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ११ ॥

वाजपेये प्राजापत्यान्प्रकृत्य तान् पर्यग्निकृतानुत्सृजति ब्रह्मसाम्न्याऽलभत इति श्रुतं, तत्र पर्यग्निकरणान्ताङ्गरीतिविधानान्निराकाङ्क्षाः प्राजापत्या ब्रह्मसाम्नीति कर्मान्तरविधिरिति प्राप्ते,—वाक्यभेदानेकादृष्टकल्पनाप्रसङ्गात्पर्यग्निकरणोत्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले उत्कर्षविधिरयमुत्सृजतिस्तु तत्कालेऽर्थप्राप्तानुवाद इति सिद्धान्तः ॥ ११ ॥

अहीने उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थत्वम् ॥ १२ ॥

## पञ्चशारदीयास्तथेति चेत् ॥ १२ ॥

पञ्चशारदीयो नाम पञ्चाहः तत्र वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति। सप्तदशपृश्नीनुक्ष्णस्तान्पर्यग्निकृतान्नितर आलभन्ते प्रेतरानुत्सृजन्ति ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्ष्णस्तान्पर्यग्निकृतानित्यादिपूर्ववत्। एवं तृतीये चतुर्थे च व-

त्सरं स्त्रीपशुयागानां समस्तानुष्ठानम्, उक्ष्णां पर्यग्निकृतानामुत्सर्गमुक्त्वा पञ्चमे वर्षे दीक्षित एतानुक्ष्णस्त्रींस्त्रीनन्वहमालभेत पञ्चोत्तमेऽहनीति- श्रुतं त्रिवत्साः त्रिवर्षाः अप्रचीत्ताः अप्रसूता; पृश्नीन् अल्पशरीरान्, राजीवा राजीववर्णाः तत्रोत्सृष्टानामेवोक्ष्णां त्रींस्त्रीनित्यालम्भोत्कर्षवि- धिः । वचनात्तु पर्यग्निकृतानामपि पुनः पर्यग्निकरणं न विरुध्यत इति प्राप्ते,—त्रींस्त्रीनिति चान्वहमिति चानैकार्थविधौ वाक्यभेदात् पञ्चोत्तमे ऽहनीति चार्थभेदात्तत्प्रसङ्गात्संख्याकालविशिष्टापूर्वकर्मविधिरेवायम् । एवं चालम्भोत्कर्षाभावात्तदन्ताङ्गरीतिविधानेन प्रथमवर्षोपक्रान्तानामुक्ष- यागानां तत्रैव समाप्तिः । द्वितीयादिष्वन्य एव यागाः देवतानुषङ्गेन चतुस्त्रिंशत् । पञ्चमे चान्येषामेवोक्ष्णामालम्भ इति सिद्धान्तः ॥ १२ ॥

अभिषेचनीयदशपेययोर्भेदेन प्रयोगः ॥ १३ ॥

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तस्मा- त्समानं तन्त्रं स्यात् ॥ १३ ॥**

राजसूये अभिषेचनीयाख्यसोमयागानन्तरमिष्टिविशेषास्ततः पुनर्द- शपेयाख्यः सोमयागः, तत्र सह सोमौ क्रीणाति अभिषेचनीयस्य दश- पेयस्य चेति वचनादभिषेचनीयसोमक्रयकाले दशपेयक्रयोऽपकृष्यते तेन तत्पूर्वपदार्थानामपकर्षः तदन्तमपकर्षे स्यादिति न्यायात् अतः समानत- न्त्रावेताविति प्राप्ते,—उपसंवादमात्रस्यात्र तन्त्रतोच्यते नतु मुख्यक्रयस्य दशपेये सद्यः सोमं क्रीणातीति वचनात् द्वयोस्तन्त्रत्वेऽभिषेचनीयेऽव- भृथदर्शनानुपपत्तेश्च तस्मान्मुख्यक्रयापकर्षाभावान्न तदन्तापकर्ष इति न सहोपक्रमत्वं तयोः किं तु कालभेदाद्भिन्नतन्त्रत्वमेवेति सिद्धान्तः ॥१३॥

वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीत्यस्य कर्मान्तरोपदेशत्वम् ॥१४॥

**निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदान- विप्रकर्षः स्यात् ॥ १४ ॥**

वरुणप्रघासेषु वारुणीमामिक्षां विधाय वारुण्या निष्कासेन तुषैश्चा- वभृथं यन्तीति श्रुतं, तत्र निष्कासस्यामिक्षैकदेशत्वात्तस्यैव कर्मणोऽयम- भ्यासः। अवभृथशब्दस्तु वरुणदेवतासामान्याद्गौणः। अतो न स्विष्टकृदादेः पुनः करणमिति प्राप्ते,—अवभृथशब्दानर्थक्यापत्तेस्तद्धर्मककर्मान्तरविधिः । तच्च न प्रतिपत्तिकर्म किंतु प्रधानं प्रसिद्धावभृथसाम्यात् । अन्यदीयस्यापि द्रव्यस्यैकदेशो वचनादन्यत्र विनियुज्यत इति सिद्धान्तः ॥ १४ ॥

प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मत्वम् ॥ १६ ॥

उदयनीये च तद्वत् ॥ १५ ॥

ज्योतिष्टोमे प्रायणीयश्चरुरुदयनीयश्च तत्र प्रायणीयनिष्कासे उदयनीयमनुनिर्वपतीति श्रुतं, तत्र प्रायणीयनिष्कासस्येयं प्रतिपत्तिः यदुदयनीयनिर्वापाधारतेति प्राप्ते,—सप्तम्या निष्कासस्य गुणत्वं द्वितीययोदयनीयस्य भाव्युपयोगित्वात्संस्कार्यत्वम्। नच प्रयाजशेषवन्निष्कासे किंचिद्दृष्टं प्रयोजनमस्ति तस्मादुदयनीयसंस्कारार्थः प्रायणीयनिष्कासे निर्वाप इति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायविन्दौ एकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

## एकादशाध्यायस्य तृतीयः पादः।

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यत्वम् ॥ १ ॥

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

स्पष्टम् ॥ १ ॥

आधानस्य तन्त्रेणानुष्ठानम् ॥ २ ॥

द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥२॥

आधानस्य कर्माङ्गत्वे प्रतिकर्म प्रयाजादिवदावृत्तिः, नतु तन्त्रत्वं तत्तत्संनिधानेन विशेषग्रहणादिति प्राप्ते,—स्वतन्त्रकालत्वात् आधानकाले कर्मविशेषाभिसंधानाभावादगृह्यमाणविशेषतया तन्त्रत्वमेवेति सिद्धान्तः २

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानम् ॥ ३ ॥

यूपश्चाकर्मकालत्वात् ॥ ३ ॥

यूपोऽग्नीषोमीयादिपशुत्रयस्य तन्त्रं न भवति दीक्षासु यूपं छिनत्तीत्यग्नीषोमीयार्थस्यापकर्षात्। अन्येषां स्वकाल एव तदनुष्ठानादतो विशेषग्रहणाद्भेद इति प्राप्ते,—अविशेषेण सर्वयूपापकर्ष एव आद्यमात्रापकर्षेऽपि प्रधानकालबाधस्याविशेषादपूर्वविधित्वाविशेषाच्च। पुरावाचः प्रवदितोरित्यत्र तु दोषद्वयाप्रसङ्गायाद्यनिर्वापस्यैवापकर्ष इति भेदः। अतो यूपः सर्वेषां तन्त्रमिति सिद्धान्तः ॥ ३ ॥

यूपसंस्काराणां तन्त्रेणानुष्ठानम् ॥ ४ ॥

संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ४ ॥

यूपच्छेदनस्यैवापकर्षादितरसंस्काराणां प्रधानकालत्वाद्विशेषग्रहणेन

पश्वन्तरे पुनः प्रयोग इति प्राप्ते,—यूपं छिनत्तीत्यस्य छेदनेन यूपं कुर्यादित्यर्थः यूपस्यासिद्धत्वात् । नच छेदनमात्रेण तत्करणं संभवतीति तक्षणादीनामपि छिनत्तीत्युपलक्षणं छेदनमात्रापकर्षेऽपि वा द्वारस्य यूपस्य साधारणत्वात्तेषामपि तन्त्रमिति सिद्धान्तः ॥ ४ ॥

स्वरोः साधारण्यम् ॥ ५ ॥

स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ५ ॥

पश्वञ्जनापवर्गे स्वरोरपवर्गादञ्जनान्तरेऽन्यस्योपादानमिति प्राप्ते,—यः प्रथमः शकलः स स्वरुरिति वचनान्नान्यशकलोपादानं यूपच्छेदनकाल एव व्यामोहनिवृत्त्यर्थं तदुपादानमिति न विशेषग्रहणम् , अतस्तन्त्रतैवेति सिद्धान्तः ॥ ५ ॥

द्वादशाहेऽन्त्याह एव कृष्णविषाणाप्रासनम् ॥ ६ ॥

अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादप्रथमे वाऽहनि विकल्पः स्यात् ॥ ६ ॥

सोमे कृष्णविषाणया कण्डूयत इति नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति च श्रुतं, तत्राहर्गणेषु प्रथमेऽहनि विषाणाप्रासने उत्तरेष्वहःसु दक्षिणानयनप्राग्भाविपदार्थानां विषाणाकण्डूयनमङ्गत्वाद्बाध्येत, अन्तेऽहनि प्रासने तु पूर्वेष्वहसुः दक्षिणानयनोत्तरपदार्थानां पाणिकण्डूयनमङ्गं बाध्येत विषाणासत्त्वे तयैव कण्डूयननियमादतः प्रथमेऽन्त्ये वा प्रासनमिति विकल्प इति प्राप्ते,—अन्त्येऽहन्येव प्रासनं पाणिकण्डूयनं च न शास्त्रीयमिति न तद्बाधे दोष इति सिद्धान्तः ॥ ६ ॥

राजसूयेऽन्त्ये एव हविष्कृत्काले वाग्विसर्गः ॥ ७ ॥

वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ ७ ॥

दर्शे प्रणीताः प्रणेष्यन्वाचं यच्छति तां सहविष्कृता विसृजतीति श्रुतं हविष्कृदाह्वानकाल इत्यर्थः । तत्र नानाबीजेषु कृष्णाजिनादिफलीकरणान्तेनानुसमय इत्युक्तम् । तत्र प्रथमेनान्त्येनवा हविष्कृता वाग्विसर्ग इति विकल्पः । प्रथमविसर्गे उत्तरेषां बीजानां हविष्कृत्प्राग्भाविनां बाधवदन्तिमविसर्गे पूर्वबीजानांहविष्कृदुत्तरपदार्थानां वाग्विसर्गबाधस्य तुल्यत्वात् वाग्विसर्गस्य विसृज तीतिशास्त्रीयत्वादिति प्राप्ते,—वाग्यमावधिमात्रं हविष्कृतेति विधीयते न विसर्गः, वाक्यभेदाददृष्टकल्पनयोरापत्तेः । विसर्गस्यार्थप्राप्तत्वाच्च न तद्बाधे दोष इति सिद्धान्तः ॥ ७ ॥

अग्नीषोमीये पौरोडाशिककाले एव वाग्विसर्गः ॥ ८ ॥

**पशौ च पुरोडाशे च समानतन्त्रं भवेत् ॥ ८ ॥**

हविष्कृदाह्वानं पशावप्यस्तीति कृत्वा चिन्त्यते—पुरोडाशस्य प्रासङ्गिकत्वात्पाशुकेनैव वाग्यमेन कार्यसिद्धेः पशुकाल एव वाग्विसर्ग इति शङ्कायां,—वाग्यमस्य कर्तृसंस्कारत्वाद्विसृष्टवाचा क्रियमाणाः पौरोडाशिका विगुणाः स्युः अतः पुरोडाशकाले वाग्विसर्ग इति सिद्धान्तः ॥ ८ ॥

अग्निचयनेऽग्निविमोकस्य प्रधानापवर्गकालता ॥ ९ ॥

**अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्कर्मापवर्गे विमोकः स्यात् ॥ ९ ॥**

अग्नौ श्रुतम् । अग्निं युनज्मि शवसा घृतेनेति जुहोति अग्निमेव तद्युनक्ति पाङ्क्तो यज्ञ इति तथा इम ᳪस्तनमूर्जस्वन्तं धयामि इत्याज्यस्य पूर्णां स्रुचं जुहोति एषाऽस्याग्नेर्विमोक इति, तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगोऽपि तथा । अतः सर्वापवर्गे विमोक इति प्राप्ते,—पाङ्क्तो यज्ञ इति वाक्यशेषाद्यज्ञार्थो योगः । अतः प्रधानापवर्गे विमोक इति । अत एव सौमिकमपि वरणं भ्रातृव्यमेव यज्ञस्याशीर्गच्छेदिति वाक्यशेषात्तुल्यन्यायेन केवलप्रधानार्थं, तेनावभृथे तदभावाद्धोतृवरणमबाधितं प्राप्तमिति तत्प्रतिषेधस्य न होतारं वृणीत इत्यस्य संगतिः । अन्यथा सौमिकवरणस्यावभृथार्थत्वे होतृवरणप्राप्त्यभावात्प्रतिषेधानुपपत्तिः । द्वादशाहे च प्रत्यहं योगविमोकदर्शनं लिङ्गं, नन्वेवमपि अवभृथस्यापूर्वत्वाद्धोतृवरणस्याप्राप्तिरेवेति चेत् अत्राहुः—अपूर्वताया एवेयं स्तुतिः नतु निषेध इति । वस्तुतस्तु अवभृथस्यापूर्वत्वेऽप्याज्यभागार्थत्वेन होतृवरणं प्राप्नोति साङ्गप्रधानार्थत्वादतो युक्तः प्रतिषेध इति । तदेतद्भाष्यव्याख्यानम् । वार्तिके तु विपरीतं, वाक्यशेषाल्लिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः । अग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः वाक्यशेषस्तु पञ्चभिर्युनक्तीति गुणविधौ श्रुतः । नचासावुत्पत्तिवाक्यावगतसर्वार्थत्वनिवर्तनक्षमः, किंच यज्ञशब्दो न प्रधानमात्रवचनः किंतु यागमात्रवचनः । अतो न केवलप्रधानार्थत्वम् । अवभृथे च सौमिकवरणसत्त्वेऽपि प्रवृत्ते होतरि क्रियमाणमदृष्टार्थं तद्वरणं प्राप्नोत्येवेति युक्तस्तन्निषेधः । द्वादशाहे तु प्रत्यहं योगविमोकयोर्विधिरेव न त्वनुवादो वैयर्थ्यादिति ॥ ९ ॥

उपसत्कालस्य सुब्रह्मण्याह्वानस्याहर्गणेषु तन्त्रम् ॥ १० ॥

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ १० ॥**

ज्योतिष्टोमे उपसत्काले सुब्रह्मण्याह्वानं तदहर्गणेषु प्रधानभेदात् भिद्यत इति प्राप्ते,—अप्रधानकालकत्वेन विशेषाग्रहणात्तन्त्रमिति सिद्धान्तः ॥ १० ॥

सुत्याकालिकस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानम् ॥ ११ ॥

**तत्कालत्वादावर्तेत प्रयोगतो विशेषसंयोगात् ॥ ११ ॥**

सुत्याकालीनमाह्वानमपि एकत्र कृतं सर्वसुत्योपकारकं संनिधिविशेषस्य यूपाहुतिवदतन्त्रत्वादिति प्राप्ते,—कर्मकालत्वेन विशेषग्रहणादहरन्तरे पुनः कार्यमिति सिद्धान्तः ॥ ११ ॥

देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्यैच्छिकत्वम् ॥ १२ ॥

**लौकिकेषु तु याथाकामी संस्कारार्थालोपात्स्यात् ॥ १२ ॥**

ऋत्विग्देशादीनां प्रयोगान्तरे भिन्नानामुपादानं पूर्वेषामेव चेत्यनियमः निरिष्टिकत्वदोषस्यैतादृशस्थले शिष्टैरनङ्गीकारादिति सिद्धान्तः ॥ १२ ॥

पात्राणामाकर्मसमाप्ति धारणम् ॥ १३ ॥

**यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ॥ १३ ॥**

स्रुवादिपात्रेष्वप्येवमेव । नचाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिः पूर्वपरित्यागे लुप्येतेति वाच्यं, तृतीयया गुणत्वावगमात्प्रतिपाद्यत्वाभावादिति प्राप्ते,—सिद्धान्तैकदेश्याह पूर्वपरित्यागे उत्तरप्रयोगात्प्रागेव यजमानमरणे यज्ञपात्राभावाद्दाहवैगुण्यं स्यादत उत्तरकालं यावत्तेषामेव धारणं तैरेव कार्यसिद्धेर्नान्योपादानमित्येवं स्थिते चिन्तान्तरं—दर्शपूर्णमासप्रभृति धारणमिति शङ्कायां पवमानेष्टिप्रभृति धारणमिति सिद्धान्तः । अन्यथा दर्शपूर्णमासाभ्यां प्रागेव यजमानमृतौ दाहवैगुण्यं स्यादिति । स्थितादुत्तरं—पात्राणामिह प्रतिपाद्यत्वमप्यस्ति दक्षिणे हस्ते जुहूमासादयतीत्यादि । तस्मात्तन्त्रतैव पात्राणामिति सिद्धान्तः ॥ १३ ॥

सर्वसोमानामुपरिष्टात्प्राजापत्यप्रचारः ॥ १४ ॥

**उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषाद-वाच्यो हि प्रकृतिकालः ॥ १४ ॥**

वाजपेये प्राजापत्यान्प्रकृत्य श्रुतम्—उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति । तत्र प्रकृतिवदार्भवपवमानकालेऽनुष्ठाने चोदकेनैव सिद्धे वचनवैयर्थ्यम् । अतः शस्त्रवतां सोमानामुपरिष्टात् प्रचारः प्राकृतकालसन्निधिलोभात् । अथवा तावताऽपि चोदकबाधादग्निष्टोमप्रचारादूर्ध्वमागन्तुकोक्थ्यादिविकारस्थाने प्रचार इति प्राप्ते,—सोमविकाराणां तत्कालत्वेऽपि पशुविकाराणां तदभावात्सामान्यतोदृष्टस्य धर्मप्रमाणत्वाभावाच्च सर्वसोमानामुपरीति सिद्धान्तः । तेन कालभेदात्क्रतुपशूनां प्राजापत्यानां च मनोतामन्त्रावृत्तिः । पूर्वपक्षे तु आर्भवकालैक्यपक्षे तन्त्रमिति ॥१४॥

सवनीये पुरोडाशे देवतोत्कर्षः ॥ १५ ॥

**उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः**
**पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ १५ ॥**

सवनीयपशौ प्राकृतसूक्तवाकस्य विकृतस्य पाठः । स चानुयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यते तस्मिन्नुत्कृष्यमाणे च पुरोडाशदेवतानां भृज्जन्निन्द्राय हरिवते धाना इत्यादीनां नोत्कर्षः, प्रासङ्गिकत्वादिति प्राप्ते,—अग्निमद्यहोतारमवृणीतायं सुन्वन् यजमान इति तन्त्रपदापेक्षत्वात्तदुत्कर्षे तदपेक्षाणामप्युत्कर्ष इति सिद्धान्तः ॥ १५ ॥

इति श्रीन्यायबिन्दौ एकादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## एकादशाध्यायस्य चतुर्थः पादः ।

राजसूये आग्नावैष्णवादिष्वङ्गानां भेदेनानुष्ठानम् ॥ १ ॥

**चोदनैकत्वाद्राजसूये ऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥१॥**

राजसूये भिन्नदक्षिणानि कर्माणि, आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा । सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणेति । तत्र देशकालफलाभेदात्तेभ्य एव कर्तृभ्यो भिन्नभिन्नदक्षिणासंभवादङ्गतन्त्रतेति प्राप्ते,—दक्षिणाभेदादानतिभेदात्तत्कृतकर्तृत्वस्य भेदः अन्यथा दक्षिणाभेदव्यवस्था न स्यात् । अतः प्रतिदक्षिणं तन्त्रभेद इति सिद्धान्तः१

राजसूये कर्तुस्तन्त्रम् ॥ २ ॥

**अनियमः स्यादिति चेत् ॥ २ ॥**

दक्षिणाभेदात्कर्तृत्वभेदे प्रयोगभेदात्तदङ्गभूतवरणस्यापि भेदः, तेन

तेष्वेव कर्तृष्वन्येषु वा तत्संभवादनियम इति प्राप्ते,—एकफलसाधनत्वाद्राजसूयार्थं सकृदेव वरणमतस्त एव कर्तारः । ननु विहितस्य वरणस्य प्रयोगभेदात्कर्मकालीनस्य पूर्णमास्यमावास्ययोरिव भेद एव स्यादिति चेत्, सत्यं, लौकिकस्य तु वरणस्याविघ्नसमाप्त्यर्थं तन्त्रतैवेति त एव कर्तार इति नियमसिद्धिरिति सिद्धान्तः ॥ २ ॥

अवेष्टावङ्गानां भेदः ॥ ३ ॥

## अवेष्टौ त्वैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ३ ॥

राजसूये अवेष्टिर्नाम पञ्चहविष्का तदङ्गं,तत्र पञ्चानां हविषां समानतन्त्रतैव, एकस्या एवावेष्टेः क्रतुमध्ये भिन्नतन्त्रत्वं 'यदि ब्राह्मणो यजेत्' इत्यादिक्रतुबहिःप्रयोगे 'बार्हस्पत्यं मध्ये निधाय' इतिवचनादेकतन्त्रत्वमिति वैरूप्यानौचित्यादिति प्राप्ते,—क्रतुमध्ये दक्षिणाभेदाद्भिन्नतन्त्रत्वमेव, बहिःप्रयोगे तु मध्यनिधानान्यथानुपपत्त्या समानतन्त्रत्वमिति प्रमाणबलाच्च वैरूप्यं न दोष इति सिद्धान्तः ॥ ३ ॥

पवमानेष्टिहविषां भेदेनानुष्ठानम् ॥ ४ ॥

## पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ४ ॥

आधाने यः कामयेतोत्तरोत्तरं वसीयान्स्यादिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषी हविषी निर्वपेदिति पवमानेष्टीनां काम्यप्रयोगः । तत्र सहनिरूप्याणीति वचनात्सर्वेषां समानतन्त्रतैव यः कामयेतेत्यनेन फलार्थत्ववत्प्रयोगभेदस्यापि विधाने वाक्यभेदादिति प्राप्ते,—नात्र हविषां फले विधिः, किंतु तदाश्रितः प्रयोगभेद एव फले विधीयते तस्मात् प्रथमं निरुप्य पश्चादुत्तरे समानतन्त्रे कुर्यादिति सिद्धान्तः ॥ ४ ॥

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वम् ॥ ५ ॥

## द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ ५ ॥

द्वादशाहे एकैकस्य यागस्य ज्योतिष्टोमप्रकृतिकत्वादेकैकमहर्द्वादशदीक्षं द्वादशोपसत्कं च कार्यं, द्वादशत्वसंख्याया दीक्षोपसदङ्गत्वात् । अथवा द्वादशाहशब्दस्य गुणविधित्वाद्द्वादशस्वेवाहःसु दीक्षोपसद्युक्तयागानुष्ठानं सद्य इति एवं सति साहित्यबाधप्रसंगाद्द्वादशस्वेवाहःसु साङ्गप्रधानानुष्ठानं कार्यमतश्चतुरहे दीक्षाः चतुरहे चोपसदः चतुरहे च सुत्या इति युक्तमिति प्राप्ते,—द्वादशाहेन यजेतेति सामानाधिकरण्या-

नामधेयत्वमेव तस्माद्वचनात् द्वादशाहःसु दीक्षाः तथोपसदस्तन्त्रेण कृत्वा द्वादशस्वहस्सु सुत्याः कार्याः प्रधानकालनिमित्तं च द्वादशाह इति नामधेयं तेन षट्त्रिंशता दिनैः प्रयोगसमाप्तिरिति सिद्धान्तः ॥५॥

प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानम् ॥ ६ ॥

भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दात् ॥ ६ ॥

सुत्याकालीनानां सवनीयपश्वादीनां प्रयोगैक्यात्तन्त्रत्वे प्राप्ते,—सुत्याभेदाद्विशेषग्रहणादावृत्तिरिति सिद्धान्तः ॥ ६ ॥

उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यत्वम् ॥ ७ ॥

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ ७ ॥

प्रकृतावुपसत्कालं सुब्रह्मण्याह्वानमित्यहे सुत्यामागच्छ मघवन्निति इतिकरणेन संख्योच्यते । चतुरह इत्यादि । तदिदमकर्मकालत्वाद्द्वादशाहे तन्त्रं तेन त्रयोदशाहे चतुर्दशाह इत्यावृत्तिः संख्यया विशेषग्रहणादिति प्राप्ते,—सुत्यामागच्छेति सुत्यासंबन्धिदेवतासंस्कारमात्रं विवक्षितं संख्याशब्दोऽहःशब्दश्चार्थसिद्धत्वान्न विवक्षितः अतो नावृत्तिरिति सिद्धान्तः ॥ ७ ॥

वाजपेये प्राजापत्येषु शलादीनां तन्त्रत्वम् ॥ ८ ॥

पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभूतत्वात्तन्त्रभावः स्यात् ॥८॥

एकदैवतेषु पशुषु कुम्भ्यादेस्तन्त्रत्वमिति स्पष्टम् ॥ ८ ॥

भिन्नदेवताकपशुष्वपि शलादीनां तन्त्रत्वम् ॥ ९ ॥

भेदस्तु संदेहाद्देवतान्तरे स्यात् ॥ ९ ॥

भिन्नदैवत्येषु सजातीयपशुषु सह श्रपणात्कस्या देवतायाः किमित्यज्ञानात्कुम्भ्यादिभेद इति प्राप्ते,—चिह्नकरणेनापि विवेकग्रहात्तन्त्रत्वमेव वसानां तु चिह्नासंभवेऽपि संसृष्टानां स्वस्वयाज्यार्धर्चान्तेषु हूयमानानां न किंचिद्वैगुण्यमिति सिद्धान्तः ॥ ९ ॥

भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानम् ॥ १० ॥

जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात् ॥ १० ॥

नानाजातीयेषु पशुषु न कुम्भ्यादितन्त्रत्वं, पाकवैषम्येण सहश्रपणे केषांचिदपक्वता केषांचिद्विलीनतेस्यापत्तेरिति सिद्धान्तः ॥ १० ॥

अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडशं कपालचतुष्टयम् ॥ ११ ॥

कपालानि च कुंम्भीवत्तुल्यसंख्यानाम् ॥ ११ ॥

बह्वश्वप्रतिग्रहे यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपाला-न्निर्वपेदिति चतुष्कपालाः पुरोडाशाः तत्र दीर्घेषु चतुर्ष्वेव कपालेषु सर्वेषां श्रपणसंभवाच्चतुष्कपालतन्त्रत्वप्राप्तौ,-सर्वेषां कपालावयवेषु श्रपणमेव स्यान्न चतुर्षु कपालेषु कस्यचिदतः प्रतिपुरोडाशं कपालभेद इति सिद्धान्तः ११

व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रानावृत्तिः ॥ १२ ॥

एकद्रव्यसंस्काराणां व्याख्यातमेककर्मत्वं तस्मिन्मन्त्रार्थनानात्वा-दावृत्तौ मन्त्रस्य सकृत्प्रयोगः स्यात् ॥ १२ ॥

अवरक्षो दिवः सपत्नं वध्यासमित्यवघातमन्त्रस्य प्रतिप्रहारमावृत्तिः प्रधानावृत्तौ अङ्गावृत्तेरिति प्राप्ते,-अवघातकरणिका तन्दुलीभावफलिका भावना अवहन्तीति विहिता। तदङ्गं मन्त्रः, न च तदावृत्तिरिति न मन्त्रावृत्तिरिति सिद्धान्तः ॥ १२ ॥

नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्तिः ॥ १३ ॥

द्रव्यान्तरे कृतार्थत्वात्तस्य पुनःप्रयोगान्मन्त्रस्य तद्गुणत्वात् पुनःप्रयोगः स्यात्तदर्थेन विधानात् ॥ १३ ॥

नानाबीजेषु व्रीहिश्यामाकादिष्वेकदाऽनुष्ठीयमानेषु विशेषाग्रहणाद-वघातमन्त्रस्तन्त्रमिति प्राप्ते,-बीजभेदेन विशेषग्रहणाद्बीजान्तरे पुनः प्रयोग इति सिद्धान्तः ॥ १३ ॥

दर्शपूर्णमासादौ प्रतिनिर्वपणादि मन्त्रावृत्तिः ॥ १४ ॥

निर्वपणलवनस्तरणाज्यग्रहणेषु त्वेकद्रव्यवत्प्रयोजनै-कत्वात् ॥ १४ ॥

दर्शपूर्णमासयोश्चतुरो मुष्टीन्निर्वपति, अयुग्वा युग्वा मुष्टिं लुनाति त्रिधातु पञ्चधातु वा वेदिं स्तृणाति, चतुर्जुह्वां गृह्णातीति श्रुतं, तत्र ससंख्याना-मेककर्मकत्वादवघातमन्त्रवन्निर्वापादिमन्त्राणां देवस्य त्वा बर्हिर्देवसदनम् ऊर्णा म्रदसं त्वा स्तृणामि, शुक्रं त्वेत्यादीनां, सकृत्प्रयोगप्राप्तौ,- प्रति-मुष्टि प्रतिस्तरणं प्रतिग्रहणं च निर्वाप्यादिभेदान्मुष्ट्यादिभेदान्मन्त्रभेद इति सिद्धान्तः ॥ १४ ॥

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रानावृत्तिः ॥ १५ ॥

वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ १५ ॥

वेदिरसि बर्हिषेत्वेति त्रिर्वेदिं प्रोक्षतीत्यत्र प्रोक्षणार्थंमन्त्रस्य तदावृत्तावावृत्तिरिति प्राप्ते,—त्रिरभ्यस्तप्रोक्षणक्रियायां मन्त्रस्याङ्गत्वात्तस्याश्चैकत्वात्सकृदेव मन्त्र इति सिद्धान्तः ॥ १५ ॥

कण्डूयनमन्त्रस्य सकृत्प्रयोगः ॥ १६ ॥

## कण्डूयने प्रत्यङ्गं कर्मभेदात् ॥ १६ ॥

कृष्णविषाणया कण्डूयने मंत्रः—कृष्यै त्वा सुसस्याया इति, तत्र पाण्याद्यङ्गेषु युगपत्कण्डूत्पत्तौ कण्डूयनस्य तदपनेयदुःखस्य संस्कार्याणामङ्गानां च भेदात्प्रत्यङ्गं मन्त्रावृत्तिरिति प्राप्ते,—स्वस्य कण्डूतिदुःखशमनाय कण्डूयनं तदर्थो मन्त्रोऽगृह्यमाणविशेषत्वात्तन्त्रमेवेति सिद्धान्तः॥१६

ज्योतिष्टोमे स्वप्नादिषु मन्त्रानावृत्तिः ॥ १७ ॥

## स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ १७ ॥

ज्योतिष्टोमे स्वप्नार्थो मन्त्रः, त्वमग्ने व्रतपा असीति, तथा नदीतरणमन्त्रो देवीरापो अपान्नपादिति, तथाभिवृष्टस्य उन्दती बलं धत्तेति, तथामेध्यप्रतिमन्त्रणमन्त्रः अबद्धं मनो दरिद्रं चक्षुरिति, तेषां प्रबुध्य पुनः स्वापे स्रोतोभेदः। संतानेनाभिवर्षणभेदे युगपदनेकामेध्यदर्शने वाऽऽवृत्तिप्राप्तौ,—अवान्तरस्वापादेरचिकीर्षितत्वाच्चिकीर्षितरात्रिनिद्रादेरेकत्वान्मन्त्रतन्त्रतेति सिद्धान्तः ॥ १७ ॥

दीक्षितस्य प्रयाणे मन्त्रानावृत्तिः ॥ १८ ॥

## प्रयाणे त्वार्थनिर्वृत्तेः ॥ १८ ॥

दीक्षितप्रस्थाने मन्त्रः—भद्रादभिश्रेय इति । तत्राप्यवान्तरप्रयाणमतन्त्रीकृत्येष्टदेशप्रापकप्रयाणैक्यात्सकृन्मन्त्र इति स्पष्टम् ॥ १८ ॥

उपरवमन्त्रस्यावृत्तिः ॥ १९ ॥

## उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ १९ ॥

ज्योतिष्टोमे चत्वार उपरवाख्या गर्ताः तत्खननार्थो मन्त्रः रक्षोहणो वलगहनो वैष्णवान्खनामीति, स चतुर्णामपि तन्त्रं, वैष्णवानिति बहुवचनान्तत्वात्सर्वाभिधानोपपत्तेः, अन्यथा बहुवचनानुपपत्तेरिति प्राप्ते,—खननक्रियाणां भिन्नानामेव क्रमेणोपक्रमाद्विशेषग्रहणेन मन्त्रावृत्तिरेव बहुवचनं तु पूजार्थमिति सिद्धान्तः ॥ १९ ॥

हविष्कृदादिमन्त्राणामावृत्तिः ॥ २० ॥

## हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् ॥ २० ॥

ज्योतिष्टोमे प्रतिसवनं पुरोडाशेषु हविष्कृदाह्वानं तन्त्रं, तथा वाजपेये क्रतुपशुभिः सहारब्धानां प्राजापत्यानां पर्यग्निकृत्वोत्सृज्य ब्रह्मसामकाले आलभ्यमानानां क्रतुपश्वालम्भकाले प्रातःसवने कृतमध्रिगुवचनं प्राजापत्यानामपि तन्त्रम्, एवमाग्नेयं कृष्णग्रीवं, सौम्यं बभ्रुम् आग्नेयं कृष्णग्रीवमिति कृष्णग्रीवयोर्यागद्वये अनुवाक्याया मनोतामन्त्रस्य च करणमन्त्रवद्विशेषाग्रहादिति प्राप्ते,—कालभेदेन विशेषग्रहादावृत्तिः करणवत्सन्निपातित्वाभावेऽप्यर्थप्रकाशनस्य कालान्तरे प्रणाशादिति सिद्धान्तः ॥ २० ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ एकादशाऽध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ ११ ॥

---

## द्वादशाध्यायस्य प्रथमः पादः।

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकारः ॥ १ ॥

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥**

विशेषाग्रहणे सकृत्कृतस्यानेकोपकारकत्वं तन्त्रत्वमुक्तं तदुपजीव्य प्रसङ्गो निरूप्यते। स च विशेषग्रहणादन्यार्थस्याप्यन्योपकारकत्वम्। अग्नीषोमीये पशावग्नीषोमीयं पुरोडाशं निर्वपतीति पुरोडाशोऽङ्गं, तत्र पशुकालानामङ्गानां तदर्थत्वमेव न तु भाविपुरोडाशार्थत्वमन्यार्थस्यान्यार्थत्वादर्शनात्, किंच काले साङ्गस्य विधिः। अतः स्वकाले साङ्गः पुरोडाशः कार्यः। एवं प्रसङ्गाश्रयणे प्रयाजानन्तर्यस्याज्यभागाङ्गस्य तदानन्तर्यस्य च प्रधानाङ्गस्य हानिः तस्मात्पृथगेव पुरोडाशे प्रयाजाद्यङ्गानीति प्राप्ते,—पाशुकतन्त्रेऽसमाप्ते तन्मध्यगतस्य पुरोडाशस्य तदङ्गोपकारेणैव निराकाङ्क्षत्वान्न पृथक् तदनुष्ठानं पुरोडाशप्रयोगविधिर्बोधयति अत उपकारलाभान्न प्रयाजक्रमादेरङ्गत्वमिति न वैगुण्यम्। उपकारे च न तादर्थ्यापेक्षा गोदोहनेनापि प्रणयनोपकारदर्शनादिति सिद्धान्तः ॥ १ ॥

पुरोडाशे आज्यभागयोः कर्तव्यत्वम् ॥ २ ॥

**जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ २ ॥**

आज्यभागावघातादिकमङ्गं पशौ नास्ति तदपि पुरोडाशे न कार्यं,

विद्यमानैरुपकारलाभेनातिदेशाकल्पनादिति प्राप्ते,—अतिदेशेनोपकाराणां पुरोडाशान्वयावगतौ पश्चात्प्रयोगविधिना तद्विधिः विनियोगोत्तरभावित्वात् तेनातिदेशेन पदार्थोपकारेष्ववगतेषु येषां न प्रसङ्गतो लाभस्तानेव विधत्ते नतु प्राप्तानिति सिद्धमाज्यभागावघाताद्यनुष्ठानमिति सिद्धान्तः। अप्रयोजके न प्रयुक्तिसामर्थ्यं, प्रसङ्गी तु प्रयुक्तिसमर्थ एव लाघवादन्यार्थमुपजीवतीत्यनयोर्विशेषः ॥ २ ॥

सोमे दार्शिकवेदेरकरणम् ॥ ३ ॥

**नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ३ ॥**

सोमे ऐष्टिककर्मार्थे महावेदेर्भेदेन प्राकृती वेदिः कार्या, महावेदः प्रचारार्थत्वेन हविरासादनार्थत्वाभावादिति प्राप्ते,—प्रचारार्थयापि प्रसङ्गाद्धविरासादनसिद्धेर्न पृथक् प्राकृती कार्येति सिद्धान्तः ॥ ३ ॥

दार्शिकस्रुगादिभिः पात्रैः सोमे तदङ्गेष्टिषु होमः ॥ ४ ॥

**पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ ४ ॥**

सोमाङ्गेष्विष्टिकर्मसु सौमिकैरेव पात्रैर्होमादिकार्यसिद्धिः प्रसङ्ग इति प्राप्ते,—जुह्वादिकार्याणां होमादीनां ग्रहादिभिः करणे वैगुण्यान्न तैः प्रसङ्ग इति सिद्धान्तः ॥ ४ ॥

शामित्रे पशुपुरोडाशश्रपणम् ॥ ५ ॥

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ ५ ॥**

पशौ शामित्रोऽग्निः श्रपणार्थः अतः पुरोडाशोऽपि तत्रैव श्रपयितव्यः, पशुतन्त्रोपजीवित्वादिति शङ्कायां पशुश्रपणेन पुरोडाशस्योपकारालाभात्पृथक् श्रपणे कार्ये गार्हपत्य एव तत्कार्यमन्यथा वैगुण्यादिति सिद्धान्तः ॥ ५ ॥

कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणम् ॥ ६ ॥

**श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ ६ ॥**

कौण्डपायिनामयनगते मासाग्निहोत्रे हविःश्रपणं शालामुखीये स्यात् ज्योतिष्टोमे शालामुखीय एव अत ऊर्ध्वं गार्हपत्यो भवतीति शालामुखीयस्य गार्हपत्यकार्ये विधानेन चोदकपरंपरया कुण्डपायिनामयनेऽपि तत्प्राप्तेरिति प्राप्ते,—नामातिदेशप्राबल्यात्तु अग्निहोत्रवत् मुख्यगार्हपत्य एव श्रपणमिति सिद्धान्तः। यत्तु गार्हपत्ये हवींषि श्रपयन्ती-

त्यनारभ्यविधेः सर्वार्थत्वादौपदेशिकत्वेन मुख्यगार्हपत्यस्यातिदेशिकाग्न्यप्राबल्यमिति तन्न अनारभ्याधीतस्य श्रपणद्वारकत्वात्तस्य च प्रकृतावेव श्रुतत्वात्तत्रैव निवेशः अन्यथा द्विरुक्ततापत्तेः । तस्मान्नामप्राबल्यादेव सिद्धान्तः प्रसङ्गनिरासायोक्त इति संक्षेपः ॥ ६ ॥

हविर्धानातिरिक्तशकटे पुरोडाशानां निर्वापः ॥ ७ ॥

हविर्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात् ॥ ७ ॥

ज्योतिष्टोमे हविर्धानाख्ययोः शकटयोः प्रवर्तने कृते पुरोडाशनिर्वापः प्रसङ्गात्तत्रैव कार्यः । अनसोऽधिनिर्वपतीति विधेस्ताभ्यामेव सिद्धेरिति प्राप्ते,—अपरेण गार्हपत्यं निर्वपतीति प्राकृतदेशस्य हविर्धानाभ्यामसिद्धेरनोऽन्तरमुपादेयम् मन्त्रवन्महावेद्यामवस्थापितयोर्हविर्धानयोः पत्नीशालायां नयनायोगादिति सिद्धान्तः ॥ ७ ॥

प्रायणीयादिषु दीक्षाजागरणस्याभावः ॥ ८ ॥

तद्युक्तं च कालभेदात् ॥ ८ ॥

सोमे दीक्षाकालं जागरणमुक्तं तेनैव प्रसङ्गसिद्धेर्न प्रायणीयादिषु चोदकप्राप्तं तत्कार्यमिति प्राप्ते,—दीक्षाकालकृतेन तदुत्तरभाविप्रायणीयादिष्वप्रमादरूपोपकाराभावात्तदर्थं पुनर्जागरणम् । अदृष्टार्थत्वेऽपि द्वयोर्जागरणयोरेकादृष्टार्थत्वे मानाभावादावृत्तिरेवेति सिद्धान्तः ॥ ८ ॥

विहारभेदे मन्त्रभेदः ॥ ९ ॥

मन्त्राश्च सन्निपातित्वात् ॥ ९ ॥

वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्निर्वापादिमन्त्रा अध्वर्युप्रतिप्रस्थात्रोरन्यतरेण पठनीयाः तन्त्रेण स्मारकत्वसंभवादिति प्राप्ते,—निर्वपामीत्यादेर्वक्तृप्रकाशकत्वान्न तन्त्रतेत्यावृत्तिरेवेति सिद्धान्तः ॥ ९ ॥

दीक्षणीयादिष्वग्न्यन्वाधानस्याभावः ॥ १० ॥

धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १० ॥

सोमाङ्गेष्वैष्टिकेष्वग्न्यन्वाधानं कार्यमिति प्राप्ते,—तस्य धारणार्थत्वात्सोमार्थधारणेनैव च प्रसङ्गसिद्धेर्न कर्तव्यमिति सिद्धान्तः ॥ १० ॥

दीक्षणीयादिषु व्रतोपायनभावः ॥ ११ ॥

तथा व्रतमुपेतत्वात् ॥ ११ ॥

एवं व्रतोपायनमपि न पुनः कार्यं सौमिकेनैव प्रसङ्गसिद्धेरिति ॥११॥

ऐष्टिकेष्वग्न्यन्वाधानाननुष्ठानम् ॥ १२ ॥

**ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ १२ ॥**

अग्न्यन्वाधानं देवतापरिग्रहार्थमपि ममाग्ने वर्च इति पूर्वमपि गृह्णाति देवता एव तत्पूर्वेद्युर्गृहीत्वा श्वोभूते यजत इति श्रुतेः। अतः प्रायणीयादिष्वपि तदर्थमग्न्यन्वाधानं कार्यमित्युक्ताक्षेपे प्राप्ते,—अग्निधारणरूपदृष्टफलसंभवे सत्यदृष्टदेवतापरिग्रहार्थत्वस्यार्थवादात्कल्पनाया असंभवात्संभवेऽपि वा दीक्षणीययैव तत्सिद्धिः। अग्निरवमो देवानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षत इति तदर्थवादश्रवणात्। यद्यपि दीक्षा सोमस्येति वचनात्सोममात्रार्था दीक्षणीया प्रधानदेवता एव गृह्णाति तथापि तत्र विश्वेदेवदेवतासत्त्वादङ्गदेवता अपि गृह्णाति अस्मिंश्च पक्षे दीक्षणीयायां कर्तव्यमेवाग्न्यन्वाधानं स्वदेवतापरिग्रहार्थं ततः परंतु न कार्यमिति विशेष इति सिद्धान्तः॥ १२ ॥

सोमे प्रायणीयादिषु ऐष्टिकसन्नहनाननुष्ठानम् ॥ १३ ॥

**सन्नहनं च वृत्तत्वात् ॥ १३ ॥**

प्रायणीयादिषु योक्त्रेण पत्नीं संनह्यतीति सन्नहनं प्राकृतं कार्यमिति प्राप्ते,—सोमार्थेनैव संनहनवासोधारितत्वान्न पुनः कार्यं वासोधारणार्थत्वाभावेऽपि वा संनद्धयैव कार्याणीत्यर्थस्यान्यार्थेनापि सिद्धिरिति न तदावृत्तिरिति॥ १३ ॥

सोमे प्रायणीयादिषु चोदकप्राप्तारण्याशनस्य प्रसङ्गसिद्धिः॥ १४ ॥

**अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ १४ ॥**

आरण्याशनमपि सौमिकेनैव प्रयोजनादिना कार्यसिद्धेर्न पृथक् कार्यमिति स्पष्टम् ॥ १४ ॥

सोमे ऐष्टिकेषु इडाभक्षेषु यजमानस्यानिवृत्तिः॥ १५ ॥

**शेषभक्षास्तथेतिचेन्नान्यार्थत्वात् ॥ १५ ॥**

एवं सतीडाभक्षणादयोऽपि न कार्या इति प्राप्ते,—इडां भक्षयन्तीति द्वितीया श्रुत्या संस्कार्यत्वावगमात्कार्यमेवेति सिद्धान्तः। तदेतत्षष्ठोक्तस्य प्रतिपत्त्यर्थत्वस्य प्रयोजनमुक्तम् ॥ १५ ॥

सोमे ऐष्टिकेष्वन्वाहार्याभावः॥ १६ ॥

**भृतत्वाच्च परिक्रयः ॥ १६ ॥**

दीक्षणीयादिषु प्राकृती अन्वाहार्यदक्षिणा देया दक्षिणा सोमस्ये-

तिवचनेन सौमिकदक्षिणायाः प्रधानमात्रार्थत्वादिति प्राप्ते,—अन्यार्थयापि प्रसङ्गसिद्धेर्न प्राकृती देयेति सिद्धान्तः ॥ १६ ॥

सोमे ऐष्टिकेषु शेषभक्षस्य कर्तव्यत्वम् ॥ १७ ॥

**शेषभक्षस्तथेति चेत् ॥ १७ ॥**

ऋत्विक्भक्षा अपि शेषप्रतिपत्त्यर्थाः नत्वानत्यर्थाः अतो न प्रधानदक्षिणया तेषां निवृत्तिरिति सिद्धान्तः ॥ १७ ॥

सोमे ऐष्टिकेषु होतृवरणसद्भावः ॥ १८ ॥

**प्रवृत्तवरणत्वात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ १८ ॥**

दीक्षणीयादिषु प्राकृतं होतृवरणं न कार्यं सौमिकेनैव तेन प्रसङ्गसिद्धेरिति सिद्धान्तः ॥ १८ ॥

आतिथ्याबर्हिषः प्रतिकर्म प्रोक्षणाद्यभावः ॥ १९ ॥

**यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ॥ १९ ॥**

यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति वचनात्त्रयाणामर्थेनोपात्ते बर्हिषि प्रोक्षणादिसंस्कारा अप्यातिथ्यायां कृता एव न प्रसङ्गादुपसदग्नीषोमीययोरप्युपकारकाः मध्यपाताभावेन प्रसङ्गायोगात् । नापि तन्त्रमातिथ्याकालत्वेन विशेषग्रहणादिति प्राप्ते,—तन्त्रमध्यपाताभावेऽपि बर्हिषः साधारणत्वात्तदर्थानां संस्काराणामप्यतनपवृत्तत्वान्न भेदेनानुष्ठानमिति सिद्धान्तः ॥ १९ ॥

आतिथ्याबर्हिषोऽग्नीषोमीयादिषु स्तरणे मन्त्रसद्भावः ॥ २० ॥

**देशपृथक्त्वान्मन्त्रोऽप्यावर्तते ॥ २० ॥**

अतिथ्यार्थं प्राग्वंशे स्तीर्णं तत आनीयापरेणोत्तरवेदिं पुनरग्नीषोमीयार्थं बर्हिस्तीर्यते । तत्रोर्णं म्रदसं त्वा स्तृणामीति स्तरणमन्त्रः पूर्वकृत एव प्रसज्यते बर्हिःसाधारण्यादिति प्राप्ते,—स्तरणस्य बर्हिषा वेदिं स्तृणातीति वेद्यर्थत्वात्तस्याश्च भेदान्मन्त्रावृत्तिः बर्हिरर्थत्वेऽपि स्तरणावृत्तेस्तदङ्गमन्त्रावृत्तिः अन्यथा तद्वैगुण्यापत्तेरिति सिद्धान्तः ॥ २० ॥

बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगः ॥ २१ ॥

**सन्नहनहरणे तथेति चेत् ॥ २१ ॥**

प्राग्वंशे स्तीर्णं पुनः संनह्योत्तरवेद्यां नीयमाने पूषा ते ग्रन्थिं ग्रन्थात्विति संनहनमन्त्रस्य बृहस्पतेर्मूर्ध्ना हरामीति हरणमन्त्रस्य च पूर्ववदावृत्तिरिति प्राप्ते,—प्रकृतौ लूनस्य बर्हिषो विहारदेशप्रापणार्थं यत्संनहनं

हरणं च तदर्थौ मन्त्रौ नत्वेतयोः सन्नहनहरणयोर्वेदिप्राप्त्यर्थयोरतो न मन्त्रावृत्तिरिति सिद्धान्तः ॥ २१ ॥

इति श्रीन्यायबिन्दौ द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## द्वादशाध्यायस्य द्वितीयः पादः ।

विहाराग्नेर्वैदिककर्ममात्रार्थत्वम् ॥ १ ॥

### विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥

गार्हपत्यादिः सामर्थ्याल्लौकिकवैदिकस्मार्तानां सर्वेषां कार्याणामङ्गमिति प्राप्ते,—गार्हपत्ये हवींषि श्रपयन्तीत्यादिवचनोक्तप्रयोजनैरेव निराकाङ्क्षाणां न लिङ्गेन सर्वार्थत्वं स्मार्तहोमा अप्यौपासने विहिता न गार्हपत्यादिग्राहका इति सिद्धान्तः ॥ १ ॥

सवनीयपशौ पुरोडाशस्य कर्तव्यत्वम् ॥ २ ॥

### सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ २ ॥

सवनीये पशावग्नीषोमीयपशोश्चोदकप्राप्तः पशुपुरोडाशो न कार्यः,तस्य सुषिरो ह वा एतर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो निरुप्यते अपिहित्या अच्छिद्रताया इति छिद्रापिधानार्थत्वावगमात्तस्य च सवनीयपुरोडाशैरेव सिद्धेरनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते अपिपिहित्या अच्छिद्रताया इति वचनात्। यदि तु ‘पुरोडाशेन माध्यंदिने सवने’ इति लिङ्गात्पशुपुरोडाशः कर्तव्यस्तर्हि सवनीयानां तस्य च विकल्पः, एकार्थत्वादिति प्राप्ते,—अच्छिद्रतावचनस्य स्तुत्यर्थत्वाद्देवतासंस्कारार्थं कर्तव्य एवेति सिद्धान्तः ॥ २ ॥

सवनीयपुरोडाशे हविष्कृदाह्वानाभावः ॥ ३ ॥

### हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वथा पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ३ ॥

हविष्कृदाह्वानस्याज्यौषधसान्नाय्यङ्गत्वमिति कृत्वा चिन्त्यते—तदा सवनीयपश्वर्थतयाऽऽहूता हविष्कृत्प्रसङ्गात्तन्मध्यपातिसवनीयपुरोडाशोपकारकत्वान्न पृथगाह्वातव्येति ॥ ३ ॥

तृतीयसवने हविष्कृदाह्वानस्य पुनरावृत्तिः ॥ ४ ॥

**पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याग्निनयोश्चापवृक्तत्वात् ॥ ४ ॥**

एवं सति तृतीयसवने सवनीयपशुपाकोत्तरं सवनीयपुरोडाशार्थत्वेन पुनर्हविष्कृदाह्वानं पक्के पशौ हविष्करणरूपकार्यसमाप्तेरिति प्राप्ते,— सहायार्थं तदाह्वानम् आहूतायाश्च पत्नीसंयाजानन्तरमुत्थानविधानान्न पुनराह्वानं हविष्कृदिति समाख्या तु हविष्करणस्य मुख्यत्वादिति सिद्धान्तः ॥ ४ ॥

निशि यज्ञेऽमावास्यातन्त्रम् ॥ ५ ॥

**निशि यज्ञे प्राकृतस्याप्रवृत्तिः प्रत्यक्षशिष्टत्वात् ॥ ५ ॥**

अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्, अमावास्यायां निशि यजेतेति च श्रुतं तत्र दर्शोपस्थित्यभावात्तत्प्रकरणाभावाच्च तत्तन्त्रोपजीवनासंभवात्स्वाङ्गयुक्तैव निशीष्टिः कार्येति प्राप्ते,—वाक्यप्रकरणाभ्यां दर्शानुपस्थितावपि कालवशेनैव तत्तन्त्रस्य मध्यपातात्तदुपजीवतीति युक्तमग्निप्रणयनव्रतोपायनादेः पुनः करणाशक्तेश्च । विकृत्यन्तराणि तु प्रकृत्यारम्भात्प्रागेवानुष्ठानसंभवान्न प्रासङ्गिकानीति भेद इति सिद्धान्तः ॥ ५ ॥

विकृतिष्वारम्भणीयानुष्ठानम् ॥ ६ ॥

**आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ ६ ॥**

सौर्यादिष्वारम्भणीया न स्यात् सकृत्करणेनैव कर्तृसंस्कारसिद्ध्या प्रकृतावनावृत्तिवद्विकृतावपि संस्कारानपवर्गेण कार्यसिद्धेरिति प्राप्ते,— अन्वारम्भणीयाया आरम्भार्थत्वात्तस्य च कर्मभेदेन भेदाद्विकृतौ सा कार्यैव क्रत्वेकत्वे तु निवृत्तिरिति सिद्धान्तः ॥ ६ ॥

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानम् ॥ ७ ॥

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ ७ ॥**

पञ्चदशरात्रेऽग्निष्टुत्प्रथममहः तत्र नाम्ना एकाहाग्निष्टुद्धर्माः, निर्देशादाग्नेयी सुब्रह्मण्या ततो ज्योतिरादित्र्यहे एकाहज्योतिरादिचोदकादैन्द्री सा अवशिष्टैकादशाहःसु द्वादशाहातिदेशादैन्द्र्येव, तत्रोपसत्कालीनसुब्रह्मण्यायां तन्त्रभूतायामनियमः मुख्यत्वाद्वाऽग्निष्टुद्धर्मानुग्रह इति प्राप्ते,—भूयोऽनुग्रहायैन्द्रीति भाष्यकृता सिद्धान्तितं, तदयुक्तम्, अन्यदैवत्यया अन्यदेव-

तायाः संस्कारासिद्धेर्भेदेनाह्वानस्यैव युक्तत्वात् अतो न तदुदाहरणं, किंतु अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकाम इति, तत्राग्नेयस्य धानानां चाग्नेयविकारत्वादविरोधः। ऐन्द्रस्य पुरोडाशस्य प्राजापत्यस्य दध्नश्च ऐन्द्राग्नसान्नाय्यविकारत्वाद्दर्शधर्मत्वं मधुघृतापां तूपांशुयाजविकारत्वात्पौर्णमासीधर्मकत्वं, तदत्र सहप्रयोगे वार्त्रघ्नवृधन्वन्मन्त्रयोराज्यभागयोरन्यतरानुष्ठानं मुख्यत्वाद्वैन्द्रदध्नोस्तद्धर्मानुग्रह इति प्राप्ते,—भूयसां मध्वादीनां वार्त्रघ्नानुग्रहाय तावेव कार्याविति सिद्धान्तः ॥ ७ ॥

समसंख्यानां धर्मविप्रतिषेधे प्रथमस्य धर्मानुष्ठानम् ॥ ८ ॥

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ ८ ॥

अध्वरकल्पायामाग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेतेति श्रुतं, तत्राद्यस्य द्वादशकपालत्वाद्दार्शिकैन्द्राग्नविकारत्वमाज्यस्य तूपांशुयाजविकारत्वमतः पूर्ववदाज्यभागमन्त्रविरोधे मुख्यानुग्रह इति सिद्धान्तः। पूर्वेण सहैकाधिकरण्यं त्वन्याय्यत्वात्परमतमेवेति ॥ ८ ॥

अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्यम् ॥ ९ ॥

अङ्गगुणविरोधे च तादर्थ्यात् ॥ ९ ॥

दीक्षणीयायाः सोमस्य च पर्वकालत्वं यदिष्ट्या पशुना सोमेनेत्यादिवचनात्, तत्र द्वयोस्तदसंभवान्मुख्यत्वेन दीक्षणीयानुग्रहप्राप्तौ,—प्रधानतयासोमाङ्गानुग्रह इति सिद्धान्तः ॥ ९ ॥

परिधौ विरोधियूपधर्माननुष्ठानम् ॥ १० ॥

यौप्यस्तु विरोधे न स्यान्मुख्यानन्तर्यात् ॥ १० ॥

परिधौ पशुं नियुञ्जीतेति वचनात्परिधिधर्मा यूपधर्माश्च संमार्जनादयः परिव्याणादयश्चाविरोधिनस्तत्र क्रियन्ते विरोधे तु यूपधर्मानुरोधः हविषा पशुना संबद्धत्वेन यूपस्य प्रधानप्रत्यासत्तेरिति प्राप्ते,—परिधित्वानुपमर्देन नियोजनविधानात्परिधिधर्मानुग्रह इति सिद्धान्तः ॥ १० ॥

सवनीयपशुपुरोडाशयोः पाशुकं तन्त्रम् ॥ ११ ॥

पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ११ ॥

सवनीयपशुः प्रातरारभ्य तृतीयसवने समाप्यते वपया प्रातःसवने पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवन इति अनुसवनं च सवनीयाः पुरोडाशाः। तत्र प्रातःसवनपुरोडाशानां पशोश्चाविशेषान्नैकस्य तन्त्रि-

त्वमन्यस्य च प्रसङ्गित्वम् । नच पशोस्तृतीयसवने समाप्तेस्तन्त्रित्वं पुरोडाशानां च प्रातःसवने समाप्तेः प्रसङ्गित्वमिति वाच्यम् । आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्यनुयाजोत्कर्षेण पुरोडाशानामपि तृतीयसवने समाप्तेरिति प्राप्ते,—पुरोडाशानां तन्त्रित्वे सवनीयपशौ मैत्रावरुणकर्तृकसूक्तवाकप्रैषस्याग्निमद्यहोतारमित्यादेः पाठोऽनर्थकः स्यात् तस्य पुरोडाशानङ्गत्वात् मैत्रावरुणाभावाच्च पुरोडाशानाम् । अतः पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते तदङ्गानामेव चानुयाजानामुत्कर्षः । तृतीयसवनसंबन्धस्याङ्गयागानुरोधेन प्राप्तौ विशेषमात्रविधौ लाघवात्तस्माद्दीर्घकालत्वात्पशोस्तन्मध्यपातेन पुरोडाशानामेव प्रसङ्गित्वमिति सिद्धान्तः ॥ ११ ॥

समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रोपादानम् ॥ १२ ॥

**अपूर्वं च विकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात्॥१२॥**

प्रकृतिविकृत्योरेकस्मिन्पर्वणि तन्त्रेण प्रयोगं कृत्वा चिन्त्यते । राक्षोघ्नी सामिधेनीत्यादिषु विरुद्धधर्मेषु प्रकृतिधर्मानुग्रहः तस्याः पूर्वं प्रवृत्तत्वेन तन्त्रित्वात् विकृतेस्तु प्रसङ्गित्वादिति प्राप्ते,—तथासति वैकृतविशेषविधीनामानर्थक्यात्प्रतिपर्व प्रयोगभेदेन प्रकृतेः पूर्वप्रवृत्तत्वाभावाच्च न तन्त्रित्वं, किंत्वागन्तुकाया विकृतेरेव वलवत्त्वाद्वैकृतमेव तन्त्रं प्रकृताविति सिद्धान्तः ॥ १२ ॥

आग्रयणे प्रसूनबर्हिषामेव ग्रहणम् ॥ १३ ॥

**अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि॥१३॥**

आग्रयणे ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि तत्र द्यावापृथिव्यै वैश्वदेविकपर्वगतद्यावापृथिव्यविकारत्वात्पुष्पितं बर्हिः प्राप्तमितरेषां तु बर्हिर्मात्रं तत्र मुख्यत्वाद्भूयस्त्वाच्चापुष्पितमेव बर्हिर्ग्राह्यमिति प्राप्ते,—पुष्पितवर्हिर्ग्रहणेऽप्यन्येषामवैगुण्यादपुष्पितग्रहणे द्यावापृथिवीयस्य वैगुण्यात्पुष्पितस्यैव नियमः यथा शिष्यस्य कांस्ये गुरूच्छिष्टभोजननियमानुरोधेन गुरोः कांस्यभोजननियमे न कश्चिद्विरोधस्तद्वदिति सिद्धान्तः १३

द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वम् ॥ १४ ॥

**तत्प्रवृत्त्या तन्त्रिनियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ १४ ॥**

एवं सत्यनेनैव लिङ्गेन द्यावापृथिवीयमेव तन्त्रमन्येषां प्रसङ्गित्वमतो विरुद्धधर्मेष्वपि द्यावापृथिवीयानुग्रह इति प्राप्ते,—अविरोधाद् द्यावापृथिवी-

यधर्मग्रहणमुक्तं न त्वेतावता द्यावापृथिव्यं तन्त्रमिति नियमः तस्मात्सर्वेषां तन्त्रित्वाद्विरोधे मुख्यभूयस्त्वाभ्यां निर्णय इति सिद्धान्तः ॥ १४ ॥

इति श्रीन्यायबिन्दौ द्वादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## द्वादशाध्यायस्य तृतीयः पादः।

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयः ॥ १ ॥

**विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् १॥**

अष्टरात्रे विश्वजित्प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित्। तत्र विश्वजिति ऐकाहिकविश्वजिद्धर्मो वत्सत्वचं परिधत्त इति। इतरेषु तु ज्योतिष्टोमादहतं वासः। तत्र भूयोनुग्रहायाहतं वास एवेति प्राप्ते,—कौपीनाच्छादने वत्सत्वचोऽयोग्यत्वात्तत्राहतं वासः, उपरिधारणे वत्सत्वगिति भिन्नकार्यत्वात्समुच्चय इति सिद्धान्तः ॥ १ ॥

अनुनिर्वाप्यापुरोडाशानां पुरोडाशस्यैव तन्त्रित्वम् ॥ २ ॥

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ २ ॥**

पशुपुरोडाशानन्तरं निर्वाप्याणां देवसुवां हविषां बहुत्वात्स्वधर्मत्वमिति प्राप्ते,—पुरोडाशतन्त्रमध्यविधानाद्विस्पष्टं प्रसङ्गित्वं तेषां पुरोडाशस्य च तन्त्रित्वमतः पुरोडाशस्य स्वधर्मतेति सिद्धान्तः ॥ २ ॥

आघारयोरूर्ध्वत्वऋजुत्वादीनां समुच्चयः ॥ ३ ॥

**एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ३ ॥**

आघारे ऊर्ध्वत्वसन्ततत्वादीनां सह संभवात्समुच्चय एव न विकल्प इति सिद्धान्तः ॥ ३ ॥

प्रयोजनैक्ये गुणानां विकल्पः ॥ ४ ॥

**एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ ४ ॥**

व्रीहियवयोर्यागावृत्त्या परस्परमिश्रणेन वा समुच्चयप्राप्तौ अङ्गानुरोधेन प्रधानावृत्तेरयोगान्निरपेक्षविधानेन च मिश्रणायोगादगत्या विकल्प एवेति सिद्धान्तः ॥ ४ ॥

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पः ॥ ५ ॥

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वेषु निर्घातः ॥ ५ ॥**

दर्शपूर्णमासातिपातादिरूपे पृथगेकैकस्मिन्वैगुण्ये निमित्ते तत्समाधानार्थतया विधीयमानानां पथिकृद्वैश्वानरेष्टयादीनामदृष्टार्थत्वात्समुच्चयप्राप्तौ,—तत्तद्वाक्येन निरपेक्षत्वेन विधानाद्विकल्प इति सिद्धान्तः ॥५॥

नैमित्तिकप्रायश्चित्तानां समुच्चयः ॥ ६ ॥

**समुच्चयस्त्वदोषनिर्घातार्थेषु ॥ ६ ॥**

अदोषनिर्घातार्थानां तु भिन्ने जुहोतीत्यादिनैमित्तिकानां समुच्चय इति प्रत्युदाहरणम् ॥ ६ ॥

कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगः ॥ ७ ॥

**मन्त्राणां कर्मसंयोगे स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ७**

अनध्यायवर्जनाद्यध्येयमन्त्रधर्माणामुच्चारणार्थत्वात्कर्मकालेऽपि प्राप्तौ,—निर्विघ्नाध्ययनसमाप्त्यर्थत्वान्न कर्मणि तत्प्रसङ्गः । अध्ययनप्रकरणगतत्वेन कर्मप्रकरणाभावादिति सिद्धान्तः ॥ ७ ॥

कर्मणि मन्त्रकाण्डस्वरेणैव मन्त्रोच्चारणम् ॥ ८ ॥

**भाषास्वरोपदेशेष्वैरवत्प्रवचनप्रतिषेधः स्यात् ॥ ८ ॥**

मन्त्रकाण्डे स्वरान्तरेण पठिताः ब्राह्मणे च स्वरान्तरेणोपात्ता ये मन्त्रास्तेषां वाचनिकेन ब्राह्मणस्वरेणैव प्रयोग इति प्राप्तौ,—ब्राह्मणस्य मन्त्रस्वरूपमात्रविनियोगपरत्वं स्वरान्तरोपादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्याविच्छेदार्थमतो मन्त्रकाण्डस्वरेणैव कर्मणि प्रयोग इति सिद्धान्तः॥८॥

ब्राह्मणोत्पन्नमन्त्राणां ब्राह्मणस्वरेण प्रयोगः ॥ ९ ॥

**तन्न्यायत्वाददृष्टेऽप्येवम् ॥ ९ ॥**

ब्राह्मणे एवोत्पन्नानां मन्त्राणां न ब्राह्मणस्वरेण प्रयोगः, ब्राह्मणस्य मन्त्रविनियोगमात्रपरत्वादिति प्राप्ते,—यथाविज्ञातस्वरूपस्यैव विनियुक्तस्य प्रयोगाद्ब्राह्मणस्वरेणैव प्रयोग इति सिद्धान्तः ॥ ९ ॥

करणमन्त्राणामन्ते पदार्थानुष्ठानम् ॥ १० ॥

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ १० ॥**

करणमन्त्रेषु समवेतार्थाभिधायिपदानन्तरमेव कर्मानुष्ठानं तावतैव स्मरणस्य जातत्वादिति प्राप्ते,—सकलमन्त्रविनियोगात्तत्कृतं स्मरणं कर्माङ्गमतः सर्वान्ते कर्मादेः सन्निपातः, अन्यथा स्मरणस्य नाशे वैगुण्यापत्तेरिति सिद्धान्तः ॥ १० ॥

वसोर्धारायां मन्त्रान्ते कर्मसंनिपातः ॥ ११ ॥

**सन्ततवचनाद्धाराणामादिसंयोगः ॥ ११ ॥**

सन्ततां वसोर्धारां जुहोतीत्यत्र साहित्यरूपसंततत्वस्य मन्त्रकर्मसंबन्धित्वात्तयोर्यौगपद्येन प्रयोग इति प्राप्ते,—सन्ततत्वस्याविच्छेदरूपत्वान्न साहित्यापेक्षा। तदपेक्षायामपि द्वादशैतानि जुहोतीति संख्यया कर्मभेदात्तेषामेवाविच्छेदः संततशब्दार्थः। जुहोतीति शब्दोपात्तत्वान्मन्त्रस्यानुपादानाच्च, अतोऽत्रापि पूर्ववदेवेति सिद्धान्तः ॥ ११ ॥

आघारेपि मन्त्रान्ते कर्म ॥ १२ ॥

**आघारे च दीर्घधारत्वात् ॥ १२ ॥**

एवमाघारेऽपि सन्ततमाघारयतीति घृतधाराया अविच्छेद एवार्थ इति न मन्त्रसाहित्यमर्थ इति सिद्धान्तः ॥ १२ ॥

एककार्यार्थानां मन्त्राणां विकल्पः ॥ १३ ॥

**मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ १३ ॥**

एकार्थानां करणमन्त्राणां भगो वां विभजत्वित्यादीनां विकल्प इति स्पष्टम् ॥ १३ ॥

संख्यायुक्तमन्त्राणां समुच्चयः ॥ १४ ॥

**संख्याविहितेषु समुच्चयोऽसंनिपातित्वात् ॥ १४ ॥**

चतुर्भिरभ्रिमादत्त इत्यादौ तु संख्यावशात्समुच्चयः। तेन विना कर्माङ्गचतुःसंख्याया असंभवात्तत्र मन्त्रत्रयस्य संस्कारद्वारेण करणत्वं चरमस्य तु साक्षादिति वचनसामर्थ्यान्निश्चीयते इति सिद्धान्तः ॥१४॥

उरुप्रथस्वेत्यादीनां निरपेक्षसाधनत्वावगमाद्विकल्पः ॥ १५ ॥

**ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् ॥ १५ ॥**

ब्राह्मणविहितानां वाचनिकत्वात्समुच्चयः, लिङ्गादेव प्राप्तिसंभवाद्वा समुच्चयार्थमेव वचनमतः समुच्चय इति प्राप्ते,—वाक्याल्लिङ्गादपि निरपेक्षत्वावगमात्संख्याया अश्रवणाच्च न समुच्चयः। वचनं त्वर्थवादाद्यर्थमिति सिद्धान्तः ॥ १५ ॥

हौत्राख्यमन्त्राणां समुच्चयः ॥ १६ ॥

**हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ १६ ॥**

उच्छ्रयस्व वनस्पत इत्यादयोऽध्वर्युक्रियमाणयूपोच्छ्रयानुवादिनो हौत्राः पठ्यमाना एकार्थत्वाद्विकल्पन्त इति प्राप्ते,—अध्वर्युणा क्रियमाणस्य कर्मणः

स्मृत्यविच्छेदार्थत्वात्तस्य चात्रापेक्षितत्वात्सर्वेषां समुच्चयः, करणानां तु कर्मारम्भार्थस्मृतिजनकत्वाद्विकल्प इति भेद इति सिद्धान्तः ॥१६॥

इति श्रीन्यायबिन्दौ द्वादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## द्वादशाध्यायस्य चतुर्थः पादः ।

---

जपस्तुत्याशीरभिधानानां समुच्चयः ॥ १ ॥

**जपाश्चाकर्मसंयुक्तास्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥**

जपस्तुत्याशीरूपाणामन्येषां चादृष्टार्थानां समुच्चय इति सिद्धान्तः ॥१॥

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पः ॥ २ ॥

**याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ २ ॥**

ऐन्द्राबार्हस्पत्ये कर्मणि इदं वामास्ये हविः, अयं वां परिषिच्यत इत्येकं याज्यानुवाक्यायुग्मम्, अस्मे इन्द्राबृहस्पती, बृहस्पतिर्नः परिपात्वित्यपरं तयोः समुच्चयो याज्यानुवाक्यावदिति प्राप्ते,—देवतास्मरणार्थत्वाद्विकल्प एव पुरोनुवाक्यासमाख्यवशात्तु अनुवाक्यायाः समुच्चय इति भेद इति सिद्धान्तः ॥ २ ॥

सोमक्रयसाधनानां समुच्चयः ॥ ३ ॥

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ३ ॥**

एकहायन्यादिदशद्रव्यविशिष्टा दश क्रयाः उत्पत्तिशिष्टद्रव्यावरुद्धे द्रव्यान्तरमात्रविधेरयोगात्, तेषां चैकसोमप्राप्त्यर्थत्वाद्विकल्पे प्राप्ते,—समुच्चये सत्यानतिसौकर्यात्तदनुरोधेन समुच्चय एव व्रीहियवादौ तु नैवमिति वैषम्यमिति सिद्धान्तः ॥ ३ ॥

उपयजनादीनां प्रतिपत्तिकर्मणां समुच्चयः ॥ ४ ॥

**संस्कारे च तत्प्रधानत्वात् ॥ ४ ॥**

पशौ गुदेनोपयजतीति श्रुतं, पशुगणे अनेकगुदसन्निपाते गुदसाधनकयागस्यैकेनैव सिद्धेर्विकल्पप्राप्तौ प्रयाजशेषवद्गुदप्रतिपत्त्यर्थत्वात्समुच्चय इति सिद्धान्तः ॥ ४ ॥

आधाने संख्यावतीनां दक्षिणानां विकल्पः ॥ ५ ॥

संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ५ ॥

एका देया षड् देयेत्यादीनामाधानदक्षिणानामानतिसौकर्यात्क्रत्यवत्समुच्चयप्राप्तौ संख्याश्रुतिविरोधाद्विकल्पः समुच्चये श्रुतसंख्याहानिप्रसङ्गादिति सिद्धान्तः ॥ ५ ॥

पशुगणे जाघनीनां विकल्पः ॥ ६ ॥

द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे
नियमः प्रधानत्वात् ॥ ६ ॥

जाघन्या पत्नीः संयाजयन्तीति प्रकृतावाज्येन सह वैकल्पिकी जाघनी पशौ प्राप्ता । तत्र पुनर्जाघन्या पत्नीः संयाजयन्तीति श्रुतं; ततः पशुगणे चोदकेन प्राप्तानां बह्वीनां जाघनीनां समुच्चयः दर्शपूर्णमासयोर्गुणत्वेऽपि पशौ प्रतिपत्त्यपेक्षत्वेन प्राधान्यात् । एतदर्थमेव पुनर्वचनमिति प्राप्ते,—पुनर्वचनस्याज्येन वैकल्पिक्या नियमार्थत्वान्न प्रतिपत्त्यर्थत्वमतः पशुगणे विकल्प एवेति सिद्धान्तः ॥ ६ ॥

उखायां काम्येन नित्याग्नेर्विकल्पः ॥ ७ ॥

उखायां काम्यनित्ययोः समुच्चयो नियोगे कामदर्शनात् ॥ ७ ॥

अग्नावुखायां स्थाप्यमग्निं प्रकृत्य श्रुतं वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्याद्भ्राष्ट्रादन्नाद्यकामस्येति । तत्र नित्यकाम्ययोः समुच्चयो नित्यस्य होमार्थत्वात्, काम्यस्याधानमात्रश्रवणेन होमार्थत्वाभावादिति प्राप्ते,—होमार्थाधानमाश्रित्याग्न्यन्तरमात्रस्य फले विधिः, अतः काम्येन नित्यस्य बाध इति सिद्धान्तः ॥ ७ ॥

वैकारिकाग्नेराहवनीयत्वाभावः ॥ ८ ॥

स आहवनीयः स्यादाहुतिसंयोगात् ॥ ८ ॥

सोऽयं काम्योऽप्याहवनीयः आहूयतेऽस्मिन्निति व्युत्पत्तेः । तेन आहवनीयधर्मा गतश्रीधारणादयोऽत्र कर्तव्या इति प्राप्ते,—आधानजन्यसंस्कारविशेषस्याहवनीयपदार्थत्वान्नात्र तद्धर्मा इति सिद्धान्तः ॥ ८ ॥

वैकारिकाग्नेराधानिकसंस्काराभावः ॥ ९ ॥

तस्मिन्संस्कारकर्माविशिष्टत्वात् ॥ ९ ॥

एवं सति तत्राधानादिसंस्काराः कार्याः होमार्थत्वात्तेषामिति प्राप्ते,—

होमसाधनत्वेऽपि वृक्षादाहृतस्य मन्थनादिसंस्काराशक्तेर्नात्र संस्कारा इति सिद्धान्तः ॥ ९ ॥

नित्यस्योख्यस्याग्नेर्धारणम् ॥ १० ॥

**नित्यधारणे विकल्पो नह्यकस्मात्प्रतिषेधः स्यात् ॥ १० ॥**

उख्यस्य विकल्पेन नित्यधारणं न प्रतिसंदध्यादिति धारणनिषेधस्य प्राप्तिपूर्वकत्वेन धारणविध्यनुमानादिति प्राप्ते,—आहवनीयस्थापन्नत्वात्तद्वद्गतश्रियो धारणमुख्येऽपि प्राप्तमनेन प्रतिषिध्यत इति नाश्रुतविध्यनुमानं तस्माद्धार्य एवोख्य इति सिद्धान्तः ॥ १० ॥

सत्रेषु औदुम्बरीसंमानादीनामेकयजमानकर्तृकत्वम् ॥ ११ ॥

**परार्थान्येको यजमानगणे ॥ ११ ॥**

अनेकयजमानकेषु यजमानगुणकान्यौदुम्बरीसंमानादीन्येकेनैव केनचित्कार्याणीति सिद्धान्तः ॥ ११ ॥

तत्रापि गृहपतिकर्तृकत्वम् ॥ १२ ॥

**मुख्यो वा विप्रतिषेधात् ॥ १२ ॥**

सत्रेषु तु गृहपतिरेवैकः कुर्यात् इतरेषामार्त्विज्यावरोधादिति सिद्धान्तः ॥ २२ ॥

तत्रैवाञ्जनादीनां सर्वकर्तृकत्वम् ॥ १३ ॥

**सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ १३ ॥**

सत्रे यजमानसंस्कारा अञ्जनादयो गृहपतेरेव समाख्याविशेषात् । गृहशब्देन कर्मोच्यते तस्य पतिर्गृहपतिः । सर्वेषां तथात्वेऽपि कस्यचिदियं समाख्या फलभूयस्त्वनिमित्ता । तच्च संस्काराधिक्यादिति तस्यैव संस्कारो नेतरेषामिति प्राप्ते,—फलिसंस्काराः सर्वेषां कार्यास्तदभावे फलानुदयात् । गृहपतिसमाख्या तु केवलयाजमानकरणात् । फलभूयस्त्वं तु स हि भूयिष्ठामृद्धिमृध्नोतीति वचनात्, नतु संस्काराधिक्यात् । यत्र तु आर्त्विज्ययाजमानयोर्विरोधस्तत्रार्त्विज्यमेव कुर्युः कर्मणः प्राधान्यात्कर्तुर्गुणत्वात्तद्गुणत्वाच्च संस्काराणां ये यजमानास्त ऋत्विज इति चार्त्विज्यस्य प्रत्यक्षविहितत्वाद्याजमानस्य चातिदेशिकत्वादिति सिद्धान्तः ॥ १३ ॥

ब्राह्मणस्यैवार्त्विज्येऽधिकारः ॥ १४ ॥

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ १४ ॥**

आर्त्विज्यं च त्रयाणामपि वर्णानां विद्वत्त्वाविशेषात् याजनं ब्राह्मणस्यैवेति स्मृत्युक्तेस्तु नियमः पुरुषार्थ इति न तदतिक्रमे क्रतुवैगुण्यमिति प्राप्ते,—यज्ञं व्याख्यास्याम इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति यज्ञसूत्रकारस्मरणं क्रत्वर्थत्वेनैव नियमबोधकम् । अत एव रामायणे—'क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥ कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः' इति सुरादेवताभूताः ऋषयश्चर्त्विग्भूता इत्यर्थः । देवताया अभोक्तृत्वात्क्रतुवैगुण्य एव तात्पर्यं, तथा 'राजयाजकयाज्यस्य विनश्यति यथा हविः' इत्यपि वचनं क्रतुवैगुण्यबोधकमेव । एवं वैदिकलिङ्गान्यपि ब्राह्मणानामिदं हविरित्येवमादीनि द्रष्टव्यानि । तस्माद्ब्राह्मणानामेवार्त्विज्यमिति सिद्धम् ॥ १४ ॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजभट्टवैद्यनाथकृते न्यायबिन्दौ द्वादशाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥ १२ ॥

---

समाप्तमिदं पूर्वमीमांसादर्शनम् ।



# 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १ श्रीमद्भगवद्गीता प्रथमो गुच्छः Bhagavat-Geeta with 7 commentaries—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य—जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य—रामानुजभाष्य—पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी—नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... | ६–०–० | ०–८–० |
| २ श्रीमद्भगवद्गीता द्वितीयो गुच्छः Bhagavat-Geeta with 8 other commentaries—निम्वार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—'तत्त्वप्रकाशिका,' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका,' श्रीशङ्करानन्दप्रणीता—'तात्पर्यबोधिनी,' श्रीधरस्वामिकृता—'सुबोधिनी,' श्रीसदानन्दविरचितः—'भावप्रकाशः,' श्रीधनपतिसूरिविरचिता—'भाष्योत्कर्षदीपिका,' दैवज्ञपण्डितश्रीसूर्यविरचिता—'परमार्थप्रपा,' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः—'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहिता । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिपतेति । मू. रू. | १०–०–० | ०–१५–० |
| ३ उत्तरगीता Uttara-Geeta with a commentary—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ... ... ... ... | ०–३–० | ०–०–६ |
| ४ श्रीमद्वाल्मीकिरामायणम् । Valmiki Ramayana with 3 well-known commentaries, सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिवन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य | | |

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायण-तिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च सप्तभिः खण्डैः समापयिष्यामः । | | |
| बालकाण्डम् । प्रथमं खण्डम् **Bal Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... | ३–०–० | ०–५–० |
| अयोध्याकाण्डम् । द्वितीयखण्डम् **Ayodhya Kanda,**—उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. | ५–०–० | ०–७–० |
| अरण्यकाण्डम् । तृतीयखण्डम् । **Aranya Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. | २–१२–० | ०–४–० |
| किष्किन्धाकाण्डम् । चतुर्थ खण्डम् **Kishkindha Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ... ... | २–१०–० | ०–४–० |
| ९ स्तोत्रमुक्ताहारः–**Stotra-muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वममुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति । मूल्यम् रू. | ०–८–० | ०–२–० |
| ६ संस्कारमयूखः—**Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया | | |

च भृशं दुर्बोधो विपरीतबोधकश्चासीत् । अस्माभिस्तु मूल्यं मार्गव्ययः
ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य
पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमा-
यासमास्थाय मुद्रितः । मू. रू. ... ... ०–१२–० ०–१–०

७ आचारमयूखः—Achara Mayukha
नीलकंठभट्टकृतः । प्रातःस्मरणादिशयनान्तस्याह्निकक्रि-
याकलापस्य निरूपणपरो ग्रन्थः । मूल्यम् ... ०–८–० ०–१–०

८ मनुस्मृतिः—Manu Smriti कुल्लूकभट्टकृत-
टीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृ-
तिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमको-
शेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशो-
धिता च । मू. रू. ... ... ... १–८–० ०–३–०

९ विदुरनीतिः–Vidura-Niti with a commentary संस्कृतटीकोपेता नीतिशास्त्रा-
भ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ०–४–० ०–१–०

१० वेदान्तरहस्यम्–Vedanta Rahasya
वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसि-
द्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽति-
सरला प्रौढा च । मूल्यम् रू.... ... ... ०–१–० ०–०–६

११ विशिष्टाद्वैतमतविजयवादः—Vishisht-advaita-Mata-Vijaya-Vada
नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षे-
पान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्था-
पितम् । मूल्यम् रू. ... ... ... ०–१–० ०–६–०

१२ रघुवंशमहाकाव्यम्—Raghuvamsha With Mallinatha's commentary श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्या-
ख्यटीकासहितम् । मू. रू. ... ... ... ०–१०–० ०–३–०

१३ रघुवंशमहाकाव्यं—Only First Five Sargas of the Same with Commentary मल्लिनाथकृ-
तटीकोपेतम् । सर्गाः १–५ मूल्यम् रू. ... ... ०–४–० ०–१–०

१४ कुमारसंभवं महाकाव्यम्—Kumar Sambhav with 3 known commentaries कविवरश्रीकालिदासविरचितमिदं

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... | १–४–० | ०–२–० |
| १५ कारिकावली सिद्धान्तमुक्तावलीसहिता—**Karikavalee with Siddhanta-Muktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू.... ... ... ... ... | ०–७–० | ०–१–३ |
| १६ वैशेषिकदर्शनम्—**Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत–वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—विवृति–चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम् । मू. रू.... ... ... ... ... | २–०–० | ०–३–० |
| १७ वादार्थसंग्रहः (प्रथमो भागः)—**Vadartha Samgraha** First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ... ... ... | ०–६–० | ०–०–६ |
| १८ वादार्थसंग्रहः (द्वितीयोभागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, | | |

जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एव- कारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रू.... मूल्यं ०–६–० मार्गव्ययः ०–०–६

१९ वादार्थसंग्रहः ( तृतीयोभागः )—Third Part अत्र कृष्णाचार्यकृत 'वादसुधाकरः' मौनिश्रीकृष्णकृत 'लघुविभक्त्यर्थनिर्णयः' रामकिशोरकृत–'शाब्द-बोधप्रकाशिका' चेति शाब्दिकानां त्रयो ग्रन्थाः सन्ति । मू. रू. ... ... ... ... ०–८–० ०–१–०

२० महाभागवतम्—Maha Bhagavata देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि। प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः । सार्धपञ्चसाहस्री संहितेयम् मू. रू... ... ... २–०–० ०–३–०

२१ तैत्तिरीयोपनिषत्—Taittiriya-Upanishat श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मू. रू.... ... ... ... ... १–०–० ०–२–०

२२ दशरूपकम्—Dasha Rupaka नाट्यशास्त्रं धनञ्जयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च । मू. रू. १–०–० ०–२–०

२३ ब्रह्मसूत्रवृत्तिः–Brahma Sutra Vritti अद्वैतमञ्जरी । भगवत्पाद(आद्यशंकराचार्य)शिष्यकृता । मू. रू. .. ... ... ... ०–१२–० ०–२–०

२४ चन्द्रालोकः—Chandraloka with a commentary श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्ववैद्यनाथ (बाळंभट्ट) विरचितरमाख्यव्याख्यासहितः मू. रू. ... ... ०–८–० ०–१–०

२५ महाभारतविराटपर्व—Mahabharata-Virata Parvan with eight commentaries नीलकण्ठकृतभारतभावदीप–अर्जुनमिश्रकृतदीपिका—चतुर्भुजमिश्रकृतप्रकाश—सर्व-

| | | मूल्यं | मार्गव्ययः |
|---|---|---|---|
| | ज्ञनारायणकृतभारतार्थप्रकाश—विमलबोधकृतदुर्घटार्थप्रकाशिनी—रामकृष्णकृतविरोधार्थभञ्जनी—विषमपदविवरण—वादिराजतीर्थविरचितलक्षाभरणेत्यष्टटीकोपेतं विपुलपाठभेदसहितं च। मू. रू. ... ... ... | ३—८—० | ०—६—० |
| २६ | चन्द्रकान्त Chandrakanta (Hindi) (वेदान्त ज्ञानका मुखग्रन्थ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराती' पत्रके मुख्य–आद्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें दैदीप्यमान प्रबोधरत्नभाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... ... ... | २—८—० | ०—४—० |
| २७ | युक्तिप्रकाश—Yukti Prakasha (Hindi) विचारसागरका कर्ता साधु श्रीनिश्चलदासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तका ३९ सिद्धान्त बहुत अच्छीतरहसे सिद्ध किये गये है. निश्चलदासकी वाणी सब जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ बहुत उपयुक्त है. पक्की जिल्द और अच्छा कागज. ... ... | १—०—० | ०—२—० |

नोंध—व्ही. पी. खरच जूदा पडेगा.

'गुजराती' मुद्रणालयाधिपतिः।

कोट सर्कल सासून बिल्डिंग—मुंबई.

